व्यं त्परं च वर्जयित्वा । र्णरीति स्वं । प्राक्षिः । चौष्टिः । दैत्यः । कौमारः । उदित्– चोः कुः । प्युना प्वुः । अभाव्य इति किं ? "स्यदादेरः" इत्यत्र आकारस्य ग्रहणं नास्ति भाव्यत्वात् ।

आदेशः प्रत्ययश्चैव कटमंतो हि लक्षणि ।
भाव्यशब्देन पंचैते कथ्यंते देवनंदिभिः ॥

अत्पर इति किं ? भिमोऽत एम् । धर्मैः । दयाभिरित्यत्र एम् न भवति ।

**संस्थानक्रियं स्वं** ॥ ४ ॥ समाने स्थानक्रिये यस्य वर्णस्य स स्वसंज्ञो भवति । अ अ अ उदात्तोऽनुदात्तः स्वरितश्च ह्रस्वाश्च । एवं दीर्घौ ज्ञातव्यौ । इत्यवर्णस्याष्टादश भेदाः परस्परं स्वा भवंति । तथेवर्णादीनामपि । एचां द्वादशभेदाः ह्रस्वाभावात् । यवला द्विधा–ह्रस्वाश्च । रेफोष्मणां स्वा न संति । वर्ग्यो वर्ग्येण स्वं । लोकाग्रमित्यादि । स्थानग्रहणं किं ? कचटतपानां मा भूत् । तप्तौ । क्रियाग्रहणं किं ? इचुयशानां मा भूत् । अकश्च्योततिः । स्वप्रदेशाः "स्वेऽको दीः" इत्येवमादयः ।

**आकालोऽच् प्रदीपः** ॥ ५ ॥ अ आ आ ३ इत्येवं कालोऽच् प्रदीपसंज्ञो भवति । दधि । गौरी । एहि जिनदत्त ३ । हलचां संघातनिवृत्त्यर्थमच्ग्रहणं । प्रतक्ष्य । तितउच्छत्रं । अन्यथात्र तुग्तुग्विकल्पौ स्यातां । प्रदीपप्रदेशाः "प्रो नपि" इत्येवमादयः ।

**अचश्च** ॥ ६ ॥ अचः स्थाने प्रदीपसंज्ञका भवंति । अतिश्रि । स्तृयते । आव्रज जिनदत्ता ३ । अच इति किं ? मुवाक् कुलं । भिद्यते । धर्मवाऽऽरत् । चकारः संज्ञाविधौ नियमार्थः । द्यौः, पंथाः, यः, सः ।

**नासिक्यो ङः** ॥ ७ ॥ नासिकायां भवो वर्णो ङसंज्ञो भवति । ञमङणनाः । शांतः दांतः । नासिक्य इति किं ? तप्तः तप्तवान् । ङप्रदेशाः "ङस्य झल्क्व्योः क्डिति" इत्यादयः ।

**हलोऽनंतराः स्फः** ॥ ८ ॥ हलोऽनंतराः अज्भिरव्यवहिताः स्फसंज्ञका भवंति । धर्मे-रमो । इन्द्रे-नदगः । हल इति किं ? तितउः । अनंतरा इति किं ? पनसं । शाकं । स्फप्रदेशाः "स्फे रुः" इत्येवमादयः ।

**अधु मृत्** ॥ ९ ॥ धुवर्जितमर्थवच्छब्दरूपं मृत्संज्ञं भवति । डित्थः । डवित्थः । शुक्लः । अध्विति किं ? अहन् । मृत्प्रदेशाः "ङ्याप्मृदः" इत्येवमादयः

**कृद्वृत्साः** ॥ १० ॥ कृदंतं हृदंतं ससंज्ञकं च मृत्संज्ञकं भवति । ज्ञाता । द्रष्टा । प्राजापत्यः । जिनधर्मः । नियमोऽयं त्यांतानां कृद्वृतोरेवेति । इह मा भूत्– अभवन् । अर्थवत्पदसंघातानां ससंज्ञस्यैव मृत्संज्ञा न वाक्यस्य, साधुधर्मं ब्रूते ।

**प्रो नपि** ॥ ११ ॥ नपि वर्तमानस्य मृदः प्रो भवति । अतिरि । अतिवधु कुलं । नतभ्रु मुखं । नपीति किं ? राजकुमारी ।

**गोण्या मेये** ॥ १२ ॥ गोण्याः प्रो भवति मेयेऽर्थे । गोणीमात्रं गोणिः । मेय इति कि ? गोणी ।

**स्त्रीगोर्नीचः** ॥ १३ ॥ न्यग्भूतस्य स्त्र्यंतस्य गोशब्दांतस्य च मृदः प्रो भवति । अतिखट्वः । निष्कौशाम्बिः । निर्दयः । चित्रगुः । स्त्रीगोरिति किं ? अतिश्रीः । नीच इति किं ? नक्षत्रमाला । सुगौः ।

\+ **नांशीयसो वे** ॥ १४ ॥ अंशिलक्षणसविधेरीयसश्च यः स्त्र्यस्तदंतस्य नीचो बसे प्रो न भवति । पूर्वशाला । अर्द्धपिप्पली । बह्व्यः श्रेयस्योऽस्य स बहुश्रेयसी जिनः । बस इति किं ? निःश्रेयसिः ।

* **हृदुप्यसूचीगोण्योरुप्** ॥ १५ ॥ हृदुपि सति स्त्र्यस्य नीचः उप् भवति सूचीगोण्यौ विहाय । पंचेन्द्राण्यो देवताः अस्य पचेंद्रः । दशभिः शष्कुलीभिः क्रीतः दशशष्कुलः । आमलक्याः अवयवः फलं

१ वर्णोत्पत्तिप्रदेशः स्थानं । अकुहविसर्जनीयजिह्वामूलीयानां कंठः । हविसर्जनीययोरुरः । कोर्जिह्वामूलीयस्य जिह्वामूलं । इ ए ऐ चुयशानां तालु । उ ओ औ पुपध्मानीयानामोष्ठौ । वस्य दंतोष्ठं । ऋटुरषाणां मूर्धा । लृतुलसानां दंताः । नासिकानुस्वारस्य । क्रिया करण प्रयत्नः । स्पृष्टं करणं स्पर्शानां । ईषत्स्पृष्टं यणां । विवृतमचां । विवृततरमेदोताः । ऐदौतोर्विवृततमं । अवर्णस्यातिविवृततम । संवृतमकारस्य । ईषद्विवृतं शषसहानां ।

वर्गेष्वाद्या द्वितीयाश्च शषसा अल्पघोषकाः ।
द्वितीयतुर्यवर्णाः स्युर्महाप्राणाः हसंयुताः ॥१॥

\+ एवं चिह्नितसूत्राणां स्थाने कृतान्यभयनंदिविरचितमहावृत्तौ पाणिनीयवद्वार्त्तिकानि ।

आमलकं । बकुलं । बदरं । इदिति किं ? गार्गीपुत्रः । उपीति किं ? गार्गी त्वं । असूर्चीगोण्योरिति किं ? पंचभिः सूचीभिः क्रीतः पंचसूचिः । दशगोणिः ।

आदैगैप् ॥ १६ ॥ आदैचो वर्णाः ऐप्संज्ञा भवंति । नाडायनः । रैमयं । नौमयं । ऐप्प्रदेशाः "मृजेरैप्" इत्येवमादयः ।

अदेङेप् ॥ १७ ॥ अदेङो वर्णा एप्संज्ञका भवंति । सर्ता । नेता । भोक्ता । एप्प्रदेशाः "मिदेरेप्" इत्यादयः ।

इकस्तौ ॥ १८ ॥ तावैबेपौ इक एव स्थाने स्तः । सार्वेम्मि- अनैर्षीत् । गागर्याः-नयति । इक इति किं ? आदेज्झलां मा भूत् । यानं । ग्लायति । उंभिता । तौग्रहणं संज्ञाविधौ नियमार्थं । मथाः । यः ।

न धुग्वेङगे ॥ १९ ॥ धोरेकदेशस्य स्वनिमित्तेऽगे ऐबेपौ न स्तः । लोलुवः । पोपुवः । मरीमृजः । देयः । धुग्वे इति किं ? लूञ्-लविता । अग इति किं ? रोरवीति । इक इति किं ? रागः ।

ङ्गिति ॥ २० ॥ गिति किति ङिति च परे ऐबेपौ न स्तः । भूतः । जिष्णुः । मृष्टं । चितं । चिनुतः । मृष्टः ।

इदूदेद्द्विर्दिः ॥ २१ ॥ इदूदेदंता यो द्विः स दिसंज्ञो भवति । मुनी इमौ । साधू एतौ । द्वे अत्र । इदूदेदिति किं ? वृक्षाविमौ । द्विरिति किं ? बध्वर्थः । दिप्रदेशाः "देः" इत्यादयः ।

मः ॥ २२ ॥ दकारस्य स्थाने यः कृतो मकारस्तस्मात्परौ ईदूतौ दिसंज्ञौ भवतः । अमी आसते । अमू अत्र । द इति किं ? शम्यत्र । म इति किं ? नेऽत्र ।

* न्यजनाङ् ॥ १३ ॥ निसंज्ञोऽच आङ्वर्जितो दिसंज्ञो भवति । अ अपेहि । इ इंद्र पश्य । उ उत्तिष्ठ । नांनि किं ? चकारात्र । अनाङिति किं ? आ उष्णं ओष्णं । आ इहि-एहि । आ उदकांतात्-ओदकांतात् । आ आर्येभ्यः-आर्येभ्योऽस्य यशोमतं महाकलंकदेवस्य । ङित्करणं किं ? आ एवमनुमन्यसे । आ एवं किल तत् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

ओत् ॥ १४ ॥ ओदंतो निर्दिसंज्ञो भवति । अहो इदं । उताहो एवं ।

कौ वेतौ ॥ १५ ॥ किनिमित्तः ओकारः इति शब्दे परतः वा दिसंज्ञो भवति । साधो इति । साधविति । काविति किं ? गवित्ययमाह । इतौ इति किं ? पटोऽत्र ।

उञः ॥ १६ ॥ उञो वा दिसंज्ञा भवति इतौ परतः । उ इति विति ।

ऊँ ॥ १७ ॥ उञः ऊँ इत्ययमादेशो भवति इतौ परतः स च दिसंज्ञो भवति । ऊँ इति ।

दाधा भ्वपित् ॥ २८ ॥ दा धा इत्येवं रूपा धवः भुसंज्ञका भवंति पितौ मुक्त्वा । प्रणिदाता । प्रणिदयते । प्रणिददाति । प्रणिधाति । प्रणिधयति । विधीयते । अपिदधाति किं ? दातं बर्हिः । अवदातं मुखं । भुप्रदेशाः "भुस्थोरिः" इत्येवमादयः ।

क्तक्तवतू तः ॥ १९ ॥ क्तः क्तवतुश्च तसंज्ञौ भवतः । कृतः । कृतवान् । कारितः । कारितवान् । तप्रदेशाः "ते मेटि" आदयः ।

संज्ञा खुः ॥ ३० ॥ संज्ञाशब्दवाच्योऽर्थः खुसंज्ञो भवति । खुप्रदेशाः "वा खोः" इत्येवमादयः ।

भावकर्म किः ॥ ३१ ॥ भावकर्मणी किसंज्ञे स्तः । किप्रदेशाः "कौ" इत्येवमादयः ।

* श्यनपमुट् धं ॥ ३२ ॥ शि अनपमुट् च धसंज्ञं भवति । कुंडानि तिष्ठंति, पश्य वा । राजा । राजानौ । राजानः । राजानं । राजानौ । श्यनप्मुडिति किं ? सामनी । राज्ञः पश्य । धप्रदेशाः "धेऽकौ" इत्येवमादयः ।

+ स्यिः संख्या ॥ ३३ ॥ संख्याशब्दः स्यिसंज्ञो भवति । पंचधा । पंचकृत्यः । स्यिप्रदेशाः "स्यिविभाग्धे धा" इत्येवमादयः ।

+ बहुगणं भेदे ॥ ३४ ॥ बहुगणशब्दौ भेदार्थे स्यिसंज्ञौ भवतः । बहुकः । गणकः । बहुधा ।

गणधा। भेद इति किं? वैपुल्ये संघे च मा भूत्। बहुः भूपः। गवां गणः।

+ **कसेऽर्द्धपर्द्धं** ॥३५॥ कथिश्री मविश्री चाद्धप- र्द्धशब्दः स्यिसंज्ञा भवति। अद्धपर्द्धेन क्रीतं अद्धपर्द्ध- कं। अद्धपर्द्धशूर्पं। कस इति किं? माभूद् भादौ।

+ **डस्त्वर्द्धमाक्** ॥ ३६ ॥ अर्धपूर्वो डडंतः कस- विश्री स्यिसंज्ञो भवति। अर्द्धपंचमैः क्रीतं अर्द्धपं- चमकं। अर्द्धपंचमशूर्पं।

+ **वतुः** ॥ ३७ ॥ वत्वन्तः स्यिसंज्ञो भवति। इयत्कः। कियद्धा। एतावत्कृत्वः। यावत्कः। तावत्कः।

+**डतिः** ॥ ३८ ॥ डतिरन्तः स्यिसंज्ञो भव- ति। कतिकः। यतिधा। ततिकृत्वः।

* **ष्णांता चेत्** ॥ ३९ ॥ षकारनकारांता डत्यंता च संख्या इत्संज्ञा भवति। षट्। पंच। कति संति। अंतग्रहणमुपदेशार्थं। तेनाष्टानामिति भवति। न शतानीत्यादौ। इत्प्रदेशाः "उविकः" इत्येवमादयः।

* **झिः सर्वादिः** ॥ ४० ॥ सर्वादयः शब्दाः झिसंज्ञा भवंति। सर्वे। विश्वे। अन्ये। सर्वेषां। सर्वस्यै। सर्वस्मै। यस्मै। तस्मै। झिप्रदेशाः "झेः स्मै" इत्यादयः।

+ **समं सर्वयुक्ते** ॥४१॥ समशब्दः सर्वयुक्ता- र्थयोः झिसंज्ञो भवति। समस्मिन्। सर्वयुक्त इति किं? समं देशे वसति।

* **पूर्वपरावरदक्षिणोत्तरापराधराण्यखौ व्यव- स्थायां** ॥ ४२ ॥ पूर्वादीनि अखौ व्यवस्थायां वर्तमानानि झिसंज्ञानि भवंति। पूर्वस्मै। परस्मै। अवरस्मै। दक्षिणेषां। उत्तरस्मै। अपरेषां। अधर- स्मै। अखाविति किं? उत्तराणां कुरूणां। व्यवस्था- यामिति किं? दाक्षिणाय गायकाय देहि। प्रावीण्य- मत्र प्रतीयते। न तु दिग्देशकालकृतोऽवधिनियमः।

+ **स्वमज्ञातिधनाख्यायां** ॥ ४३ ॥ स्वमित्ये- तद्रूपं अज्ञातिधनाख्यायां झिसंज्ञं भवति। यत् स्वस्मै रोचते तत् स्वस्मै ददाति। यदात्मने रोचते तदात्मी- याय ददातीत्यर्थः। अज्ञातिधनाख्यायामिति किं? स्वाय ददाति। स्वाय क्रियते। ज्ञातये धनाय वेत्य- र्थः। आख्याग्रहणं किं? ज्ञातिधनपर्यायस्य स्वशब्द- स्य निषेधोऽन्यस्य तु मा भूत्। स्वस्मै पुत्राय। स्वस्मै गवे।

+ **बहिर्योगोपसंव्यानेऽपुर्यंतरं** ॥४४॥ बहि- र्योगे उपसंव्याने चांतरं झिसंज्ञं भवति पुरं विमुच्य। अंतरस्मै वनाय देहि। बहिष्टेन युक्ताय बाह्याय बाह्ये- नाभ्यंतरायेत्यर्थः। अंतरस्मै वस्त्राय। उपसंव्याना- योत्तरीयायोपसंवीयमानाय वा परिधानायेत्यर्थः। बहिर्योगोपसंव्यान इति किं? अस्मिन्नंतरे शीतान्यु- दकानि, मध्य इत्यर्थः। अपुरीति किं? अंतरायां पुरि वसति। प्राकारात् बाह्यायामभ्यंतरायां वेत्यर्थः।

* **पूर्वादिरत्र ङ्यस्योर्वा** ॥ ४५ ॥ पूर्वादयो नवाकारांता ङिङस्योः परतः झिसंज्ञा वा भवंति। पूर्वस्मिन्, पूर्वे। पूर्वस्मात्, पूर्वात्। परस्मिन्, परे। परस्मात्, परात्। अवरस्मिन्, अवरे। अवरस्मात्, अवरात्। दक्षिणस्मिन्, दक्षिणे। दक्षिणस्मात्, द- क्षिणात्। उत्तरस्मिन्, उत्तरे। उत्तरस्मात्, उत्तरात्। अपरस्मिन्, अपरे। अपरस्मात्, अपरा- त्। अधरस्मिन्, अधरे। अधरस्मात्, अधरात्। स्वस्मिन्, स्वे। स्वस्मात्, स्वात्। अंतरस्मिन्, अंतरे। अंतरस्मात्, अंतरात्। अदिति किं? पूर्व- स्यां। पूर्वस्याः। ङिङस्योराश्रयं कार्यं विकल्प्यते अक्तु भवत्येव। पूर्वकस्मिन्, पूर्वके।

* **जसि** ॥ ४६ ॥ पूर्वादयो जसि झिसंज्ञा वा भवंति। पूर्वे, पूर्वाः। परे, पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः। स्वे, स्वाः। अंतरे, अंतराः।

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाः** ॥४७॥ प्रथमादयो जसि वा झिसंज्ञा भवंति। प्रथमे, प्रथ- माः। चरमे, चरमाः। द्वितये, द्वितयाः। द्वये, द्वयाः। अल्पे, अल्पाः। अर्द्धे, अर्द्धाः। कतिपये, कतिपयाः। नेमे, नेमाः।

*त्रिर्द्वंद्वे ॥ ४८ ॥ द्वंद्वे से सर्वादिर्वा जसि त्रिसंज्ञो भवति । कतरकतमे । कतरकतमाः । इतरान्यतरे । इतरान्यतराः ।

*न ॥ ४९ ॥ सर्वादिर्द्वंद्वे से त्रिसंज्ञो न भवति । कतरकतमाय । पूर्वपरात् । कतरकतमानां ।

*बसे ॥ ५० ॥ सर्वादिर्बसे त्रिसंज्ञो न भवति । प्रियसर्वाय । त्र्यन्याय । त्र्यन्यात् । बग्रहणं किं ? परमसर्वस्मै । सग्रहणं किं ? आनिर्देशिके बे निषेधो मा भूत् । एकैकस्मै देहि ।

भासे ॥ ५१ ॥ भालक्षणे से सर्वादिः त्रिसंज्ञो न भवति । मासपूर्वाय । संवत्सरावराय । से वर्तमाने पुन: सग्रहणं भासार्थे वाक्येऽपि निषेधार्थं । मासेन पूर्वाय ।

*वा दिग्बे ॥ ५२ ॥ दिग्लक्षणे बसे सर्वादिर्वा त्रिसंज्ञो भवति । दक्षिणपूर्वस्यै । दक्षिणपूर्वायै । उत्तरपूर्वासां । उत्तरपूर्वाणां ।

*तीयो ङिति ॥ ५३ ॥ तीयन्तो ङिति त्रिसंज्ञो वा भवति । द्वितीयस्मै । द्वितीयाय । तृतीयस्मै । तृतीयाय । ङितीति किं ? द्वितीयानां ।

*नास्थानेऽन्तेऽलः ॥ ५४ ॥ नान्तस्य स्थाने विधिरुच्यमानोऽन्ते वर्तमानस्यालः स्थाने भवति । त्यदादेरः - स्यः । स्थानग्रहणं स्वम्बाम्यादिनिरासार्थं । अंत इत्यादिमध्यनिवृत्त्यर्थं । अल सर्वादेशनिवृत्त्यर्थं ।

ङिन् ॥ ५५ ॥ ङिदादेशोऽन्ते वर्तमानस्यालः स्थाने भवति । युष्मदस्मदोऽकञ् वाऽत्मकौ— यौष्माकीणः । आस्माकीनः । नियमोऽयं—ङिदेवानेकाल् अंतस्य स्थानेऽनोऽन्यः नानिर्दिष्टस्य सर्वस्य स्थाने भवति । ब्रूञो वच्-वक्ता ।

*स्वासन्नः ॥ ५६ ॥ इह स्थानमन्यस्थानमस्य प्रसंगे स्थानार्थगुणप्रमाणैर्यथास्वमासन्न एव विधिर्भवति । स्थानतः— दंडाग्रं । माधूदितं । अर्थतः— वतंडी चासौ युवतिश्च वातंडययुवतिः । गुणतः— पाकः । त्यागः । प्रमाणतः— अमुष्मै । अमूभ्याम् ॥ चेता स्तोतेत्यत्र स्थानानुवृत्तेर्न प्रमाणतोऽकारः । सुष्ठ्वासन्न इति किं ? वाग्घसति ।

+युजां योगे ॥ ५७ ॥ युजां संबंधिनो यो विधिः स योगे संबंध एव भवति । श्वशुराद्यः—श्वशुर्यः । श्वशुर इति कस्यचिन्नाम तस्मात् श्वशुरस्यापत्यं "अत इञ्" एव । श्वाशुरिः ।

रंतोऽणुः ॥ ५८ ॥ ऋवर्णस्य स्थाने अण् शिष्यमाणः रपरो भवति । किरति । पितुः । अणिति किं ? मातापितरौ । उरिति किं ? गेयं ।

परस्यादेः ॥ ५९ ॥ कानिर्देशेन परस्य कार्यं शिष्यमाणं तस्यादेरलः स्थाने भवति । द्व्यंतर्गेरीदपोनात्—द्वीपः । ईदासः—आसीनोऽधीते ।

शित्सर्वस्य ॥६०॥ शिदादेशः सर्वस्य स्थाने भवति । जसः शी- के । जश्शसोः शिः- धनानि संति ।

टिदादिः ॥ ६१ ॥ टित् आगमः स तानिर्दिष्टस्यादिर्भवति । वलोदीट् - भविता ।

किदंतः ॥ ६२ ॥ कित् आगमः स तानिर्दिष्टस्यांतो भवति । पिति कृति तुक्—धर्मवित् ।

परोऽचो मित् ॥ ६३ ॥ मित् आगमः स तानिर्दिष्टस्याचोऽन्त्यात् परो भवति । इदितोनुम्- वंदे वृषभेश्वरं ।

*स्पर्द्धे ॥ ६४ ॥ द्वयोरन्यार्थयोस्तुल्यबलयोरेकत्र प्राप्तौ यः संघर्षः स स्पर्द्धस्तस्मिन् परं कार्यं भवति । सुपि दीः—देवाभ्यां । बहौ झल्येत्—देवेषु । देवेभ्यः—इत्यत्र द्वितयं प्राप्तं परमेत्वमेव ।

*स्थानीवानल्विधौ ॥ ६५ ॥ स्थानीव भवत्यादेशः । धुगुकृदृघ्नसुप्मिङ्गादादेशाः ध्वादिवद्भवंति, अस्तेर्भूः-भविता । तृच् सिद्धः । गुवद् ग्वादेशः । श्रयाणां । गोदीत्वं । कृदन्कृदादेशः । प्रहृत्य । क्त्वालुक् । द्रुवद् द्वादेशः । आक्षिकः । भुत्संज्ञा । सुप्वत् सुवादेशः । धर्माय । सुपि दीत्वं । मिङ्वन्मिङादेशः । अभूवन् । मिङन्तात्पदं । गवङादेशः । अचिनुतं । ङित्वादेगुणनिषेधः । पदवत्पदादेशः

धर्म्मो वो बर्द्धतां। पदत्वाद्दित्वं। अनल्विधाविति किं? अलः स्थाने विधौ—पंथाः। सः। पथित्यदादेशौ सुखे कर्तव्ये स्थानीव न भवतः। कः इष्टः।

* परेऽचः प्राच: ॥ ६६ ॥ परनिमित्तकोऽजादेशः पूर्वविधौ कर्तव्ये स्थानीव भवति। पटुमाचष्ट पटयति। कथयति। अवधीत्। पर इति किं? वैयाघ्रपद्यः। पादस्य खं पद्भावे क्रियमाणे न स्थानीव भवति। अच इति किं? अभिमन्य। क्यखं तुकि (तुगागमे) न स्थानीव भवति। प्राच इति किं? नैधेयः। आजल्लक्षणं ढणि क्रियमाणं आत्वं न स्थानीव भवति।

* न द्विपदांतवरेयखकिज्यम्कादेः ॥ ६७ ॥ द्वित्व पदांत वर ई यख कि त्रि अम् इत्येषां कु आदिशब्दोक्त-दी-अनुस्वार-चर्त्व-परस्वत्व इत्येषां च विधौ कर्तव्ये अजादेशः स्थानीव न भवति। दध्यत्र। धस्य द्वित्वे कर्तव्ये यणादेशः स्थानिवन्न भवति। निशंति। विशंति। यणि कर्तव्ये श्नमः खं स्थानिवन्न भवति। यायावरः। पश्चात् इटि चाज्वमित्यातः खे कर्तव्ये यङोऽतः खमगनिमित्तं वरविधौ न स्थानीव भवति। बदर्याः फलं बदरं। कथामिन्यखे ङीत्यस्याप् न स्थानीव भवति। कंडूतिः। यखे कर्तव्ये अतःखं क्तिनिमित्तं न स्थानीव भवति। देवयतेर्द्धयूः। ऊठि कर्तव्ये क्विनिमित्त णिखं न स्थानीव भवति। अशामि। शामं शमं। णिजंतात् णौ अमि च परतो दीत्वे कर्तव्ये णिखं न स्थानीव भवति। पाक्। विचूनिमित्त णिखं कुत्वे कर्तव्ये न स्थानीव भवति। प्रतिदीव्ना। दीत्वे कर्तव्ये अनोखं न स्थानीव भवति। शिषति। नकारस्यानुस्वारे कर्तव्येऽखं न स्थानीव भवति। जक्षतुः। जक्षुः। उखं चर्त्वे कर्तव्ये न स्थानीव भवति। पिण्ढि। शिण्ढि। अनुस्वारस्य परस्वत्वे कर्तव्येऽखं न स्थानीव भवति।

द्वित्वेऽचि ॥ ६८ ॥ द्वित्वनिमित्तेऽच्यजादेशः द्वित्वे कर्तव्ये स्थानिवद्भवति। ण्युकात्वखयणयाद्यादेशाः प्रयोजनं। आटिटत्। जग्मतुः। पपुः। ण्युकात्वस्य स्थानिवत्वादेकाचो द्वित्वं। चक्रुः। निनयिथ। निनाय। लुलविथ। लुलाव। यणयाद्यादेशानां स्थानिवत्त्वात् क्रुंनैलौलौ द्वित्वं। द्वित्वनिमित्त इति किं? सुस्यूषति। नायमूठ् द्वित्वनिमित्तं। अचीति किं? जेघ्रीयते। यङि परत ईत्वं न स्थानिवत्।

* ईप्केत्यासन्नप्राक्परयोः ॥ ६९ ॥ इतिरर्थपरः। ईबर्थः कार्यश्च यत्र निर्दिश्यते तत्र यथाक्रमं पूर्वस्य परस्यासन्नस्य कार्यं भवति। अचोक्को यण्— दध्योदनं। थादत्— दधति। आसन्नग्रहणं किं? धर्मविदत्र। चिकीर्षति।

नाशः खं ॥ ७० ॥ नाशशब्दवाच्योऽर्थः खसंज्ञो भवति। रूढिः। "ढो ढि खं" इत्यादयः प्रदेशाः।

उबुजुश् ॥ ७१ ॥ तस्यैव नाशस्य उप् उब् उश् इत्येताः संज्ञाः भवंति। स्नौति। जुहोति। पंचालाः। उबुजुश् प्रदेशाः "ह्वादेरुजुप्" "जनपद उश्" इत्यादयः।

त्यखे त्याश्रयं ॥ ७२ ॥ त्यखे कृतेऽपि त्याश्रितं कार्यं भवति। सुम्मिङ्णित्वानि प्रयोजनं। सर्ववित्। सोः खेऽपि पदसंज्ञा। अधोक्। "हल्ङ्याब्भ्यः सुसिप्त्यनच्" इति तिपः खेऽपि पदसंज्ञायांभष्घत्वभष्चर्त्वानि स्युः। अग्निचित्। क्विपः खेऽपि तुक्। पापचीति। यङः खेऽपि द्वित्वादि कार्यं। भाव्यते। णेः खेऽप्यैब् भवति।

नोमता गोः ॥ ७३ ॥ उबुजुशामुरस्यास्तीति उमान्। तेन लुप्ते त्ये गोस्त्याश्रयं कार्यं न भवति। मृष्टः। जुहुतः। शब्राश्रयावैबगौ न भवतः। गोरिति किं? परीपृच्छीति। यङाश्रयौ द्वित्वयणिकौ स्तः।

+ रेऽहः ॥ ७४ ॥ रेफे कर्तव्येऽहः उमता वचनेन त्यखे त्याश्रयं कार्यं न भवति। अहर्ददाति।

+ वृत्त्यंतस्य ॥ ७५ ॥ समासांतस्य उमता त्यखे त्याश्रयं कार्यं नास्ति। सुवाचौ। परमगिरौ। त्याश्रये हि पदत्वे कुत्वादिः प्रसज्येत। वृत्तिग्रहणं किं? तव शर्म। अंतग्रहणं किं? वाक्त्वक्स्रुचः।

* टयंत्याद्यचः ॥ ७६ ॥ अचां मध्ये योऽन्त्यो-ऽच् तदादि शब्दरूपं टिसंज्ञं भवति । धर्मविद्–अत्रेच्छब्दः । तत्त्वभुद्–अत्राच्छब्दः । आताम्–आम्शब्दः । टिप्रदेशाः "टिद्टेरेः" इत्यादयः ।

उपांत्यात्तुक् ॥ ७७ ॥ अलामंतस्य समीपोऽल् उक्संज्ञो भवति । पच्–इत्यकारः । पाचकः । भिद्–इतीकारः । भेत्ता । व्यवहितनांत्यनिवृत्त्यर्थमुपांत्यग्रहणं । उक्प्रदेशाः "उक्तोऽतः" इत्यादयः ।

येनाल्विधिस्तदंताद्योः ॥ ७८ ॥ येनाचा हला वा यो विधिर्विधीयते स तदंतस्य अलि च यो विधिः स तदादौ भवति । योऽचोऽय्वास्तुः । सरोहैलः । जेयं । शिक्षा । हल्ह्नुधभ्रुवोऽर्चायुन्योः । चिक्षि-यतुः । चिक्षियुः ।

+ न सत्येऽनुगिति ॥ ७९ ॥ सविधौ त्यविधौ च तदतविधिर्नास्ति उगित्कार्यं विहाय । क परमश्रितः । इप्सो न भवति । सौत्रनाडि । नडादेः फण न भवति । अनुगिर्नीति किं ? भवती । अतिभवती ।

+ यस्य तदादेः ॥ ८० ॥ यस्मात् प्रकृतिविशेषात् यस्यो विधीयते स तदादेः समुदायस्य भवति । मातृभोगीणः । समुदायस्य सुबंतस्यैकपदत्वात् णत्वं । पुत्रकाम्यति । स्यपः काम्यो नाधिकारान्न भवति । महांतं पुत्रमिच्छति ।

+ स्त्री न्यक् ॥ ८१ ॥ यस्मात् स्त्रीत्यस्तदादेर्न्यङ् अप्रधानमेव भवति । अतिकारीषगंध्यबंधुः । बंधौ परे ष्यस्य प्रधानभूत ईश न भवति । न्यङिति किं ? परमकारीषगंधीबंधुः ।

+ कृत् सतिकारकस्यापि ॥ ८२ ॥ कृत्संज्ञस्यः सतिसंज्ञस्यापि सकारकस्यापि तदादेः समुदायस्य ग्राहको भवति । अपिशब्दात् केवलस्यापि । उदकं विशीर्णं । अवतप्तेनकुलस्थितं । भस्मनिहुतं ।

* यस्याच्वाद्येदुः ॥ ८३ ॥ यस्य शब्दस्याचां मध्ये आद्यच् एप् स दुसंज्ञो भवति । शालीयः । एतिकायनीयः । औपगवीयः । अश्वाति हल्सामर्थ्यवक्षार्थं । आदिग्रहणं किं ? सभासंनयने जातः सभासंनयनः । एविति किं ? दत्तस्यायं दात्तः । दुप्रदेशाः "दोस्छः" इत्यादयः ।

+ देश एवेङ् शैषिके ॥ ८४ ॥ यस्य शब्दस्य देशे एव वर्तमानस्य अचामाद्यच् एङ् स दुसंज्ञो भवति शैषिके त्ये कर्तव्ये । सैपुरिकी । सैपुरीका । ठञ्ठिठौ । भोजकटीयः । देशे किं ? दैवनंदिनं ।

* प्राग्देशे ॥ ८५ ॥ पूर्वदेशे वर्तमानस्य यस्य शब्दस्याचामाद्यच् एङ् स दुसंज्ञो भवति शैषिके त्ये कर्तव्ये । एणीपचनीयः । गोनर्दीयः ।

त्यदादिः ॥ ८६ ॥ त्यदादयो दुसंज्ञकाः भवंति । त्यदीयं । तदीयं । किमीयं ।

* वा म्बोः ॥ ८७ ॥ खोर्मो दुसंज्ञा स्यात् । देवनंदीयं । दैवनंदिनं । पद्मनंदीयं । पाद्मनंदिनं ।

* तसस्सात्त्राशस्कृत्वस्सुच्वद्धाम्क्त्वामृतुम्सुम्भिङ्भत्यन्यस्वारादयो झिः ॥८८॥ तत् तस् सात् त्रा शस् कृत्वस् सुच् वत् धा आम् क्त्वा अम् तुम् इत्येतदंताः सुम्भिङ्प्रतिरूपाः तिसंज्ञाः अन्यच्च प्रधानभूताः स्वरादयश्च झिसंज्ञका भवंति । तदिति प्रत्याहारः । "कायास्तसिः" इत्यारभ्य आ "एधात्" तकारेण । तत् द्वेधा । तस्–पीलुमूलतः । सात् –भस्मसात् । त्रा–राजत्रा वसति । शस्–बहुशः । कृत्वस्–शतकृत्वः । सुच्–द्विः, त्रिः । वत्–मुनिवत् वृत्तं । धा–बहुधा । आम–इहांचक्रे । किंतमां । किंतरां । क्त्वा–कृत्वा । अम्–भोजं भोजं । स्वादुंकारं । तुम्–कर्तुं । सुम्भिङाभ–रात्रौ । मात्रायां । अस्ति । स्वस्ति । ति–अदःकृत्य । अन्यस्वरादि–स्वः तिष्ठति । स्वः पश्यति । परमोच्चैः । अन्यगिति किं ? अत्युच्चैर्मौ । अत्युच्चैसः । झिप्रदेशाः "झेः" इत्यादयः ।

* गाङ्कुटादयञ्णि ङिद्वत् ॥ ८९ ॥ गाङ्कुटादीनां च अञ्णिति त्ये परतः ङितीव कार्यं भवति । अध्यगीष्ट । अध्यगीषातां । कुटिता । कुटितुं । कुटितव्यं । कुटित्वा । पुटिता । पुटितुं । पुटितव्यं । पुटित्वा । "अञ्णि" इति किं ? उत्कोटकः । उत्कोटः । उत्कोटयति ।

* इटि विजः ॥ ९० ॥ विजेर्धोरिडादौ त्ये ङिद्वत् भवति । उद्विजिता । उद्विजितव्यं । इटीति किं ? उद्वेगः ।

वोर्णोः ॥ ९१ ॥ ऊर्णोतेरिडादौ स्ये ङिद्वद् वा स्यात् । प्रोर्णविता । प्रोर्णुविता ।

* गेऽपि ॥ ९२ ॥ पिद्वर्जिते गे ङिद्वद् भवति । जाग्रति । मृजंति । ग इति किं ? जागरिता । मार्ष्टा । अपीति किं ? जागर्ति । मार्ष्टि ।

* लिटींध्यस्फात् किद्वत् ॥ ९३ ॥ इंधेरन्त्यस्माच्च ध्रोरस्फांतात् अपिति लिटि किद्वद् भवति । समीधे । समिधाते । निन्युः । निन्युः । ममृजतुः । ममृजुः । लिटीति किं ? इंधिता । नेता । अस्फादिति किं ? दध्वंसे । किन्करणं किं ? ईजतुः । ईजुः ।

+ स्वंजेर्वा ॥ ९४ ॥ स्वंजेर्लिटि किद्वत् कार्यं वा स्यात् । परिषस्वंजे । परिषस्वजे ।

मृडमृदगुधकुषक्लिशवदवसः क्त्व ॥ ९५ ॥ मृडादीनां क्त्वान्ये परतः किद्वद् कार्यं भवति । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । उदित्वा । उषित्वा । नियमार्थोऽयं योगः । एषामेव सेट्क्त्वान्ये किद्वत् । देवित्वा । मेषित्वा । वर्तित्वा । वर्द्धित्वा ।

क्लिशः ॥ ९६ ॥ क्लिशः क्त्व किद्वद् भवति । क्लिशित्वा ।

* रुदविदमुषग्रहस्वपप्रच्छां सनि च ॥९७॥ रुदादीनां सनि क्त्व च परे किद्वद् स्यात् । रुरुदिषति । रुदित्वा । विविदिषति । विदित्वा । मुमुषिषति । मुषित्वा । जिघृक्षति । गृहीत्वा । सुषुप्सति । सुप्त्वा । पिपृच्छिषति । पृष्ट्वा ।

* सीकः ॥ ९८ ॥ इगंतस्य धोः सकारादौ सनि परतः किद्वद् भवति । चिचीषति । रुरूषति । तितीर्षति । सीति किं ? शिशयिषते । इक इति किं ? पिपासति ।

* हलि ॥ ९९ ॥ सकारादौ सनि यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । बिभित्सति । बुभुत्सते । विवृत्सति । इक इति किं ? विवप्सति ।

* सिलौ दे ॥ १०० ॥ सकारादौ दपरे सिल्ये लिङि च यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । अभित्त । अबुद्ध । भित्सीष्ट । भुत्सीष्ट । सिलाविति किं ? भेत्स्यते । द इति किं ? अद्राक्षीत् । हलीति किं ? अचेष्ट ।

ऋः ॥ १०१ ॥ ऋवर्णांतस्य धोः सिलौ दे परे किद्वद् भवति । अहृत । आस्तीर्ष्ट । हृषीष्ट । आस्तीर्षीष्ट ।

गमो वा ॥ १०२ ॥ गमः सादौ सिलौ दे वा किद्वद् भवति । समगत । समगंस्त । संगसीष्ट । संगंसीष्ट ।

* यमः सौ स्वीकृतौ ॥ १०३ ॥ यमः स्वीकृतौ दारपरिग्रहे सादौ सिल्ये दे वा किद्वद् स्यात् । उपायंस्त भार्या । साविति किं ? उपायंसीष्ट । स्वीकृताविति किं ? आयंस्त पादौ ।

* सूचने ॥ १०४ ॥ यमः सूचने प्रकाशने सादौ सौ दे किद्वद् कार्यं भवति । उदायत । उदायसातां ।

* घ्नः ॥१०५॥ हंतेः सादौ दे परे सौ किद्वद् भवति । आहत । आहसातां । आहसत ।

भुस्थोरिः ॥ १०६ ॥ भुसंज्ञकानां तिष्ठतेश्च सादौ सौ दे इत्त्वं भवति किद्वच्च । अदित । अधित । प्रास्थित । भुस्थोरिति किं ? व्यत्यदास्त ।

* सेट्ते पूङ्शीङ्डीङ्स्विन्मिदक्ष्विदधृषो न १०७ पूङादीनां सेटि तसंज्ञे परे किद्वद् कार्यं न भवति । पवितः । पवितवान् । शयितः । शयितवान् । डयितः । डयितवान् । प्रस्वेदितः । प्रस्वेदितवान् । प्रमेदितः । प्रमेदितवान् । प्रक्ष्वेदितः । प्रक्ष्वेदितवान् । प्रधर्षितः । प्रधर्षितवान् । सेड्ग्रहणं किं ? पूतः । पूतवान् । मिन्नः । मिन्नवान् ।

मृषः स्वार्थे ॥ १०८ ॥ मृषः स्वार्थे तितिक्षायां सेट्ते किद्वद् कार्यं न भवति । मर्षितः । स्वार्थे इति किं ? अपमृषितं वाक्यमाह ।

वोदुङो भावारंभे शपः ॥ १०९ ॥ उदुङो धोः शपविकरणात् भावे आरंभे च सेट्ते किद्वद् कार्यं वा न भवति । द्युतितं । द्योतितमनेन प्रद्युतितः । प्रद्योतितः । "उदुङः" इति किं ? विदितमनेन । प्रविदितः । भावारंभ इति किं ? रुचितः कार्षापणः । शप इति किं ? गुधितमनेन । प्रगुधितः ।

* नोङ्थफवंचिलुंच्यृतितृषमृषकृशः क्त्व ॥ ११० ॥ नकारांकोः थकारफकारयोः धोः वंच्या-

दीनां च सेटि क्त्वायां किद्वद् वा भवति । ग्रथित्वा । ग्रंथित्वा । श्रथित्वा । श्रंथित्वा । गुफित्वा । गुंफित्वा । वचित्वा । वंचित्वा । लुचित्वा । लुंचित्वा । ऋतित्वा । अर्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । नोङ्ग्रहणं किं ? कोथित्वा । गोफित्वा । थग्रहणं किं ? खंभित्वा । क्त्वीति किं ? ग्रथितः ।

● **व्युडोऽन्तो हलः सनक्त्वोः ॥ १११ ॥** उकारेकाराङ्गः धातोरवकारान्तस्य हलादेः सेटि सनि क्त्वायां च किद्वद् वा स्यात् । दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । व्युड इति किं ? विवर्तिषते । वर्तित्वा । अव इति किं ? सिसेविषते । सेवित्वा । हलादेरिति किं ? एषिषिषति । एषित्वा । सेटीति किं ? बुभुक्षते । भुक्त्वा ।

**युक्तवद्युशि लिंगसंख्ये ॥ ११२ ॥** उशि युक्त इव लिंगसंख्ये भवतः । प्रत्ययार्थेन युक्तत्वात् प्रकृत्यर्थो युक्त इत्युच्यते । पंचालानां निवासो जनपदः पंचालाः । अंगाः । वंगाः । कलिंगाः । कुरवः । उशीति किं ? आमलकं फलं । लिंगसंख्ये इति किं ? बदर्या अदूरभवो बदरी ग्रामः । तस्य वनं बदरीवनं ।

+**योगेऽव बहो: ॥ ११३ ॥** स युक्तस्यैव बहु-विषयस्य युक्तवद्युशि लिंगसंख्ये स्तः । मथुराश्च पंचालाश्च मथुरापंचालाः । योगेति किं ? पंचालमथुरे । बहोरिति किं ? गोदमथुराः ।

× **जंबूखल्तिकादिषु ते ॥ ११४॥** जंब्वादिषु खल्तिकादिषु च यथासंख्यं ते लिंगसंख्ये युक्तवद्युशि भवतः । जम्ब्वा अवयवो जंबूः । जम्बी । जंब्वः फलानि । द्राक्षाः फलानि । मल्लिकाः पुष्पाणि । खल्तिकस्य पर्वतस्यादूरभवानि खल्तिकं वनानि ।

+**गुणानामजातेः ॥ ११५ ॥** गुणानां विशेषणवाचिनां जातेरन्यस्य विशेष्यस्य लिंगसंख्ये स्तः । गुणश्चतुर्धा । मृद्कृद्धृत्मभेदात् । शुक्लं वस्त्रं । शुक्लः पटः । शुक्ला शाटी । कृतं वस्त्रं । कृतः पटः । कृता शाटी । माथुरं कुलं । माथुरः पुमान् । माथुरी स्त्री । निर्मथुरं कुलं । निर्मथुरः पुमान् । निर्मथुरी स्त्री । गुणानामिति किं ? बदरी वृक्षः । "अजातेः" इति किं ? पंचालाः जनपदः ।

× **न नृषि ॥ ११६ ॥** नरि मनुष्येऽर्थे उशि गुणानां लिंगसंख्ये न स्तः । चंचेव मनुष्याः चंचाः अभिरूपः । नृग्रहणं किं ? पंचालाः रमणीयाः । बहन्नाः । बह्वपापकाः । बहुक्षीरघृताः । बहुमाल्यफलाः । उशीति किं ? पट्वी नारी ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां प्रथमस्याध्यायस्य प्रथमः पादः ।

---

## प्रथमाध्याये द्वितीयः पादः ।

---

**भूवादयो धुः ॥ १ ॥** भू इत्येवमादयः शब्दाः धुसंज्ञा भवन्ति । भू एधँ स्पर्द्धँ गाधृ । भवति । एधते । स्पर्द्धते । गाधते । धुप्रदेशाः "धोर्यङ्" इत्येवमादयः ।

**अकर्मको धिः ॥ २ ॥** अकर्मको यो धुः स धिसंज्ञो भवति । अविद्यमानकर्मकोऽविवक्षितकर्मकोऽप्यकर्मकः । धिप्रदेशाः "धेः" इत्येवमादयः ।

**अप्रयोगीत् ॥ ३ ॥** शास्त्रे कार्यार्थमुपदिश्यमानो वर्णः प्रयोगे न श्रूयते यः स इत्संज्ञो भवति । अण्--अच् हल् त्रिभिदा -ङे-णचल्त्रिकः । इत्प्रदेशाः "सान्मनादिः" इत्येवमादयः ।

**यथासंख्यं समाः ॥ ४ ॥** समाः शिष्यमाणाः यथासंख्यं भवन्ति । मिदधमथतमोऽसंतता । प्रथमसंख्यस्य मिदः प्रथमसंख्योऽसमित्यादि ।

**स्वरितेनाधिकारः ॥ ५ ॥** स्वरितेनाचार्यप्रतिज्ञया अधिकारो वेदितव्यः । "स्यः" "परः" इत्यादि ।

● **ङिदितो दः ॥ ६ ॥** ङकारेतः एकारेतश्च धोर्दो भवति । शीङ्—शेते । इङ्—अधीते । एधँ—एधते । आसि—आस्ते ।

**क्ते ॥ ७ ॥** भावेऽर्थे दो भवति । भूयते भवता । आस्यते भवता । क्रियते कटः । ह्रियते भारः ।

१ भूवादीनां वकारोऽयं लक्षणार्थः प्रयुज्यते ।
व्यवधानमिकां वर्णिवर्णानुस्वरयोरिव ॥ १ ॥
भुवो वार्थं वदन्तीति वादेरणादिके इति ।
भूवादय इति ज्ञेया भुवोऽर्थी वाचकोऽथवा ॥ २ ॥

**कर्त्तरि ञे** ॥ ८ ॥ कर्त्तरि कारके आर्थे दो भवति । व्यतिभवंते । व्यतिलुनते । व्यतिपचंते ।

+**ह्ववहः** ॥ ९ ॥ ह्ववहिभ्यां कर्तरि ञे दो भवति । संप्रहरंते राजानः । व्यतिवहंते नद्यः ।

● **न गतिहिंसाशब्दे** ॥१०॥ गतौ हिंसायां शब्दे चार्थे वर्तमानाद्धोः कर्तरि ञे दो न भवति । व्यतिगच्छंति । व्यतिधावंति । व्यतिहिंसंति । व्यतिघ्नंति । व्यतिशब्दयंति । व्यतिजल्पंति ।

**परस्परान्योऽन्येतरेतरे** ॥ ११ ॥ एतेर्योगे आर्थे दो न भवति । परस्परस्य व्यतिलुनंति । अन्योऽन्यस्य व्यतिपुनंति । इतरेतरस्य व्यतिभवंति ।

+**गेर्वोह्यसोः** ॥ १२ ॥ गेः पराभ्यां ऊहसिभ्यां दो वा स्यात् । समूहति । समूहते । निरस्यति । निरस्यते । गेरिति किं ? ऊहते । अस्यति ।

**निविशः** ॥ १३ ॥ निपूर्वाद्विशेर्दो भवति । निविशते । निविशाते । निविशंते ।

**परिव्यवक्रियः** ॥ १४ ॥ पर्यादिभ्यः क्रीणातेर्दो भवति । परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।

● **विपरो जेः** ॥ १५ ॥ विपराभ्यां जयतेर्दो भवति । विजयते । पराजयते ।

**क्रीडोऽनुपर्याङः** ॥ १६ ॥ अन्वादेः क्रीडेर्दो भवति । अनुक्रीडते । परिक्रीडते । आक्रीडते ।

**समोऽकूजे** ॥ १७ ॥ संपूर्वात् क्रीडेर्दो भवत्यकूजेऽर्थे । संक्रीडते । अकूज इति किं ? संक्रीडंति शकटानि ।

●**क्ष्णोः** ॥ १८ ॥ क्ष्णोतेर्दो भवति । संक्ष्णुते । संक्ष्णुवाते । संक्ष्णुवते शस्त्रं ।

● **गिरादोमि** ॥ १९ ॥ समः गिरतेर्दो भवत्योमि प्रतिज्ञाने । संगिरते सर्वज्ञं । ओमीति किं ? संगिरति ग्रामं ।

● **स्थः** ॥ २० ॥ तिष्ठतेरोमि दो भवति । सर्वमनेकांतात्मकमातिष्ठते ।

●**संव्यपप्रात्** ॥ २१ ॥ समादिपूर्वात् तिष्ठतेर्दो भवति । संतिष्ठते । वितिष्ठते । अवतिष्ठते । प्रतिष्ठते ।

**ईप्सास्थेयोक्तौ** ॥ २२ ॥ ईप्सायां परिपतितोषार्थमात्मरूपादिप्रकाशने स्थेयोक्तौ च संशय्य विवादं कृत्वा वा निश्चयकरणे स्थो दो भवति । तिष्ठते कन्या छात्रेभ्यः । त्वयि तिष्ठते । मयि तिष्ठते निर्णयः ।

**उद ईहे** ॥ २३ ॥ उत्पूर्वात् स्थो दो भवति ईहेऽर्थे । धर्मे उत्तिष्ठते । ईह इति किं ? आसनादुत्तिष्ठति ।

●**मंत्रेणोपात्** ॥२४॥ उपात् स्थो दो भवति मंत्रेण करणभूतेन चेत् सोपस्थितिः । जगत्या उपतिष्ठते । तृष्टुभा उपतिष्ठते । मंत्रेणेति किं ? भर्त्तारमुपतिष्ठति भार्या यौवनेन ।

+**देवार्चासंगममैत्रीपथिषु** ॥२५॥ उपात् स्थो दो भवति देवार्चादिषु । अजितनाथमुपतिष्ठते । यमुना गंगामुपतिष्ठते । महामात्रानुपतिष्ठते । अयं पंथाः स्रुघ्नमुपतिष्ठते ।

+**वा लिप्सौ** ॥ २६ ॥ उपात् स्थो लिप्सावर्थे दो वा भवति । भिक्षुर्दातृकुलमुपतिष्ठते,उपतिष्ठति वा ।

**घेः** ॥ २७ ॥ उपात् स्थो घेर्दो भवति । ज्ञानं ज्ञेयेषूपतिष्ठते । घेरिति किं ? स्वामिनमुपतिष्ठति ।

**समो गमृच्छिप्रच्छिस्वरार्तिश्रुविद्दृशः**॥२८॥ संपूर्वेभ्यो गमादिभ्यो घिभ्यो दो भवति । संगच्छते । संपृच्छते । संस्वरते । समियृते । समरिष्यते । समृच्छते । संशृणुते । संवित्ते । संपश्यते । घेरिति किं ? संगच्छति ग्रामं । संपश्यति देवं । संवेत्ति धर्मं ।

**निसंव्युपाङ्ह्वः** ॥ २९ ॥ न्यादिभ्यो ह्वयतेर्दो भवति । पुत्रं निह्वयते । संह्वयते । विह्वयते । उपह्वयते ।

**आङः स्पर्द्धे** ॥३०॥ आङ्पूर्वाद् ह्वो दो भवति स्पर्द्धेऽर्थे । मल्लो मल्लमाह्वयते । स्पर्द्धे इति किं ? गामाह्वयति गोधुक् ।

+**गमेः प्रतीक्षे** ॥ ३१ ॥ गमेर्ण्यंतादाङ्पूर्वाद्दो भवति प्रतीक्षे कालहरणे । आगमयस्व तावत् । प्रतीक्ष इति किं ? विद्यामागमयति ।

+नुप्रच्छः ॥ ३२ ॥ आङ्पूर्वाभ्यां नुप्रच्छाभ्यां दो भवति । आनुते शृगालः । आपृच्छते गुरून् ।

*दाञः ॥ ३३ ॥ ददातेराङ्पूर्वाद्दो भवति । विद्यामादत्ते । धनमादत्ते ।

*न व्यसने ॥ ३४ ॥ दाञो दो न भवति व्यसने विकसनेऽर्थे । विपादिकां व्याददाति ।

+स्वांगकर्मकात् ॥ ३५ ॥ दाञः स्वांगकर्मकात् व्यसनेऽर्थे दो न भवति । आस्यं व्याददाति । स्वांगकर्मकादिति किं ? व्याददते पिपीलिका पतंगमुखं ।

*यमूहो धश्च ॥ ३६ ॥ यमेर्हतेश्च धिसंज्ञकात् स्वांगकर्मकाच्चाङ्पूर्वाद्दो भवति । आयच्छते । आयच्छेते । आहते । आघ्नाते । आघ्नते । आयच्छते पाणिं । आहते वक्षः । धेरिति किं ? आयच्छति रज्जुं । आहंति पापं ।

*व्युत्तपश्च ॥ ३७ ॥ व्युद्भ्यां तपेर्दो भवति धेः स्वांगकर्मकाच्च । वितपते । उत्तपते राजा । वितपते पृष्ठं । धेरित्येव । उत्तपति सुवर्णं सुवर्णकारः ।

*वेः कृः ॥३८॥ विपूर्वात् कृञो धेर्दो भवति । विकुर्वते सैंधवाः साधुदांताः । अन्नस्य पूर्णाः छात्राः विकुर्वते ।

*शब्दकर्मणः ॥ ३९ ॥ वेः कृञो दो भवति शब्दकर्मकात् । क्रोष्टा विकुरुते स्वरान् । ध्वांक्षो विकुरुते स्वरान् । शब्दकर्मण इति किं ! विकरोति कटं ।

*गंधनावक्षेपसेवासाहसप्रतियत्नप्रकथोपयोगे ॥ ४० ॥ एष्वर्थेषु कृञो दो भवति । अयमिममुत्कुरुते । श्येनो वर्तिकामुपकुरुते । गणकान् प्रकुरुते । परदारान् प्रकुरुते । कांडं गुणस्योपस्कुरुते । जनापवादान् प्रकुरुते । शतं प्रकुरुते धर्माय । एष्विति किं ! धर्मं करोति ।

प्रसहनेऽधेः ॥ ४१ ॥ अधिपूर्वात् कृञो दो भवति प्रसहने पराभिभवेऽर्थे । वादिनोऽधिकुरुते । शत्रूनधिकुरुते । प्रसहन इति किं ! अधिकरोति ।

*पूजोत्संगोपनीतिज्ञानभृतिगणनव्यये न्यः॥४२ पूजादिष्वर्थेषु नयतेर्दो भवति । नयते चार्वी स्याद्वादे । बालकमुदानयते । माणवकमुपनयते । नयते चार्वी तत्त्वार्थे । कर्मकरानुपनयते । भृतिदानेन स्ववशीकरोति । मद्रकाः कारं विनयंते । राजग्राह्यं भागं निर्यातयंतीत्यर्थः । शतं विनयते । व्ययीकरोति । एष्विति किं ! नयत्यजां ग्रामं ।

*कर्तृस्थे कर्मण्यमूर्तौ शमे ॥ ४३ ॥ कर्तृस्थेऽर्थे कर्मणि मूर्तिवर्जिते विवक्षिते नयतेर्दो भवति शमेऽर्थे । क्रोधं विनयते । दर्पं विनयते । कर्तृस्थे इति किं ! मुनिः परस्य क्रोधं विनयति । कर्मणीति किं ! बुद्ध्या विनयति । अमूर्ताविति किं ! गडुं विनयति । शम इति किं ! क्रोधमानयति ।

+ह्रुर्गतिताच्छील्ये ॥ ४४ ॥ हरतेर्दो भवति गतेस्ताच्छील्ये । पैतृकमश्वा अनुहरंते । मातृकं । गावोऽनुहरंते । गतिस्वभावमनुकुर्वंति ।

+शिक्षशकनाथेर्जिज्ञासोपलंभनाशिषि ॥४५॥ शिक्षादिभ्यो जिज्ञासादिषु दो भवति । शकेः सन्नंतात् शिक्षा । जिज्ञासायां-विद्यां शिक्षते । तुभ्यं शपते । सर्पिषो नाथते । एष्विति किं ! भोक्तुं शिक्षति ।

वृत्तिसर्गतायने क्रमः ॥ ४६ ॥ वृत्त्यादिष्वर्थेषु क्रमेर्दो भवति । तत्त्वेऽस्य क्रमते बुद्धिर्न प्रतिबध्यत इत्यर्थः । जैनेंद्राध्ययनाय क्रमते उत्सहत इत्यर्थः । क्रमंतेऽस्मिन् शास्त्राणि संतन्यंते पास्यंते वा ।

परोपात् ॥ ४७ ॥ वृत्त्यादिषु परोपाभ्यां क्रमेर्दो भवति । पराक्रमते । उपक्रमते ।

ज्योतिरुद्गतावाङः ॥ ४८ ॥ आङ्पूर्वात् क्रमेर्दो भवति ज्योतिषां सूर्यादीनामुद्गमनेऽर्थे । आक्रमते सूर्यः । आक्रमते चंद्रः । ज्योतिरुद्गताविति किं ! शिशुराक्रामति कुनपं ।

वेः स्वार्थे ॥ ४९ ॥ विपूर्वात् क्रमेः स्वार्थे दो भवति । सुष्ठु विक्रमते । साधु विक्रमते । स्वार्थे इति किं ! विक्रामत्यजिनसंधिः ।

*प्रोपात् समर्थात् ॥ ५० ॥ प्रोपाभ्यां समर्थाभ्यां क्रमेर्दो भवति । प्रक्रमते । उपक्रमते भोक्तुं । प्रारभते इत्यर्थः ।

वाऽगेः ॥ ५१ ॥ अगिपूर्वाद् क्रमेर्दो भवति वा । क्रमते, क्रामति । अगेरिति किं ! संक्रामति ।

*संप्रतेर्ज्ञोऽस्मृतौ ॥ ५२ ॥ संप्रतिभ्यां जानातेर्दो भवत्यस्मृतावर्थे। संजानीते । प्रतिजानीते शतं। अस्मृताविति किं ? मातुः संजानाति।

*निह्नवे ॥ ५३ ॥ निह्नवेऽपलापेऽर्थे ज्ञो दो भवति । शतमपजानीते। सहस्रमपजानीते। निह्नव इति किं ? न त्वं किमपि जानासि ।

षेः ॥ ५४ ॥ ज्ञो षिसंज्ञकाद्दो भवति । दध्नो जानीते । सर्पिषो जानीते । षेरिति किं ? स्वरेण पुत्रं जानाति ।

दीप्त्युपोक्तिज्ञानेहाविमत्युपमंत्रे वदः ॥५५॥ दीप्त्यादिषु वदेर्दो भवति । वदते चार्वी तत्त्वार्थे । कर्मकरानुपवदते । वदते विद्वान् स्याद्वादे । तपसि वदते । गेहे विवदंते । परदारानुपवदते ।

व्यक्तवाक्समुक्तौ ॥ ५६ ॥ व्यक्तवाचां समुक्तौ सहोक्तौ वदेर्दो भवति । संप्रवदंते ग्राम्याः । संप्रवदंते साधवः । व्यक्तवागिति किं ? संप्रवदंति चटकाः ।

अनोर्षेः ॥ ५७ ॥ षिसंज्ञकादनुपूर्वाद्वदेर्दो भवति । आचार्यस्यानुवदते शिष्यः । षेरिति किं ? प्रागुक्तमनुवदति ।

*वा व्युक्तौ ॥ ५८ ॥ व्युक्तौ विवादे वदेर्वा दो भवति । विप्रवदंते वादिनः विप्रवदंति वा । व्युक्ताविति किं ? संप्रवदंति साधवः ।

गिरोऽवात् ॥५९॥ अवपूर्वाद्गिरतेर्दो भवति । अवगिरते । अवगिरंते ।

उच्चरोऽधेः ॥ ६० ॥ उत्पूर्वाच्चरतेर्दो भवत्यधेः । गुरुवाचमुच्चरते । अपूपानुच्चरते । अधेरिति किं ? वाष्प उच्चरति ।

समो भया ॥ ६१ ॥ संपूर्वाच्चरतेर्दो भवति भातिन योगे । अश्वेन संचरते । रथेन संचरते । भयेति किं ? त्रैलोक्यं संचरति जिनधर्मः ।

+दाणोऽसत्कृत्येऽर्थया ॥ ६२ ॥ दाणः संपूर्वाद्दो भवत्यसत्कृत्येऽशिष्टव्यवहारेऽर्थया भया योगे । दास्या संप्रयच्छते कामुकः । असत्कृत्ये इति किं ? भार्यायै संप्रयच्छति । अर्थयेति किं ? पाणिना संप्रयच्छति । ज्ञापकमिदंमत्रार्थेऽशिष्टव्यवहारे भापि भवतीति ।

स्वीकृतावुपाद्यमः ॥ ६३ ॥ उपपूर्वाद् यमेर्दो भवति स्वीकृतौ पाणिग्रहणे। कन्यामुपयच्छते। स्वीकृताविति किं ? देवदत्तस्य भार्यामुपयच्छति यज्ञदत्तः ।

अस्मृदृशः सनः ॥ ६४ ॥ एभ्यः सन्नंतेभ्यो दो भवति। शुश्रूषते। सुस्मूर्षते। दिदृक्षते देवान्।

ज्ञः ॥ ६५ ॥ जानातेः सन्नंताद्दो भवति । जिज्ञासते धर्मं ।

नाऽनोः ॥ ६६ ॥ अनुपूर्वाज्जानातेर्दो न भवति सन्नंतात् । अनुजिज्ञासति ।

प्रत्याङ्भ्यः श्रोः ॥ ६७ ॥ प्रत्याङ्भ्यां शृणोतेः सन्नंताद्दो न भवति । प्रतिशुश्रूषति । आशुश्रूषति ।

शदेर्गात् ॥ ६८ ॥ शदेर्गविषयाद्दो भवति । शीयते । शीयेते । शीयंते । गादिति किं ? अशत्स्यत् । शशाद ।

*म्रुलुंङ्लिङोश्च ॥ ६९ ॥ म्रियतेर्दो भवति लुङ्लिङोः गपराच्च । अमृत । मृषीष्ट । म्रियते । म्रियेते । अम्रियत । म्रियंत । लुङ्लिङोश्चेति किं ? मरिष्यति । अमरिष्यत् । ममार ।

*प्राग्वत्सनः ॥७०॥ प्राग्वत् प्राचीनदानिमित्तप्रकृतिवत् सन्नंतात् दो भवति । ङदितो दः । शेते। शिशयिषते । स्पर्द्धते । पिस्पर्द्धिषते । निविशः । निविशते । निविविक्षते । आक्रमते आदित्यः । आचिक्रंसते । सर्पिषो जानीते । सर्पिषो जिज्ञासते । प्राग्वदिति किं ? शिशत्सति । मुमूर्षति । दनिमित्तात्र नास्ति ।

*आमवत् तत्कृः ॥ ७१ ॥ आमंतस्येव तत्कृञो दो भवति । ईहांचक्रे । ईक्षांचक्रे । तत्कृञिति किं ? ईहांबभूव । ईक्षामास ।

+न ॥ ७२ ॥ आमंतात् तत्कृञो दो न भवति। उब्जांचकार ।

*म्युषुजोऽव्यपात्रे ॥ ७३ ॥ म्युद्भ्यां भुजेर्दो

भवत्ययज्ञपात्रे । प्रयुंक्ते । नियुंक्ते । उपयुंक्ते । उद्युंक्ते । अयज्ञपात्र इति किं ? द्वंद्वं यज्ञपात्राणि प्रयुनक्ति । गिना सिद्धे नियमार्थमुद्ग्रहणं । हलंतेषु–उद एव नान्यस्मात् । दुर्युनक्ति । संयुनक्ति ।

***अपस्कः** ॥ ७४ ॥ अपस्किरतेर्दो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । अपग्रहणं किं ? उपस्किरति ।

***भुजोऽत्रे** ॥ ७५ ॥ भुजेर्दो भवत्यत्रेऽपालने । भुंक्ते । भुंजाते । भुंजते । अत्र इति किं ? भुनक्ति भरतः क्ष्मां ।

***नाऽणौ धेः प्राणिकर्तृकाण्णेः** ॥ ७६ ॥ अण्यंतावस्थायां यो धुभिः प्राणिकर्तृकस्तस्माण्ण्यंताद्दो न भवति । आस्ते देवदत्तः । आसयति देवदत्तं । शेते माणवकः । शाययति माणवकं । अणाविति किं ? आरोहयमाणं प्रयोजयति आरोहयते । धेरिति किं ? कटं कुर्वाणं प्रयोजयति कारयते । प्राणिकर्तृकादिति किं ? शुष्यंति व्रीहयः शोषयते व्रीहीनातपः । "णिचः" इति प्राप्तिः प्रतिषिध्यते ।

**यत्कर्म चेत् कर्ताऽनात्माऽस्मृतौ** ॥ ७७ ॥ अण्यंताद्धो णिः तदंताद्दो भवत्यस्मृतावनात्माने । णिप्रकृत्यंतरणौ यत् कर्म स चेत् कर्ता अनात्मा स्यात् । पश्यंति भृत्याः राजानं । दर्शयते भृत्यान् राजा स्वयमेव । यत्कर्मेति किं ? लुनाति दात्रेण लावयति दात्रं स्वयमेव । कर्तेति किं ? आरोहंति हस्तिनं हस्तिपकाः । आरोहयत्येनं महामात्रः । अनात्मेति किं ? हंत्यात्मानं । घातयत्यात्मा । अस्मृताविति किं ? स्मरति वनगुल्मं कोकिलः । स्मारयत्येनं वनगुल्मः ।

***भीस्मेर्हेतुभये** ॥ ७८ ॥ ण्यंताभ्यां भीस्मिभ्यां दो भवति हेतुभयेऽर्थे । मुंडो भीषयते । जटिलो भीषयते । मुंडो विस्मापयते । हेतुभय इति किं ? कुंचिकयैनं भाययति ।

**वंचने गृधिवंचेः** ॥ ७९ ॥ गृधिवंचिभ्यां ण्यंताभ्यां दो भवति वंचने विसंवादनेऽर्थे । गर्द्धयते । वंचयते माणवकं । प्रतारयतीत्यर्थः । वंचन इति किं ? श्वानं गर्द्धयति । अहिं वंचयति ।

***ल्योऽर्च्चाऽशाठ्ये च** ॥ ८० ॥ लिनातिलीयतिभ्यां ण्यंताभ्यां दो भवत्यर्च्चायामशाठ्ये वंचने च । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । कस्त्वामुल्लापयते ।

***मिथ्याकृञोऽभ्यासे** ॥ ८१ ॥ मिथ्याशब्देन योगे कृञो ण्यंताद्दो भवत्यभ्यासेऽर्थे । पदं मिथ्या कारयते । स्तुतिं मिथ्या कारयते । मिथ्येति किं ? सूत्रं साधु कारयति । अभ्यास इति किं ? सकृत्पदं मिथ्या कारयति ।

***ञितः फलेशे** ॥ ८२ ॥ ञितो धोर्दो भवति क्रियायाः फलेशे कर्तरि । पचते । लुनीते । कुरुते । फलेश इति किं ? पचंति पाचकाः । वपंति भृतकाः ।

**वदोऽपात्** ॥ ८३ ॥ अपाद् वदेर्दो भवति फलेशे । एकांतवादमपवदते । अपवदते ।

**समुदाङ्यमोऽग्रंथे** ॥ ८४ ॥ समादिभ्यो यमेर्दो भवत्यग्रंथेऽर्थे । व्रीहीन् संयच्छते । भारमुद्यच्छते । पादमायच्छते । अग्रंथ इति किं ? उद्यच्छति चिकित्सां वैद्यः ।

**ज्ञोऽजेः** ॥ ८५ ॥ जानातेरजेर्दो भवति । गां जानीते । अश्वं जानीते । अजेरिति किं ? स्वर्गं प्रजानाति ।

**णिचः** ॥ ८६ ॥ णिजंताद्धोर्दो भवति फलेशे । ओदनं पाचयते । कटं कारयते । फलेश इति किं ? परस्य कटं कारयति ।

**पादम्याङ्यमाङ्यस्परिमुहरुचिनृत्वदेहृवदसः** ॥ ८७ ॥ पादिभ्यो ण्यंतेभ्यो दो भवति । पाययते । आदयते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । धापयते । वादयते । वासयते ।

**वा वागम्ये** ॥ ८८ ॥ वाचा पदांतरेण गम्यमाने फलेशे दो वा भवति । स्वं धान्यं पुनीते पुनाति वा । स्वं वाक्यमपवदते, अपवदति वा । स्वान् व्रीहीन् संयच्छते, संयच्छति वा । स्वां गां जानीते, जानाति वा । स्वमन्नं पाचयते, पाचयति वा । स्वं पुत्रं पाययते, पाययति वा । गतैः वदादिभ्योयोगेनित्यं दे प्राप्ते वाचा योगेऽनेन विकल्पः ।

मं ॥ ८९ ॥ यस्मान्मं च दश प्राप्नोति तस्मान्ममेव भवति । याति । प्रविशति । अधिकरोति ।

*परानुकृः ॥ ९० ॥ परानुभ्यां कृञो मं भवति । पराकरोति । अनुकरोति ।

प्रत्यभ्यतिक्षिपः ॥ ९१ ॥ एभ्यः क्षिपेर्मं भवति । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति ।

*प्राद्वहः ॥ ९२ ॥ प्राद्वहेर्मं भवति । प्रवहति । प्रवहतः । प्रवहंति ।

* परेः ॥ ९३ ॥ परिपूर्वात् वहेर्मं भवति । परिवहति । नित्यात् फलेशे दे प्राप्ते मं विधीयते । पृथग्वचनमुत्तरार्थं ।

*मृषः ॥ ९४ ॥ परेर्मृषो मं भवति । परिमृष्यति । परिमृष्यतः ।

व्याङश्च रमः ॥ ९५ ॥ व्याङ्भ्यां परेश्च रमेर्मं भवति । विरमति । आरमति । परिरमति । एतेभ्यः किं ? रमते । अभिरमते ।

उपात् ॥ ९६ ॥ उपात् रमेर्मं भवति । उपरमति । उपरमतः । उपरमंति । पृथग् वचनमुत्तरार्थं ।

वा घेः ॥ ९७ ॥ उपपूर्वात् घिसंज्ञकाद्रमेर्वा मं भवति । यावद् भुक्तमुपरमति, उपरमते वा ।

बुध्युधनशजनेङ्प्रुद्रुस्रोर्णेः ॥ ९८ ॥ बुधादिभ्यो ण्यंतेभ्यो मं भवति । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । स्रावयति ।

चल्यशनार्थात् ॥ ९९ ॥ चल्यर्थेभ्योऽशनार्थेभ्यश्च धुभ्यो ण्यंतेभ्यो मं भवति । चलयति । चोपयति । कंपयति । वेपयति । आशयति । निगारयति । भोजयति । अभ्यवहारयति ।

क्यषो वा ॥१००॥ क्यषंताद्वा मं भवति । पटपटायति । पटपटायते । लोहितायति । लोहितायते ।

द्युद्भ्यो लुङि ॥१०१॥ द्युतादिभ्यो लुङि परे वा मं भवति । व्यद्युतत् । व्यद्योतिष्ट । अलुटत् । अलोटिष्ट । अक्षुभत् । अक्षोभिष्ट । अरुचत् । अरोचिष्ट ।

*सन्स्ये वृद्भ्यः ॥ १०२ ॥ वृतादिभ्यः सनि स्ये च वा मं भवति । विवृत्सति । विवर्तिषते । वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत । विवृत्सति । विवर्द्धिषते । वर्त्स्यति । वर्द्धिष्यते । अवर्त्स्यत् । अवर्द्धिष्यत । चिक्लृप्सति । चिकल्पिषते । कल्प्स्यति । कल्पिष्यते । अकल्प्स्यत् । अकल्पिष्यत ।

*लोः कृपः ॥१०३॥ कृपेर्लुटो वा मं भवति । कल्प्ता । कल्पिता । कल्प्तास्मि । कल्पिताहे ।

नपाप्य आसं ॥ १०४ ॥ नपा निर्दिष्टो बाप्यो भवत्यासमासाधिकारनिवृत्तेरित्ययोऽधिकारो ज्ञेयः । वक्ष्यति-प्रोघि च-भिदि । स्फे रुः-शिक्षि । स्फपरस्य प्रस्य घिसंज्ञा प्राप्ता रुसंज्ञया बाध्यते ।

य्वौ स्त्र्याख्यौ मुः ॥ १०५ ॥ ईकारोकारौ स्त्र्याख्यौ मुसंज्ञौ भवतः । कुमारी । किशोरी । वामोरूः । वधूः । य्वौ इति किं ? खट्वा । स्त्र्याख्याविति किं ? हे ग्रामणीः । हे खलपूः । मुप्रदेशाः "अण्मोः" इत्यादयः ।

स्त्री ॥ १०६ ॥ स्त्रीशब्दो मुसंज्ञो भवति । हे स्त्रि । स्त्रियै । स्त्रियाः । स्त्रीणां ।

आमीयुवोः ॥ १०७ ॥ आमि परत इयुवोः स्थानिनौ यो य्वौ स्त्र्याख्यौ तौ मुसंज्ञा भवतः । श्रीणां । भ्रूणां । पृथुश्रीणां स्त्रीणां पुरुषाणां वा । नियमार्थमिदं । आम्येव मुसंज्ञा नान्यत्र । हे श्रीः । हे भ्रूः ।

वा ॥ १०८ ॥ वा मुसंज्ञा भवति आमीयुवोः स्थानिनोः । श्रीणां । श्रियां । भ्रूणां । भ्रुवां ।

ङिति प्रश्च ॥ १०९ ॥ य्वोर्यः प्रः स्त्र्याख्यः इयुवोश्च स्थानिनौ यौ य्वौ तेषां मुसंज्ञा भवति ङिति परे वा । बुद्ध्यै । बुद्धये । धेन्वै । धेनवे । श्रियै । श्रिये । भ्रुवै । भ्रुवे ।

*स्वसखिपति ॥ ११० ॥ य्वोर्यः प्रः स मुसंज्ञो भवति सखिपतिशब्दौ वर्जयित्वा । मुनये । साधवे । बुद्धये । धेनवे । असखिपतीति किं ? सख्या । सख्ये । सख्युः । पत्या । पत्ये । पत्युः ।

भो पि च ॥ १११ ॥ प्रो पि संज्ञो भवति । बोद्धा । भेत्ता । चशब्दः संज्ञातरसमावेशार्थः । प्रविनष्य गतः । घ्याश्रयो णेरयादेशः स्वाश्रयपूर्वनिपातश्च सिद्धः । घिप्रदेशाः "घ्युकः" इत्यादयः ।

**स्फे कः ॥ ११२ ॥** स्फपरः प्रः कसंज्ञो भवति । स्पर्द्धा । कुंडा । हुडा । कप्रदेशाः "सरोर्हलः" इत्यादयः ।

**दीः ॥ ११३ ॥** दीर्घ स्संज्ञो भवति । ईहा । ईक्षा । ईक्षांचक्रे ।

**यस्ये तदादिर्गुः ॥ ११४ ॥** यस्य त्यः यस्यः तस्मिन् परतः तदादि शब्दरूपं गुसंज्ञं भवति । जुहोति । करोति । करिष्यति । यस्य इति किं ? हे देवदत्त इं पश्येत्यत्र आदैप् प्राप्नोति । दध्यधुनेत्यत्र एरित्यादेरिखं च । न चैवं । तदादिरिति किं ? करिष्यामीति । अनेकत्येपि प्रांतस्य दीत्वं । गुप्रदेशाः "गोः"इत्यादयः ।

+**मिङ्ता वाक्यं ॥ ११५ ॥** मिङंतेन प्रयुज्यमानेनाप्रयुज्यमानेन वा प्रत्यासत्तेस्तस्यैव मिङंतस्य विशेषणं शब्दरूपं वाक्यसंज्ञं भवति । धर्मो वो रक्षतु । देवदत्तेन कर्तव्यं । वाक्यप्रदेशाः "वाक्यटेष्यः" प्रभृतयः ।

**सुम्मिङंतं पदं ॥ ११६ ॥** सुबंतं मिङंतं च पदसंज्ञं भवति । धर्मः । अस्ति । पदप्रदेशाः "पदस्य" प्रभृतयः ।

**नः क्ये ॥ ११७ ॥** नांतस्य क्ये परतः पदसंज्ञा भवति । राजीयति । राजायते । त्यखे त्याश्रयमिति पदत्वसिद्धौ किमर्थमिदं ? नियमार्थमिदं नांतमेव क्ये पदसंज्ञं भवति नान्यत् । वाच्यति । सुच्यति ।

**सिति ॥ ११८ ॥** सिति त्ये परतः पूर्वं पदसंज्ञं भवति । भवतष्ठणछस् । भवदीयः । ऊर्णाहंशुभंम्यश्च युस् । ऊर्णायुः ।

**स्वादावधे ॥ ११९ ॥** अधे स्वादौ परतः पूर्वं पदसंज्ञं भवति । पयोभ्यां । राजभ्यां । राजभिः । राजत्वं । राजता । राजतरः । राजतमः । अध इति किं ? राजानौ । राजानः ।

**यचि भः ॥ १२० ॥** यकारादावजादौ च स्वादावधे परतः पूर्वं भसंज्ञं भवति । गार्ग्यः । दाक्षिः । यचीति किं ? राजत्वं । भप्रदेशाः "भस्य" इत्यादयः ।

+**मनुर्नभोऽङ्गिरो वति ॥ १२१ ॥** एते भसंज्ञका भवंति वति त्ये । मनुष्वत् । नभस्वत् । अंगिरस्वत् ।

×**वृष्णोऽश्ववसौ ॥ १२२ ॥** वृषन् इत्येतद् भसंज्ञं भवत्यश्वे वसौ च । वृषणश्वः । वृषण्वसुः ।

**मत्वर्थे स्तौ ॥ १२३ ॥** सकारांतं तकारांतं च शब्दरूपं भसंज्ञं भवति मत्वर्थे त्ये परतः । तपस्वी । मरुत्वान् । विदुष्मान् । मत्वर्थ इति किं ? यशोभ्यां । विद्वद्भ्यां ।

**ध्यपाये ध्रुवमपादानं ॥ १२४ ॥** धियः बुद्धेरपाये प्राप्तिपूर्वकविश्लेषे विभागेऽविचलमवधिभूतं वा यत् ध्रुवं तदपादानसंज्ञं भवति । ग्रामादागच्छति देवदत्तः । अधर्माज्जुगुप्सते । अश्वात् धावतः पतितः । नपा निर्देशः किं ? धनुषा विध्यति । कंसपात्र्यां भुंक्ते । धनुर्विध्यति । अपादानप्रदेशाः "काऽपादाने"इत्येवमादयः ।

+**आख्यातोपयोगे ॥ १२५ ॥** उपयोगे नियमपूर्वकविद्याग्रहणे आख्याता प्रतिपादयिता अपादान भवति । उपाध्यायादधीते । उपयोग इति किं ? नटस्य शृणोति ।

**कर्मणोपेयः संप्रदानं ॥ १२६ ॥** कर्मणा य उपेयोऽर्थः स संप्रदानसंज्ञो भवति । उपाध्यायाय गां ददाति । देवाय बलिं प्रयच्छति । राज्ञे दंडं वितरति ।

+**श्लाघह्नुस्थाशपां ज्ञीप्स्यः ॥ १२७ ॥** एषां ज्ञीप्स्योऽर्थः संप्रदानं स्यात् । देवदत्ताय श्लाघते देवदत्तायापह्नुते । तिष्ठते ब्राह्मणी छात्रेभ्यः । देवदत्ताय शपते ।

+**रुच्यर्थानां प्रेयः ॥ १२८ ॥** रुच्यर्थानां धूनां प्रयोगे प्रेयः प्रीयमाणोऽर्थः संप्रदानं भवति । तुभ्यं रोचते मोदकः । मह्यं स्वदते दधि ।

**धारेरुत्तमर्णः ॥ १२९ ॥** धारयतेरुत्तमर्णो

१ । देवदत्तशब्दस्यसंबुद्धौ परतो दूरात्संबुद्धाविति प्लुतः प्राप्तः परं यस्य इति विशेषणात् भवति ।

१ । सूत्रेण सिद्धे नियमार्थसूत्रयोग एव यथा स्यात् ।

धनी संप्रदानं भवति । देवाय शतं धारयति । देवदत्ताय गां धारयति ।

+राधीक्ष्योर्यस्यैवं ॥ १३० ॥ दैवं शुभाशुभलक्षणं तत्संबंधि यत्कारकं तत् राधीक्ष्योर्योगे संप्रदानं स्यात् । पुत्राय राध्यति, ईक्षते वा । पुत्रस्य दैवं निरूपयतीत्यर्थः ।

+प्रत्याङ्भ्यां श्रुवोऽभ्यर्थकः ॥ १३१ ॥ प्रत्याङ्भ्यां शृणोतेरभ्यर्थकोऽभ्युपगमकोऽर्थः संप्रदानं भवति । मित्राय प्रतिशृणोति, आशृणोति वा । अभ्युपगच्छतीत्यर्थः ।

×प्रत्यनुगृण आख्याता ॥ १३२ ॥ प्रत्यनुपूर्वगृणातिना योगे आख्याता प्रतिपादयिता संप्रदानं स्यात् । उपाध्यायाय प्रतिगृणाति । अनुगृणाति वा । तमुत्साहयतीत्यर्थः ।

×क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥१३३॥ क्रुधाद्यर्थानां धूनां योगे यं प्रति कोपः स संप्रदानं स्यात् । मित्राय क्रुध्यति कुप्यति वा । मित्राय द्रुह्यति । मित्राय ईर्ष्यति । मित्रायासूयति ।

×न गेः क्रुधद्रुहः ॥ १३४ ॥ गिपूर्वयोः क्रुधिद्रुहोः यं प्रति कोपः स संप्रदानं न स्यात् । मित्रमभिक्रुध्यति, अभिद्रुह्यति वा ।

×स्पृहेर्वेप्सितं ॥ १३५ ॥ स्पृहेर्योगे यदीप्सितं तत्संप्रदानं वा भवति । पुष्पेभ्यः स्पृहयति । पुष्पाणि स्पृहयति ।

परिक्रयणं ॥ १३६ ॥ परिक्रयणं यत् तत्संप्रदानं वा भवति । शताय परिक्रीतः शतेन वा । सहस्राय परिक्रीतः सहस्रेण वा ।

×गल्हादीनां बहुलं ॥ १३७ ॥ एषां योगे बहुलं संप्रदानं भवति । श्राद्धाय निगह्लते । अम्भो वर्षति । पत्ये शेते । क्वचिन्न स्यात् । मनसा निगह्लते श्राद्धं । क्वचिद्वयं । मित्राय धर्मं ब्रूते । मित्रं धर्मं ब्रूते ।

साधकतमं करणः ॥ १३८ ॥ अतिशयेन साधकं यत् तत् करणसंज्ञं भवति ।

दानेन भोगं दयया सुरूपं ध्यानेन मोक्षं तपसेष्टसिद्धिं । मत्येन वाक्यं प्रशमेन पूजां वृत्तेन जन्माग्र्यमुपैति मर्त्यः । पुल्लिंगनिर्देशात्—अक्षैर्दीव्यति ।

दिवः कर्म ॥ १३९ ॥ दिवेर्यत् साधकतमं तत् कर्मसंज्ञं भवति । अक्षान् दीव्यति ।

आधारोऽधिकरणः ॥ १४० ॥ अधिकरणकारकमाधारसंज्ञं भवति । कटे आस्ते । गंगायां घोषः । दध्नि सर्पिः । हृदि तिष्ठति जिनः । विवाहेऽलंकृता कन्या । अंगुल्यग्रेऽश्वसहस्रं । आधारप्रदेशाः "ईप्साधारे च" प्रभृतयः ।

कर्माधेः शीङ्स्थासः ॥ १४१ ॥ अधिपूर्वाणां शीङ्स्थासामाधारः कर्मैव भवति । ग्राममधिशेते । पर्वतमधितिष्ठति । वसतिमध्यास्ते । एवकारः आधारनिवृत्त्यर्थः ।

वसोऽन्वुपाध्याङः ॥ १४२ ॥ अन्वादिभ्यः परस्य वसेराधारः कर्म भवति । ग्राममनुवसति । गिरिमुपवसति । गृहमधिवसति । वनमावसति ।

अभिनिविशश्च ॥ १४३ ॥ अभिनिविशमुदायपूर्वस्य विशेराधारः कर्म भवति । ग्राममभिनिविशते । चकारात् कल्याणेऽभिनिवेशः ।

×कालाध्वभावदेशं वा ऽकर्म धीनां ॥ १४४ ॥ धीनां धूनां कालादिराधारः कर्म वा भवति अकर्म च । मासमास्ते । मासे आस्यते । क्रोशं स्वपिति । गोदोहमास्ते । कुरून् स्वपिति । पक्षे—रात्रौ सुप्यते । क्रोशेऽशयिते । गोदोहे आस्ते । ग्रामे उष्यते । कालादीति किं ? शय्यायां शेते । अकर्मेति किं ? मासमास्यते । क्रोशं सुप्यते ।

कर्त्राप्यं ॥ १४५ ॥ कर्त्रा यदाप्यं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति । हिमवंतं शृणोति । जैनेंद्रमधीते । ओदनं पचति । काष्ठानि दहति ।

×वाऽकर्मणोऽणि कर्ता णौ ॥ १४६ ॥ अकर्मणो धोरण्यंतस्य यः कर्ता स णौ सति कर्मसंज्ञो वा भवति । पचति देवदत्तः, पाचयति देवदत्तं ।

१। आधारस्य—औपश्लेषिकसामीपिकाभिव्यापकवैषयिकनैमित्तिकौपचारिकेति षड्भेदाः ।

देवदत्तेन वा । खिद्यति सः, खेदयति तं तेन वा । उत्तरत्र विग्रहणात् इहाविवक्षितकर्मणो ग्रहणं ।

*ज्ञानभ्यर्थवरस्पे: ॥ १४७ ॥ ज्ञार्थानां गम्यर्थानामदर्थानां दृशेर्थानां चाण्यतानां यः कर्ता स णौ सति कर्मसंज्ञो भवति । जानाति धर्मं देवदत्तः । ज्ञापयति धर्मं देवदत्तं । बुध्यते दत्तः । बोधयते(ति)दत्तं । गच्छति माणवको ग्रामं । गमयति माणवकं ग्रामं । याति माणवकः । यापयति माणवकं । भुंक्ते देवदत्तः । भोजयति देवदत्तं । अश्नाति भक्तं देवदत्तः । आशयति देवदत्तमोदनं । पश्यति देवदत्तो रूपं । दर्शयति देवदत्तं रूपं । शेते शिशुः । शाययति शिशुं । आस्ते यज्ञदत्तः । आसयति यज्ञदत्तं । ज्ञादीनामिति किं ? भेदयति काष्ठं भृत्येन ।

*शब्दे ॥ १४८ ॥ शब्दे वर्तमानस्याण्यंतस्य धोः कर्ता णौ सति कर्म भवति । शृणोति दत्तः शब्दं । श्रावयति दत्तं शब्दं । जल्पति देवदत्तः पुत्रं । जल्पयति देवदत्तं पुत्रं ।

+भक्षेरहिंसायां ॥ १४९ ॥ भक्षेर्हिंसार्थस्याणि कर्ता णौ सति कर्म भवति । भक्षयंति बलीवर्दाः सस्यं । भक्षयंति बलीवर्दान् सस्यं । हिंसायामिति किं ? भक्षयति पिंडीं देवदत्तेन ।

+वहेः प्रवेयः ॥ १५० ॥ वहेरणि कर्ता प्रवेयो णौ सति कर्म भवति । वाहयंति बलीवर्दान् भारं । प्रवेय इति किं ? वाहयति भारं वाहीकेन । नहि बलीवर्दवद् वाहीकं प्राजंति ।

+न खादादिक्रंदशब्दायह्वः ॥ १५१ ॥ एष्वोऽणि कर्ता णौ सति कर्म न भवति । खादयति, आदयति पिंडीं देवदत्तेन । क्रंदयति, शब्दाययति, ह्वाययति देवदत्तेन । खादयोरयर्थत्वात् परेषां शब्दक्रियत्वात् प्राप्तिः ।

*हृक्रोर्वा ॥ १५२ ॥ हृकोरणि कर्ता णौ सति वा कर्म भवति । हरति भारं दत्तः । हारयति भारं दत्तं, दत्तेन वा । विकुर्वते सैंधवाः । विकारयंति सैंधवान् सैंधवैर्वा ।

+दृश्यभिवाद्योर्दे ॥ १५३ ॥ दृशेरभिवादेश्चाणि कर्ता णौ सति कर्म वा भवति दविषये । पश्यंति राजानं भृत्याः । दर्शयते राजानं भृत्यान् भृत्यैर्वा । अभिवादयति गुरुर्दत्तं । अभिवादयते गुरुं गुरुणा वा दत्तं ।

स्वतंत्रः कर्ता ॥ १५४ ॥ स्वतंत्रः आत्मप्रधानः कर्तृसंज्ञो भवति । गौस्तिष्ठति । देवेन कृतं । देवदत्तेन भुक्तं ।

तत्प्रयोजको हेतुः ॥ १५५ ॥ तस्य स्वतंत्रस्य प्रयोजकः प्रेरको यः स हेतुसंज्ञो भवति । भुंजानं प्रयोजयति भोजयति । कारयति ।

निः ॥ १५६ ॥ आ"प्राग्धोस्ते"ये वक्ष्यंते ते निसंज्ञा भवंति । इत्येषोऽधिकारो ज्ञेयः । निप्रदेशाः "न्यजनाद्"प्रभृतयः ।

*चादयोऽसत्त्वे ॥ १५७ ॥ चादयो निसंज्ञा भवंत्यसत्त्वे वर्तमानाः । च वा ह अह एवेत्यादिः । असत्त्व इति किं ? अस्यापत्यं इः ।

प्रादिः ॥ १५८ ॥ प्रादयो निसंज्ञा भवंत्यसत्त्वे । प्रपरापसमन्ववनिर्दुर्व्याङ् न्यधयोऽप्यतिसूदभयश्च । प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥ असत्त्व इति किं ? विं प्रातीति विप्रः ।

क्रियायोगे गिः ॥ १५९ ॥ क्रियया अर्थेन योगे प्रादयो गिसंज्ञका भवंति । प्रणमति । परिणमयति । क्रियायोगे इति किं ? प्रगता नायका अस्माद्देशात् प्रनायको देशः ।

तिः ॥ १६० ॥ प्रादयस्तिसंज्ञकाः भवंति क्रियायोगे । प्रकृत्य । उपस्तुत्य । अधिकृत्य ।

*च्व्यिडाजूर्याद्यनुकरणं ॥ १६१ ॥ च्व्यंतं डाजंतं ऊर्याद्यनुकरणं च तिसंज्ञं भवति क्रियायोगे । शुक्लीकृत्य । विमलीभूय । पटपटाकृत्य । ऊरीकृत्य । उररीकृत्य । फट्कृत्य । खाट्कृत्य । ऊर्यादीनां च्व्यर्थो न संभवत्यतः पृथग्ग्रहणं ।

*क्षेपादरेऽसत्सत् ॥ १६२ ॥ असत्सतौ तिसंज्ञौ भवतः क्षेपादरयोरर्थयोः । असत्कृत्य । सत्कृत्य । क्षेपादर इति किं ? असत्कृत्वा गतः ।

१ । योगग्रहणसामर्थ्यात् वाक्यानुक्ताः प्रादयः प्रति गिसंज्ञासंज्ञात्रगामिक्रियायोगे गिरेऽपि नवार्ते प्रति निवाम वारकं न ।

*मृषाऽस्वीकारेऽलमंतः ॥ १६३ ॥ अलमंतरित्येतौ तिसंज्ञौ स्तो मृषाऽस्वीकारयोः । अलंकृत्य । अंतर्हत्य । मृषाऽस्वीकार इति किं ? अलं कृत्वा । अंतर्हत्वा मूषिकां श्येनो गतः। मा कारि,स्वीकृत्येत्यर्थः ।

*कारिकाऽदः स्थित्याद्यनुपदेशे ॥ १६४ ॥ कारिकाऽदसी तिसंज्ञौ स्तः स्थित्यादिषु मर्यादादिष्वनुपदेशे च स्वयं परामर्शे । कारिकाकृत्य । अदःकृत्य । स्थित्याद्यनुपदेश इति किं ? कारिकां कृत्वा । अदः कृत्वा । कर्त्री, एतत्कृत्वा चेत्यर्थः ।

*कणेमनस्तृप्तौ ॥ १६५ ॥ कणेमनःशब्दौ तिसंज्ञौ स्तस्तृप्तावभिलाषनिवृत्तौ । कणेहत्य भुंक्ते । मनोहत्य भुंक्ते । तृप्ताविति किं ? कणे हत्वा ।

पुरोऽस्तं क्षिः ॥ १६६ ॥ पुरस् अस्तं शब्दौ क्षिसंज्ञौ क्रियायोगे तिसंज्ञौ स्तः । पुरस्कृत्य, अस्तंगत्य पुनरुदेति । क्षिरिति किं ? पूः । पुरौ । पुरः । पुरः कृत्वा । नगरीः कृत्वेत्यर्थः । अस्तं कृत्वा कांडं गतः । क्षिप्त्वा कांडं गत इत्यर्थः ।

गत्यर्थवदेऽच्छः॥१६७॥ अच्छशब्दो गत्यर्थेषु वदतौ च परतः तिसंज्ञो भवति । अच्छगत्य । अच्छव्रज्य । अच्छोद्य । गत्यर्थवद इति किं ! अच्छं कृत्वा ।

तिरोऽतर्द्धौ ॥१६८॥ तिरस्शब्दोऽतर्धौ व्यवधाने तिसंज्ञो भवति । तिरोभूय । अंतर्द्धाविति किं ! तिरोभूत्वा स्थितः ।

वा कृञि ॥ १६९ ॥ तिरस्शब्दोऽतर्द्धौ कृञि तिसंज्ञो भवति वा । तिरस्कृत्य । तिरस्कृत्वा ।

*मनस्युरस्युपाजेऽन्वाजेमध्येपदेनिवचने ॥ १७० ॥ एतानि शब्दरूपाणि क्षिसंज्ञकानीबंतप्रतिरूपाणि कृञि वा तिसंज्ञानि भवंति । मनसिकृत्य, मनसि कृत्वा । उरसिकृत्य, उरसि कृत्वा । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा । क्षीत्येव—मनसि कृत्वा सुखं गतः । उरसि कृत्वा पाणिं शेते ।

*स्वाम्येऽधिः ॥ १७१ ॥ स्वामित्वेऽधिर्वा कृञि तिसंज्ञो भवति । ग्रामे पुत्रमधिकृत्य, अधिकृत्वा च । स्वाम्य इति किं ! अधीत्यधिकृत्य ।

*साक्षादाद्यच्वि ॥ १७२ ॥ साक्षादादिशब्दरूपमच्व्यर्थं अच्व्यंतं कृञि तिसंज्ञं वा भवति । साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य, मिथ्या कृत्वा । अच्वीति किं ? उष्णीकृत्य ।

हस्तेपाणौ स्वीकृतौ तिः ॥ १७३ ॥ एतौ कृञि तिसंज्ञौ स्तः स्वीकृतावात्मीकरणे । हस्तेकृत्य । पाणौकृत्य । स्वीकृताविति किं ? हस्ते कृत्वा कार्षापणं गतः । पुनस्तिग्रहणं नित्यार्थं ।

प्राध्वं बंधे ॥ १७४ ॥ प्राध्वंशब्दो बंधेऽर्थे कृञि तिसंज्ञो भवति । प्राध्वंकृत्य । बंध इति किं ? प्राध्वं कृत्वा शकटं गतः ।

जीविकोपनिषदिवे ॥ १७५ ॥ एताविवार्थे कृञि तिसंज्ञा स्तः । जीविकाकृत्य । उपनिषत्कृत्य । इव इति किं ? जीविकां कृत्वा गतः ।

प्राग्धोस्ते ॥ १७६ ॥ ते गितिसंज्ञकाः धोः प्रागेव प्रयोक्तव्याः । तथा चोदाहृतं ।

लो मं ॥ १७७ ॥ लादेशो मसंज्ञो भवति । मिप् वस् मस् । सिप् थस् थ । तिप् तस् झि । शतृ च । नपुंनिर्देशः देन बाधनार्थः । आक्रमते चद्रमाः । संगंस्यते वत्सो मात्रा ।

इडानं दः ॥ १७८ ॥ इट् आनश्च दसंज्ञौ भवतः । इट् वहि महि । थास् आथां ध्वम् । त आतां झट् । शानश्च ।

मिङ्त्रिशोऽस्मद्युष्मदन्याः ॥ १७९ ॥ मिङो मदसंज्ञानि त्रीणि त्रीणि वचनानि अस्मद् युष्मद् अन्य इत्येवं सज्ञानि भवंति । मिप् वस् मसित्यस्मद् । सिप् थस् थेति युष्मद् । तिप् तस् झीत्यन्यः । दानामप्येवं ।

साधने स्वार्थे ॥ १८० ॥ स्वस्य स्वो वा अर्थः स्वार्थस्तस्मिन् स्वार्थे साधनेऽस्मदादयो ज्ञेयाः । अस्मत्पदस्यार्थे साधनेऽस्मत्त्रिकं । युष्मत्पदस्यार्थे युष्मत्त्रिकं । आभ्यामन्यस्यार्थेऽन्यत्रिकं । पचामि, अहं पचामीत्यादि । पचसि, त्वं पचसीत्यादि । पचति, स पचतीत्यादि । एवं देष्वपि योज्यं ।

+पूर्वः सहोक्तौ ॥१८१॥ तस्यास्मदादेः सहोक्तौ युगपद्वचने यः पूर्वः स प्रयोक्तव्यः । अहं च

त्वं च आवां पचावः । त्वं च स च युवां पचथः । अहं च त्वं च स च वयं पचामः ।

*हासे मन्योक्तौ युष्मन्मन्यं ऽ[ते:]स्मस्त्वेकं १८२ मन्योक्तौ मन्यवाचि हासे प्रहासे गम्यमाने युष्मद् भवति मन्ये मन्यतेस्त्वस्मदेकं च । एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पिता । एहि मन्ये ओदनं भोक्ष्यसे नहि भोक्ष्यसे भुक्तः सोऽतिथिभिः । हास इति किं ? एवं मन्यसे भक्त भोक्ष्ये ।

एको द्विर्बहुर्बैकशः ॥१८३॥ तानि त्रीणि त्रीणि वचनान्येकशो द्विर्बहुरित्येव संज्ञानि भवंति प्रत्येकं । मिबेकः । वम् द्विः । मस् बहुः । एवं सर्वत्र ।

सुपश्च ॥ १८४ ॥ सुपश्च त्रिकाण्येकद्विबहुसंज्ञान्येकशो भवंति । सुरेकः । औ द्विः । जस् बहुः । एवमन्यत्रापि । उभयत्र चशब्दः साधने स्वार्थे इत्यस्यापकर्षणार्थः । एकार्थे साधने एकः । द्व्यर्थे द्विः । बह्वर्थे बहुः । मिङ्सु सुप्सु च ।

*आप्परा विभक्ती हलचः ॥१८५॥ तेषां सुपां त्रिकाणां विभक्तिशब्दस्य हलः आकारपराः अचश्च पकारपराः संतः संज्ञा भवंति । वा । ङ्ग । भा । अप् । का । ता । ईप् ।

+जातिरेकाख्यायां बहुवत् ॥१८६॥ जातिरेकाख्यायां वर्तमाना बहुवद्वा भवंति । संपन्नो यवः । संपन्नाः यवाः । जातिरिति किं ? देवदत्तो यज्ञदत्तः । आख्यायामिति किं ? गोत्वं । अश्वत्वं । व्यक्तिविवक्षायां बहुत्वं सिद्धं । जातिविवक्षायां पक्षे बहुवचनाय वचनं ।

+द्वौ चास्मदोऽनुपाधौ ॥ १८७ ॥ द्वौ एकश्चार्थोऽस्मदो वा बहुवद् भवत्यनुपाधौ । आवां ब्रूवः । वयं ब्रूमः । अहं ब्रवीमि । वयं ब्रूमः । अनुपाधाविति किं ? पंडितावावां ब्रूवः । संयतोऽहं ब्रवीमि ।

+फल्गुनीप्रोष्ठपदस्य भे ॥ १८८ ॥ फल्गुनीप्रोष्ठपदयोर्द्वावर्थौ भशब्दवाच्यौ वा बहुवद् भवतः । कदा पूर्वे फल्गुन्यौ उदिते । कदा पूर्वाः फल्गुन्यः उदिताः । कदा पूर्वे प्रोष्ठपदे । कदा पूर्वाः प्रोष्ठपदाः । भमिति किं ? फल्गुनीषु जाते फल्गुन्यौ माणविके ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ प्रथमस्याध्यायस्य द्वितीयः पादः ।

---

## प्रथमाध्याये तृतीयः पादः ।

---

समर्थः पदविधिः ॥ १ ॥ पदसंबंधी विधिः समर्थो वेदितव्यः । पृथगर्थानामेकार्थीभावः परस्परं व्यपेक्षा च सामर्थ्यं । वक्ष्यति—इप्तश्रितादिभिः—धर्मं श्रितः धर्मश्रितः । समर्थ इति किं ? व्याचष्टे मुनिर्धर्मं श्रितः शिष्यो गुरुकुलं । भा तत्कृतयार्थेनोनैः—मदेन पटुः मदपटुः । समर्थ इति किं ? दंती भ्रमति मदेन पटुः शास्त्रेण । अप्प्रकृतितदर्थाऽर्थादिभिः—रथाय दारु रथदारु । समर्थ इति किं ? गच्छ त्वं रथाय दारुगृहे । का भ्यादिभिः—संसारात् भयं संसारभयं । समर्थ इति किं ? ध्यानी निष्क्रामति संसारात् भयं भवसंकटे । ता—मोक्षस्य मार्गः मोक्षमार्गः । समर्थ इति किं ? सुखमनंतं मोक्षस्य मार्गः स्वर्गस्य व्रतं । ईप्शौंडादिभिः । अक्षेषु शौंडः अक्षशौंडः । समर्थ इति किं ? मूढः शक्तोऽक्षेषु शौंडः पिबति पानागारे ।

सः ॥ २ ॥ स इत्ययमधिकारो वेदितव्यः आपादपरिसमाप्तेः । वक्ष्यति—ता—मोक्षमार्गः । सप्रदेशाः "सांनः" इत्यादयः ।

सुप्सुपा ॥ ३ ॥ सुबंतं सुबंतेन सह सो भवति । इत्येतदप्यधिकृतं वेदितव्यं । वक्ष्यति—ईप् शौंडादिभिः । लक्षणं चेद । तेन—काकतालीयं । अंधकवर्तकीयं । खल्वाविल्वीयं । अजाकृपाणीयमित्यादि सिद्धं ।

हः ॥ ४ ॥ ह इत्ययमधिकारो ज्ञेयः षमित्यतः प्राग् । वक्ष्यति—प्रतिनाऽल्पे । सूपप्रति । हप्रदेशाः "हात्" प्रभृतयः ।

* क्रिः सुक्यूदप्द्व्यर्थाभावात्ययसंप्रतिशब्दख्यातिपश्चाद्यथायुगपत्संपत्साकल्यांते ॥५॥ सुबित्येवमादिष्वर्थेषु यद् क्रिसंज्ञं वर्तते तत् सुबंतेन सह

हसो भवति। स्त्रीषु कथा वर्तते—अधिस्त्रि। गन्धिकानां समृद्धेरभावः—दुर्गन्धिकं। मद्राणां समृद्धिः—सुमद्रं। मक्षिकाणामभावो—निर्मक्षिकं। शीतस्यातीतिः—निःशीतं। तैसृकस्यायमकालः—अतितैसृकं। श्रीदत्तस्य शब्दख्यातिः—इतिश्रीदत्तं। इतिपूज्यपादं। रथानां पश्चात्—अनुरथं पदातिः। रूपस्य योग्यं—अनुरूपं। व्रतस्य सादृश्यं—सव्रतं। अर्थमर्थं प्रति—प्रत्यर्थं। ज्येष्ठानामनतिक्रमेण—अनुज्येष्ठं प्रविशंतु। योग्यसादृश्यवीप्सोत्तरपदार्थानतिवृत्तय इति चत्वारोऽपि यथार्थाः। युगपच्चक्रेण—सचक्रं धेहि। वृत्तस्य संपत् सवृत्तं साधूनां। तृणैः सह—सतृणमभ्यवहरति। कुंभस्य समीपं—उपकुंभं। प्राभृतमंतं कृत्वा—सप्राभृतमधीते। अंतशब्दोऽभ्यासेऽवसाने च वर्तते।

*यावद्यथैवानिवे ॥६॥ यावत्यथाशब्दो एवार्थेऽनिवार्थे च सुबंतेन सह समस्यंते स च हसो भवति। यावानोदनः—यावदोदनमतिथीन् भोजय। ये ये वृद्धाः—यथावृद्धं साधूनर्चय। एवानिव इति किं ? यावद् दत्तं तावद्भुक्तं। यथेंद्रदत्तः तथा देवदत्तः।

*प्रतिनाऽल्पे ॥ ७ ॥ प्रतिशब्देनाल्पार्थेन सुबंतेन सह सुबंतं हसो भवति। अल्पः शाकः—शाकप्रति। सूपप्रति। अल्प इति किं ? वृक्षं प्रति विद्योतते विद्युत्।

*परिणा स्व्यक्षशलाकाः ॥८॥ स्यिसंज्ञोऽक्षशलाकाशब्दौ च परिणा सह हसो भवति। एकेनेदं न तथा वृत्तं यथा पूर्वं जये। एकपरि। द्विपरि। त्रिपरि। चतुःपरि। पंचस्वेकरूपेषु जय एवेत्यजयाभावात् पंचपरीति न भवति। अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये। अक्षपरि। शलाकापरि। स्यादय इति किं ? पाशकेनेदं न तथावृत्तं।

वा ॥ ९ ॥ वेत्याधिकारो वेदितव्यः। तत्रैवोदाहरिष्यामः।

*पर्यपाङ्बहिरंचः ॥ १० ॥ पर्यादयः सुबंतेन सह समस्यंते वा। परि त्रिगर्तं वृष्टो देवः। परि परित्रिगर्तेभ्यः। अपत्रिगर्तं। अप त्रिगर्तेभ्यः। आकुमारं यशः समंतभद्रस्य। आकुमारेभ्यः। बहिर्ग्रामं। बहिर्ग्रामात्। प्राग्ग्रामं। प्राग्ग्रामात्।

लक्षणेनाभिमुख्येऽभिप्रती ॥ ११ ॥ आभिमुख्येऽर्थे वर्तमानावभिप्रतिशब्दौ लक्षणवाचिना सह वा हसो भवति। अग्निमभि, अभ्यग्नि शलभाः पतंति। अग्निं प्रति, प्रत्यग्नि शलभाः पतंति। लक्षणेनेति किं ? साधुर्मातरमभि। आभिमुख्य इति किं ? अभिनवोऽको यासां ताः—अभ्यंकाः गावः। अभिप्रतीति किं ? येनाग्निस्तेन गतः।

*दैर्घ्येऽनुः ॥ १२ ॥ दैर्घ्ये आयामविषये लक्षणवाचिसुबंतेनानुर्हसो भवति। गंगामन्वायता—अनुगंगं वाराणसी। अनुयमुनं मथुरा।

*समीपे ॥ १३ ॥ समीपेऽर्थे वर्तमानः सुबंतेन सहानुर्हसो भवति। वनमनु, अनुवनं गतोऽशनिः। अनूपाध्यायमधीते।

तिष्ठद्ग्वादीनि च ॥ १४ ॥ एतानि च शब्दरूपाणि हसंज्ञानि भवंति। तिष्ठंति गावोऽस्मिन् काले गर्भग्रहणाय दोहनाय वा तिष्ठद्गु। वहद्गु। कालविशेषः। आयतीगवं। खलेयवं। खलेबुसं। लूनयवं। लूयमानयवं। चकारो नियमार्थः। तिष्ठद्ग्वादीन्येव समस्यंते। नान्यैः सह। परमं तिष्ठद्गु।

*पारेमध्येऽतस्तया ॥ १५ ॥ पारे मध्येऽतः शब्दाः तांतेन सह, हसो भवति वा। हसंनियोगे चाघोरेत्वं निपात्यते। पारं गंगायाः—पारेगंगं। मध्यं समुद्रस्य—मध्येसमुद्रं। गिरेरंतः—अंतर्गिरं,अंतर्गिरि।

*स्यिर्वंश्यैः ॥ १६ ॥ वंश्यवाचिभिः सह स्यिः संख्यावाची समस्यते हसो भवति। एको मुनिर्वंश्योऽस्य एकमुनि। द्विमुनि। त्रिमुनि व्याकरणस्य।

नदीभिश्च ॥ १७ ॥ नदीवाचिभिः स्यिर्हसो भवति। सप्त सिंधवः—सप्तसिंधु। एकनदं। द्वियमुनं। त्रिगोदावरं। चकारो नियमाय। नदीभिरेवान्यपदार्थनिराकांक्षाभिर्हो नान्यत्र। द्वे ईरावत्यौ यस्मिन् देशे स द्वीरावतीको देशः।

*स्वौ ॥ १८ ॥ नदीवाचिभिः सह हसो भवति स्वविषये। उन्मत्ता गंगा अस्मिन्—उन्मत्तगंगं देशः। लोहितगंगं देशः। शनैर्गंगं। स्वाविति किं ? शीघ्रगंगो देशः।

**स्वे ग्रहणे प्रहरणे च सरूपं युद्धे ॥ १९ ॥** स्वार्थे कर्मव्यतिहारे ग्रहणे प्रहरणे च वर्तमानं समानं रूपं तत्रैव वर्तमानेन सुबंतेन सह हसो भवति युद्धे वाच्ये । केशाश्च केशाश्च मिथो ग्रहण यस्मिन् युद्धे तत्केशाकेशि । दंडाश्च दंडाश्चान्योन्यस्य प्रहरणं यस्मिन् तद्दंडादंडि युद्धं । सरूपमिति किं ? केशाश्च कचाश्च मिथो ग्रहणं यस्मिन् ।

**षः ॥ २० ॥** षमिति प्राग् बसादधिकारो ज्ञेयः । इतः पर षसो भवतीति निर्धेयं ।

**इपाऽच्च प्राप्तापन्ने ॥ २१ ॥** प्राप्त आपन्न इत्येतौ शब्दौ इबंतेन सह षसो भवत्यकारश्चैतयोः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । प्राप्ता जीविकां प्राप्तजीविका । आपन्नजीविका ।

***इपश्रितादिभिः ॥ २२ ॥** ताभ्यां श्रितादिभिश्च सह षसो भवति इबंतं पूर्वपदं । जीविकां प्राप्तः जीविकाप्राप्तः । सुखापन्नः । धर्मश्रितः । दुःखातीतः । मोक्षगतः । बहुवचनादाकृतिगणोऽयं । तेन तत्त्वबुभुत्सुः । व्यसनपतितः । ओदनबुभुक्षुरित्यादि सिद्धं ।

***सामिस्वयं क्तेन ॥ २३ ॥** सामिस्वयंशब्दौ खिसंज्ञकौ क्तांतेन सह षसो भवति । सामिकृतं । सामिभुक्तं । स्वयंधौतौ पादौ । स्वयंविलीनमाज्यं । ऐकपद्यं संघाताद् इदुत्पत्तिश्च प्रयोजनं । सामिभुक्तस्यापत्यं सामिभुक्तिः ।

**खट्वाऽक्रमे ॥ २४ ॥** खट्वा इबंता अक्रमे गम्यमाने क्तांतेन सह षसो भवति । खट्वारूढो जाल्मः । खट्वाप्लुतः । अक्रम इति किं ? खट्वारूढोऽध्यापकोऽध्यापयति ।

**कालाः ॥ २५ ॥** कालवाचिनः शब्दाः इबंताः क्तांतेन सह षसो भवति । अहरतिश्रिताः । रात्रिसंक्रांताः मुहूर्ताः । काला इति किं ? क्रोशं कुटिला नदी ।

***व्याप्तौ ॥ २६ ॥** व्याप्तावविच्छेदेऽर्थे इबंताः कालाः सुपा सह षसो भवति । अत्यंतरमणीयं । अत्यंतसुखं । सर्वरात्रकल्याणी ।

**गुणोक्त्येषत् ॥ २७ ॥** ईषदित्येतत् गुणवचनेन सह षसो भवति । ईषदपत्यं पिंगलः ईषत्पिंगलः । ईषद्विकटः । गुणोक्त्येति किं ? ईषद्गुरुः । ईषद्गार्ग्यः ।

***भा तत्कृतयार्थेनोनैः ॥ २८ ॥** भांतं पूर्वपदं भांतार्थकृतार्थया गुणोक्त्या अर्थेन ऊनवाचिभिश्च सह षसो भवति । शंकुलया कृतः खंडः शंकुलाखंडः । मदपटुः । गिरिणा कृतः काणः गिरिकाणः । कुसुमसुरभिः । पुण्येनार्थः पुण्यार्थः । माषोनं । तत्कृतयेति किं ? अक्ष्णा काणः ।

***पूर्वादिभिः ॥ २९ ॥** भांतं पूर्वादिभिः सह समस्यते । मासेन पूर्वः मासपूर्वः । संवत्सरावरः । पितृसदृशः । असिकलहः । वाङ्निपुणः । गुणमिश्राः धानाः । जिह्वाश्लक्ष्णः । कुलसमः ।

**साधनं कृता बहुलं ॥ ३० ॥** साधनं कारकं भांतं कृदंतेन सह बहुलं षसो भवति । आत्मना कृतं आत्मकृतं । विषहतः । नखनिर्भिन्नः । काकपेया नदी । श्वलेह्यः कूपः । कुक्कुटसंपात्याः ग्रामाः । कटकसंचय ओदनः । कचिन्न स्यात् । श्वभिर्लेह्यः । दात्रेण लूनवान् । साधनमिति किं ? पुत्रेणागतः । कृतेति किं ? धान्येन धनवान् ।

***अप्प्रकृतितदर्थाऽर्थादिभिः ॥ ३१ ॥** अबंतं पूर्वपदं प्रकृत्या तदर्थार्थशब्देन तदादिभिश्चान्यैः सह षसो भवति । रथाय दारु—रथदारु । कुंडलहिरण्यं । पित्रे इदं पित्रर्थं । मात्रर्थं । देवबलिः । गोहितं । गोरक्षितं । प्रजासुखं । प्रकृत्यादिभिरिति किं ? रंधनाय स्थाली । समर्थ इति किं ? गच्छ त्वं रथाय दारु देवदत्तस्य गृहे ।

**+अपाऽलं ॥ ३२ ॥** अलमबंतेन सह षसो भवति । अलं जीविकायै—अलंजीविकः । अपेति किं ? अलमतिप्रसंगेन ।

***का भ्यादिभिः ॥ ३३ ॥** कांतं पूर्वपदं भीप्रकृतिभिः सह षसो भवति । वृकेभ्यो भीः वृकभीः । वृकभयं । वृकभीतः । संसारभीतिः । पापापेतः । सुखापोढः । रथापत्रस्तः । भवमुक्तः ।

***स्तोकाराद्दर्थकृच्छ्रं क्तेन ॥ ३४ ॥** स्तोकार्था आराद्दर्थाः कृच्छ्रशब्दश्च क्तांतेन सह षसो भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । कतिपयान्मुक्तः ।

दूरादागतः । विप्रकृष्टादागतः । समीपादागतः । अंतिकादागतः । कृच्छ्राल्लब्धः ।

*ईप् शौंडादिभिः ॥ ३५ ॥ ईबंतं पूर्वपदं शौंडादिभिः सह षसो भवति । अक्षेषु शौंडः–अक्षशौंडः । पानशौंडः । अक्षधूर्तः । पानधूर्तः । अक्षकितवः । पानकितवः ।

ऋणे त्यैः ॥ ३६ ॥ यादिव्यांतैः सह ईबंतं ऋणे गम्यमाने षसो भवति । मासे देयं ऋणं मासदेयं । संवत्सरदेयं । त्र्यहदेयं । ऋण इति किं ? मासे देया भिक्षा । त्यैरिति किं ? मासे दातव्यं ।

खौ ॥ ३७ ॥ खुविषये ईबंतं सुबंतेन सह षं स्यात् । अरण्येतिलकाः । वनेहरितक्याः । कूपेपिशाचकाः । पूर्वाह्णस्फोटकाः । "ईपोऽह्लः" इत्यनुप् ।

*तत्राहोरात्रांशाः क्तेन ॥ ३८ ॥ तत्र अहरवयववाचि रात्र्यवयववाचि च ईबंतं क्तांतेन सह षं स्यात् । तत्रभुक्तं । तत्रपीतं । पूर्वाह्णकृतं । अपराह्णकृतं । पूर्वरात्रकृतं । अपररात्रकृतं । तत्राहोरात्रांशा इति किं ? शुक्लपक्षे कृतं । क्तेनेति किं ? मध्याह्ने भोक्ता ।

क्षेपे ॥ ३९ ॥ क्षेपे गम्ये ईबंतं क्तांतेन सह षं भवति । अवतप्तेनकुलस्थितं । भस्मनिहुतं । प्रवाहेमूत्रितं । षे कृति बहुलमित्यनुप् ।

*ध्वांक्षादिभिः ॥ ४० ॥ ध्वांक्षप्रकारैः क्षेपे कुत्सायां ईबंतं षसो भवति । तीर्थे ध्वांक्ष इव तीर्थध्वांक्षः । तीर्थकाकः । तीर्थश्वा । श्मशानसारमेयः ।

पात्रेसमितादयः ॥ ४१ ॥ पात्रेसमितादयः शब्दाः गणपाठादेव षसंज्ञाः निपात्यंते क्षेपे कुत्सायां गम्यमाने । पात्र एव समिताः–पात्रेसमिताः । उदुंबरमशक इव–उदुम्बरमशकः । उदुंबरकृमिः । कूपमंडूकः । अवटकच्छपः । नगरकाकः । मातरिपुरुषः । पिंडीशूरः । गेहेनर्दी । गोष्ठेपंडितः । गर्भेतृप्तः ।

पूर्वकालैकसर्वजरत्पुराणनवकेवलं यश्चैकाश्रये ॥ ४२ ॥ पूर्वकालवाचि एकादीनि च एकाश्रये समानाधिकरणे सति सुपा सह षसो भवति यसश्च । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । दग्धप्ररूढः । छिन्नप्ररूढः(?) । कृष्टसमीकृतं । एकचर्मा । सर्वपदार्थः । जरत्तार्किकः । पुराणान्नं । नवान्नं । केवलज्ञानं । चकारः षसंज्ञासमावेशार्थः । गोपिका चासौ गौश्च गोपिकगवी । यत्राश्रयो पुंवद्भावो सिद्धो । एकाश्रये इति किं ? एकस्याः शाटी ।

*दिगधिकं खुहृदुयौ ॥ ४३ ॥ दिग्वाची अधिकशब्दश्चैकाश्रये सुपा षसो भवति यसश्च खौ हृति च विषये यौ च परतः । खुविषये–दिक् । दक्षिणाः कोशलाः दक्षिणकोशलाः । उत्तरकोशलाः । हृद्विषये–दक्षिणस्यां शालायां भवः दाक्षिणशालः । औत्तरशालः । अधिकया षष्ट्या क्रीतोऽधिकषाष्टिकः । उविषये–दक्षिणा शाला प्रिया यस्य दक्षिणशालाप्रियः । अधिको गोधनमस्य अधिकगवधनः । खुहृदुयाविति किं ? उत्तरो ग्रामः ।

*स्यिः समाहारे रश्चाखौ ॥ ४४ ॥ स्यिः संख्यावाची सुबंतेनोत्तरपदेन सह षसो भवति यश्च समाहारे वाच्ये खुहृदुयौ च रसंज्ञश्चाखौ । स्यिः-पंचपूल्यः । षण्णगरी । खौ–पंचाम्राः । दशवटाः । हृद्विषये–पचानां नापितानामपत्यं पांचनापितिः । यौ–पंच गावो धनमस्य पंचगवधनः । दशगवधनः । रश्चेति चकारः षसंज्ञासमावेशार्थः । द्वे अंगुली समाहृते द्व्यंगुली । षाश्रयः अः सांतः । राद् ङीश्च । अखाविति किं ? पंचर्षीणामिदं पांचर्षं । रश्चेत् "रादुवनपत्ये" अणः उप् स्यात् ।

*कुत्स्योऽपापाणकैः ॥ ४५ ॥ पापाणकमुक्तेरर्थात् कुत्सनैः सह कुत्स्यवाची शब्दः षसो भवति । वैयाकरणखसूची । क्षत्रियभीरुः । श्रोत्रियकितवः । भिक्षुविटः । कुत्स्य इति किं ? वैयाकरणश्चौरः । अपापाणकैरिति किं ? पापकुलालः । अणकनापितः । विशेष्यपूर्वनिपातार्थं वचनं ।

सामान्येनोपमानं ॥ ४६ ॥ सामान्यवाचिना सहोपमानं सुबंतं षसो भवति । शस्त्रीव श्यामा शस्त्रीश्यामा । मृगीव चपला मृगचपला । हंसगद्गदा । न्यग्रोधपरिमंडला । शरकांडगौरी । दूर्वाकांडश्यामा । सामान्येनेति किं ? पर्वता इव बलाहकाः । काका इव तंडुलाः । उपमानमिति किं ? रामा श्यामा ।

*व्याघ्रादिभिरुपमेयोऽतद्योगे ॥ ४७ ॥ एतैः सहोपमेयः षसो भवति तस्य सामान्यस्यायोगे। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। पुरुषसिंहः। पुरुषर्षभः। अतद्योग इति किं? पुरुषोऽयं व्याघ्र इव शूरः।

विशेषणं विशेष्येणेति ॥ ४८ ॥ विशेषणवाचि सुबंतं विशेष्येण सह षसो भवत्येकाश्रये यथा। नीलोत्पलं। लोहितशाटी। कृष्णसर्पः। लोहितालिः। गौरसर्षपः। कृष्णकंबलः। विशेषणमिति किं? तक्षकः सर्पः। विशेष्येणेति किं? लोहितस्तक्षकः। इतिशब्दो लौकिकविवक्षार्थः। रामो जामदग्न्यः। अर्जुनः कार्तवीर्यः। वाक्यमेव।

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः ॥ ४९ ॥ पूर्वादयः समस्यंते सुबंतैः षसो भवति यथा सहैकाश्रये। पूर्वपुरुषः। अपरपुरुषः। अपरकायः। प्रथमपुरुषः। चरमपुरुषः। जघन्यपुरुषः। समानपुरुषः। मध्यपुरुषः। मध्यमपुरुषः। वीरपुरुषः।

*श्रेण्यादिः कृतादिभिः च्व्यौ ॥ ५० ॥ श्रेणिप्रभृतयः समस्यंते कृतादिभिः सह च्व्यर्थे गम्यमाने। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। श्रेणिमताः। पूगकृताः। पूगमताः। ऊककृताः। ऊकमताः। च्व्याविति किं? श्रेणयः कृताः।

*विसमासौ क्तः ॥ ५१ ॥ विसमासौ ईषन्निष्पत्तौ क्तांत समस्यते अर्थात्क्तांतेन। कृतं चाकृतं च कृताकृतं। भुक्ताभुक्तं। पीतापीतं। पीतविपीतं। कृतापकृतं। क्लिष्टाक्लिशितं। पूतापवितं। विसमासाविति किं? सिद्धं चाभुक्तं च।

+नानिटेट् ॥५२॥ सेट् क्तांतमनिटा क्तांतेन सह षसो न भवति। क्लिशिताक्लिष्टं। पवितापूतमिति न भवति।

सन्महत्परमोत्तमोत्कृष्टं पूज्येन ॥ ५३ ॥ एते पूज्येन सह समस्यंते एकाश्रये। संश्चासौ पुरुषश्च सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः। पूज्येनेति किं? उत्कृष्टा गौ कर्दमात्।

सह वृंदारकनागकुंजरैः ॥ ५४ ॥ तत् पूज्यं वृंदारकादिभिः सह षसो भवति। गौ श्चासौ वृंदारकश्च गोवृंदारकः। गोनागः। अश्वनागः। गोकुंजरः। मुनिकुंजरः। तदिति किं? सुसीमो नागः।

*कतरकतमौ जातिप्रश्ने ॥ ५५ ॥ कतरकतमौ एकार्थौ जातिप्रश्ने गम्यमाने षसो भवति। कतरगार्ग्यः। कतमगार्ग्यः। जातिप्रश्ने इति किं? कतरो भवतोर्देवदत्तः।

क्षेपे किं ॥ ५६ ॥ किमेतत् सुबंतेन सह समस्यते क्षेपेऽर्थे। स किंराजा यो न रक्षति प्रजाः। स किंसखा यो मित्रं द्रुह्यति। स किंवैयाकरणो यः शब्दं न ब्रूयात्। क्षेपे इति किं? को राजा मान्यखेटे।

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ५७ ॥ पोटादिभिः सह जातिवाची शब्दः समस्यते। इभ्या चासौ पोटा च इभ्यपोटा। क्षत्रिययुवतिः। अग्निस्तोकं। घृतकतिपयं। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कलापाध्यापकः। कठधूर्तः। जातिरिति किं? देवदत्ता पोटा।

चतुष्पाद्गर्भिण्या ॥ ५८ ॥ चतुष्पाद् जातिः गर्भिणीशब्देन सह षसो भवति। गोगर्भिणी। अजगर्भिणी। चतुष्पादिति किं? ब्राह्मणी गर्भिणी। जातिरित्येव—स्वस्तिमती गर्भिणी।

प्रशंसोक्त्या ॥ ५९ ॥ प्रशंसावचनेन सह जातिः समस्यते। गोप्रकांडं। गोमतल्लिका। अश्वप्रकांडं। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका।

युवा खलतिपलितजरद्वलिनैः ॥ ६० ॥ खलत्यादिभिः सह युवा समस्यते। युवखलतिः। युवपलितः। युवजरन्। युववलिनः। युवतिः खलतिः युवखलतिः। युवपलिता। युवजरती। युववलिना।

भ्यतुल्याख्या अजात्या ॥ ६१ ॥ भ्यांतास्तुल्याख्याश्च अजात्या सह षसो भवति। भोज्यं च तदुष्णं च भोज्योष्णं। पानीयशीतं। हरणीयपूर्णो घटः। तुल्यश्वेतः। तुल्यरोहितः। तुल्यमहान्। सदृक्श्वेतः। सदृशश्वेतः। अजात्येति किं? भोज्य ओदनः। तुल्यो वैश्यः।

*कुमार: श्रमणादिना ॥ ६२ ॥ कुमार: शब्द: श्रमणादिभि: सह षसो भवत्येकाश्रये । कुमारी चासौ श्रमणा च कुमारश्रमणा । कुमारप्रव्रजिता । कुमारतापसी । कुमाराध्यापक: । कुमाराध्यापिका ।

मयूरव्यंसकादयश्च ॥ ६३ ॥ मयूरव्यंसकादय: शब्दा: षसंज्ञा: गणपाठादेव निपात्यंते । विगतौ विस्तृतावंसावस्य व्यंसो व्यंस इव व्यंसक: । व्यंसको मयूर: मयूरव्यंसक: । छात्रव्यंसक: । कंबोजमुंड: । यवनमुंड: । चकारोऽवधारणार्थस्तेन मयूरव्यंसकादय एव समस्यंते । अन्यै: सह वृत्त्यंतरं न लभंते । परमो मयूरव्यंसक: ।

काला: मेयै: ॥ ६४ ॥ कालवाचिन: शब्दा: मेयै: परिच्छेद्यै: सह षसो भवति । मासो जातस्य मासजात: । संवत्सरजात: । द्व्यहजात: ।

नञ् ॥ ६५ ॥ नञ् सुपा सह समस्यते । अगौ: । अनेक: । अधर्म: ।

+वर्णो वर्णै: ॥ ६६ ॥ वर्णवाचि वर्णवाचिभि: सह षसो भवति । शुक्लश्चासौ कृष्णश्च शुक्लकृष्ण: । रोहितपांडु: । कृष्णसारंग: । विशेषणविशेष्यभावो नास्तीति वचनं । शुक्लकृष्णाद्यर्थानामन्योन्यस्य विशेषणसमुदाये वर्तमानस्य शुक्लादेरंशद्वारेण विशेषणत्वमित्यनियमेन पूर्वनिपात: प्रयोजनं ।

+पूर्वापराधरोत्तरमभिन्नेनांशिना ॥ ६७ ॥ पूर्वादीन्यंशवाचीन्यंशवाचिना अभिन्नेन षं भवति । पूर्वं कायस्य पूर्वकाय: । अपरकाय: । अधरकाय: । उत्तरकाय: । पूर्वादीति किं ? दक्षिणं कायस्य । अभिन्नेनेति किं ? पूर्व: छात्राणां । अंशिनेति किं ? पूर्वं नाभे: कायस्य ।

+अर्द्धं नप् ॥ ६८ ॥ अर्द्धं नपुंसकं समस्यते अंशिना सह । अर्द्धं पिप्पल्या:—अर्द्धपिप्पली । अर्द्धखट्वा । नबिति किं ? ग्रामोऽर्द्धो देश: ।

+द्वित्रिचतुर्डट् वा ॥ ६९ ॥ एभ्यो डट् तदंतं अंशिना वा षसो भवत्यभिन्नेन । द्वितीयं भिक्षाया: द्वितीयभिक्षा । भिक्षाद्वितीयं । तृतीयभिक्षा । भिक्षातृतीयं । चतुर्थभिक्षा । भिक्षाचतुर्थ: । डडादीति किं ? पंचमं भिक्षाया: ।

ता ॥ ७० ॥ तांतेन सुबंतेन सह षसो भवति । स्वर्गसुखं । मोक्षमार्ग: । राजपुरुष: ।

कृति ॥ ७१ ॥ कृत्प्रयोगे या ता तदंतं सुपा समस्यते । इध्मानां व्रश्चन: इध्मव्रश्चन: । पलाशशातन: । अविलवन: । श्मश्रुकर्तन: ।

याजकादिभि: ॥ ७२ ॥ एतै: सह तांतं षसो भवति । देवानां याजक: देवयाजक: । शंभवनाथपूजक: । गुरुपरिचारक: । गुरुपरिवेषक: । तद्योजक: । अर्थवाचक: ।

+पत्तिरथं गणकं ॥ ७३ ॥ पत्तिरथशब्दौ तांतौ गणकेन सह समस्येते । पत्तीनां गणक: पत्तिगणक: । रथगणक: । पत्तिरथमिति किं ? कार्षापणानां गणक: ।

न प्रतिपदं ॥ ७४ ॥ प्रतिपदं या ता तदंतं न समस्यते । फलानां तृप्त: । सर्पिषो ज्ञानं । शतस्य षतं ।

निर्द्धारणे ॥ ७५ ॥ निर्द्धारणे जातिगुणक्रियाभि: समुदायादेकदेशस्य निष्कृष्य धारणे या ता तदंतं न समस्यते । मनुष्याणां क्षत्रिय: शूरतम: । नारीणां श्यामा दर्शनीयतमा । अध्वगानां धावंत: शीघ्रतमा: । गवां कृष्णा: संपन्नक्षीरतमा: ।

*डडद्विसतव्यैकद्रव्यै: ॥ ७६ ॥ एतै: सह तांतं षसो न भवति । चक्रधराणां पंचम: । तीर्थकृतां षोडश: । बलदेवानां नवम: । ग्रामस्य पुरस्तात् । वृक्षस्योपरि । देवदत्तस्य कुर्वन् । देवदत्तस्य कुर्वाण: । देवदत्तस्य कर्तव्यं । आचार्यस्य श्रीदत्तस्य । शुकस्य माराविदस्य ।

*गुणैरस्वस्थैर्विंशत्यादिभि: ॥ ७७ ॥ अस्वस्थैर्गुणैस्तांतं न समस्यते विंशत्यादिवर्जितै: । काकस्य कार्ष्ण्यं । बलाकाया: शौक्ल्यं । कटकस्य तैक्ष्ण्यं । नात्र कार्ष्ण्यादेर्गुणस्य स्वास्थ्यं प्रतीयते । कृष्ण: काक इति यथा । गुणैरिति किं ? राजपुरुष: । अस्वस्थैरिति किं ? कन्यारूपं । कपित्थरस: । चंदनगंध: । स्तनस्पर्श: । अविंशत्यादिभिरिति किं ? गोविंशति: । गोशतं । सूत्रकाचवं । वचनप्रामाण्यं ।

कर्तरि क्तेन ॥ ७८ ॥ कर्तरि या ता तदंतं क्तेन सह षसो न स्यात् । इदमेषामासितं । इदमेषां यातं । इदमेषां भुक्तं । राज्ञां मतः । राज्ञां पूजितः । राज्ञामर्चितः । राज्ञामिष्टः ।

*द्विप्राप्तौ भावे ॥ ७९ ॥ कर्तरि भावे सत्यां द्विप्राप्तौ कृति कर्मणि या ता तदंतं षं न स्यात् । आश्चर्यो गवां दोहोऽगोपालकेन । रोचते मे ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं विष्णुमित्रेण । द्विप्राप्ताविति किं ? देवदत्तः कृतो जिनदत्तेन । भावेति किं ? साध्विदं शब्दानुशासनमाचार्यस्य ।

*ण्वुतृभ्यां ॥ ८० ॥ आभ्यां योगे कर्तरि या ता तदंतं सो न भवति । भवतः शायिका । भवतः आसिका । भवतोऽग्रगामिका । तृजुत्तरार्थं ।

कर्त्तरि ॥ ८१ ॥ कर्त्तरि यौ ण्वुतृचौ ताभ्यां योगे कर्मणि या ता तदंतं न समस्यते । ओदनस्य भोजकः । सक्तूनां पायकः । अपां स्रष्टा । पुरां भेत्ता । कर्तरीति किं ? इक्षुभक्षिकां मे धारयसि ।

क्रीडाजीविकयोर्नित्यं ॥ ८२ ॥ क्रीडायां जीविकायां च ण्वुना सह तांतं नित्यं षसो भवति । उद्दालकपुष्पभंजिका । वारणपुष्पप्रचायिका । तालभंजिका । अम्रोपखादिका । नखलेखकः । अवस्करमृदकः । रमणीयकारकः । क्रीडाजीविकयोरिति किं ? पयसः पायकः ।

*तिकाकुदुः ॥ ८३ ॥ अमी सुबंतेन सह समस्यंते । प्रगत्य । शुक्लीभूय । पटपटाकृत्य । खात्कृत्य । शोभनः पुरुषः सुपुरुषः । अतिपुरुषः । कुत्सितः पुरुषः कुपुरुषः । ईषत् पिंगलः—आपिंगलः । पापः पुरुषो दुष्पुरुषः ।

+प्रात्यवपरिनिःप्रत्यादयो गतक्रांतक्रुष्टग्लानक्रांतस्थितादिषु बेभ्यापकेभिः ॥ ८४ ॥ प्रादयो गतादिष्वर्थेषु बांतादिभिः सह षसो भवति । तद्यथा-प्रादयो गतादिष्वर्थेषु बया । प्रगतः आचार्यः प्राचार्यः । संगतोऽर्थः समर्थः । अत्यादयः क्रांताद्यर्थेष्विपा । अतिक्रांतः खट्वां—अतिखट्वः । उद्गतो वेलां उद्वेलः समुद्रः । अवादयः क्रुष्टादिषु भया । अवक्रुष्टं कोकिलया-अवकोकिलं वनं । अनुगतमर्थेन—अन्वर्थं वचः । पर्यादयो ग्लानादिष्वपा । परिग्लानोऽध्ययनाय पर्यध्ययनः । उद्युक्तः संग्रामाय-उत्संग्रामः । निरादयः क्रांतादिषु कया । निःक्रांतः कौशांब्याः—निःकौशांबिः । अपगतः शाखायाः—अपशाखः । प्रत्यादयः स्थितादिष्वीपा । प्रतिष्ठितमुरसि प्रत्युरसं ।

वागमिङ् ॥ ८५ ॥ अमिङंत वाक्संज्ञं समर्थेन नित्यं षसो भवति । कुंभकारः । भारहारः । शरलावः । अमिङिति किं ? एधानाहारको व्रजति ।

क्त्रिनामैव ॥ ८६ ॥ क्त्रिसंज्ञकेन अमंतेनैव वागमिङ् षसो भवति । स्वादुंकारं भुंक्ते । लवणंकारं भुंक्ते । तपसंकारं भुंक्ते । अमेति किं ? कालो भोक्तुं । एवेति किं ? प्रथमं भोजं । प्रथमं भुक्त्वा गच्छति ।

वा भादि ॥ ८७ ॥ भादीनि वाक्संज्ञानि अमा सह वा समस्यंते । मूलकोपदंशं भुंक्ते । मूलकेनोपदंशं भुंक्ते । पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडं शेते । पार्श्वे उपपीडं शेते ।

क्त्वा ॥ ८८ ॥ क्त्वांतेन सह वा भादि षसो भवति । उच्चैःकृत्य, उच्चैः कृत्वा आचष्टे । नीचैःकृत्य, नीचैः कृत्वाचष्टे । भादीति किं ? अलं कृत्वा ।

*अबाऽन्यार्थेऽनेकं बं ॥८९॥ बांतवर्जितस्यान्यस्य पदस्यार्थेऽभिधेयेऽनेकं सुबंतं बसंज्ञः सो भवति । कंठे कृतं येन स कृतकंठः । उदरेमणिः । कंठेकालः । उरसिलोमा । उष्ट्रस्येव मुखमस्य-उष्ट्रमुखः । गुरुस्थानः । अबान्यार्थे इति किं ? वृष्टे देवे गतः । नपनिर्देशः किं ? लोहितगंगं देशः ।

+एकार्थं ॥ ९० ॥ एकार्थं समानाधिकरणमनेकं सुबंतं बसोऽबाऽन्यार्थे भवति । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । चित्रगुः । अप्रतिहतशासनः । अनंतगुणः । परमवाणीकः । अद्भुतगर्भनः । अविद्यमानपुत्रः । मत्तबहुमातंगं वनं । अर्द्धतृतीयाः । एकार्थमिति किं ? पंचभिर्भुक्तमस्य ।

+क्तिः ॥ ९१ ॥ क्तिसंज्ञं बसो भवत्यबाऽन्यार्थे । उच्चैर्मुखं यस्य स उच्चैर्मुखः । अपुत्रः । अस्त्यर्थः । अस्तिक्षीरा गौः । सुमुखी कन्या ।

*संख्येये स्थिनासन्नादूराधिकाध्यर्द्धार्द्धो-

द्विकइ च ॥ ९२ ॥ आसन्नादीन्यर्थपूर्वं वह्वंग्राणि त्रिसंज्ञानि च संख्येये वर्तमानेन स्यिसंज्ञावाचिना सह समस्यंते । आसन्ना दशानामिमे आसन्नदशाः । आसन्नविंशाः । अदूरदशाः । अदूरविंशाः । अधिकदशाः । अर्द्धेनाधिका विंशतिरिमे अध्यर्द्धविंशाः । अर्धं पंचमं यासां ताः अर्द्धपंचमाः विंशतयः इमे अर्द्धपंचमविंशाः नवतिरित्यर्थः । अर्द्धपंचमत्रिंशाः । समीपे दशानामिमे उपदशाः । उपविंशाः । उपत्रिंशाः । स्यिनेति किं ? आसन्नाः पुरुषाणामिमे । संख्येये इति किं ? अधिका विंशतिर्गवां । आसन्नादीति किं? संनिकृष्टा दशानामिमे ।

*स्यिः सुज्वाऽर्थे ॥ ९३ ॥ सुजर्थे वारे वाऽर्थे विकल्पे संशये वा स्यिसंज्ञावाचि बसो भवति संख्येये वर्तमानेन स्यिना । द्वौ वारौ दश इमे द्विदशाः । त्रिदशाः । चतुर्दशाः । द्वौ वा त्रयो वा द्वित्राः । त्रिचतुराः । पंचषाः । सप्तदशाः । सुज्वाऽर्थे इति किं ? द्वावेव न त्रयः ।

दिशोऽतराले ॥ ९४ ॥ दिक्शब्दाः समस्यंतेऽतरालेऽर्थे । दक्षिणस्याश्च पूर्वस्याश्च दिशो-र्यदंतरालं सा दिक् दक्षिणपूर्वा । पूर्वदक्षिणा । दक्षिणापरा । उत्तरपूर्वा ।

*तेन सहेति तुल्ययोगे ॥ ९५ ॥ सहशब्दः तेनेति भांतेन सह तुल्ययोगे समानक्रियादियोगे बसो भवति । सह छात्रेणागतः सछात्रः । सपुत्रः आगतः । सशिष्यः । सरूपः । सकर्मकरः । तुल्ययोगे इति किं ? सहैव दशभिः पुत्रैर्भारं वहति रासभी । इतिशब्दादतुल्ययोगेऽपि सः । सपक्षको वादी मूले इत्यादि सिद्धं ।

चार्थे द्वंद्वः ॥ ९६ ॥ चकतोऽर्थश्चाऽर्थः । तस्मिन्नर्थेऽनेकं सुबंतं द्वंद्वसंज्ञः सो भवति । चकतौ द्वावर्थौ । इतरेतरयोगसमाहारौ । प्लक्षन्यग्रोधौ । खादिरपलाशौ । छत्रोपानहं । वाग्दृषदं । वाक्त्वचं ।

+समानामेकः ॥ ९७ ॥ समानां तुल्यार्थानां शब्दानां चाऽर्थे एक एव प्रयोक्तव्यः । वक्रस्य कुटिलस्य वक्रौ कुटिलौ वा । सितस्य श्वेतस्य शुक्लस्य सिताः श्वेताः शुक्लाः वा । समानामिति किं ? धवखदिरपलाशाः ।

+सुप्यसंख्येयः ॥ ९८ ॥ सुपि सर्वेषु सतां नानां एकरूपाणां युगपत्प्रयोगे एक एव प्रयोक्तव्यः संख्येयं वर्जयित्वा । वृक्षश्च वृक्षश्च वृक्षौ । वृक्षश्च । वृक्षश्च वृक्षश्च वृक्षाः । हरिणी च हरिणी च हरिण्यौ । सुपीति किं ? मातृमातारौ । मातरौ । मातारावि ति भेदः । असंख्येय इति किं ? । एकश्च एकश्च । द्वौ च द्वौ च । पूर्वं समानार्थोऽर्थे । इदं तु सरूपाऽर्थं ।

+त्यदादि च ॥ ९९ ॥ त्यदादिना अन्यदादिना च सह त्यदादेर्द्वंद्वे प्राप्ते त्यदादिरेक एव प्रयुज्यते । स च देवदत्तश्च तौ । कश्च देवदत्तश्च कौ । स च त्वं च युवां । त्वं च भवांश्च भवंतौ । स च स्थाली च ते । सा च देवदत्तश्च तौ । स च देवदत्ता च ते । स च कुंडं च ते । सा च कुंडं च ते । तच्च देवदत्तश्च तौ ।

+भ्रातृपुत्राः स्वसृदुहितृभिः ॥ १०० ॥ भ्रात्रर्थपुत्रार्थयोः स्वस्रर्थदुहित्रर्थाभ्यां प्रयोगे भ्रात्रर्थ पुत्रार्थावेव प्रयुज्येते । भ्राता च स्वसा च भ्रातरौ । सोदर्यश्च स्वसा च सोदर्यौ । भ्राता च भगिनी च भ्रातरौ । पुत्रश्च दुहिता च पुत्रौ । सुतश्च दुहिता च सुतौ । पुत्रश्च सुता च पुत्रौ । बहुवचनं पर्यायार्थं ।

+पिता मात्रा वा ॥ १०१ ॥ पितुः मात्रा प्रयोगे पिता वा प्रयोक्तव्यः । पिता च माता च पितरौ । मातापितरौ ।

+श्वशुरःश्वश्र्वा ॥ १०२ ॥ श्वशुरस्य श्वश्रूशब्देन प्रयोगे श्वशुरो वा प्रयोक्तव्यः । श्वशुरश्च श्वश्रूश्च श्वशुरौ ।

+वृद्धो यूनाऽनन्यार्थप्रकृतौ ॥ १०३ ॥ वृद्धस्य यूना सह प्रयोगे वृद्ध एव प्रयोक्तव्योऽनन्यार्थप्रकृतावभिन्नार्थप्रकृतौ । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । दाक्षिश्च दाक्षायणश्च दाक्षी । वृद्ध इति किं ? गर्गगार्ग्यायणौ । यूनेति किं ? गर्गगार्ग्यौ । अनन्यार्थप्रकृताविति किं ? भागवित्तिभागवित्तिकौ । वात्स्यायनशौनकायनौ । पूर्वत्र गर्ह सौवीरत्वं चान्योऽर्थोऽन्यत्राप्रकृतिः ।

+स्त्री पुंवच्च ॥ १०४ ॥ वृद्धा यूना सह प्रयोगे

प्रकृत्या प्रयोक्तव्यः सा च वृद्धा स्त्री पुवत् स्यात् । गार्गी गार्ग्यायणश्च गार्ग्यौ । औपगवी च औपगविश्च औपगव्यौ ।

+स्त्रिया ॥ १०५ ॥ पुरुषस्य प्राणिनः स्त्रिया सह प्रयोगे पुरुष एव प्रयोक्तव्यः । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कठौ । मयूरौ । कुक्कुटौ । पटू ।

+ग्राम्यशिशुरसंघेऽस्त्रियौ स्त्री प्रायः॥१०६॥ ग्राम्यद्विखुराणां संघेऽशिशूनां स्त्रीपुरुषाणां युगपत् प्रयोगे स्त्री प्रयुज्यते प्रायः । गावश्चेमे गावश्चेमाः इमाः गावः । अजा इमाः । महिष्य इमाः । ग्राम्यग्रहणं किं ? रुरवश्चेमे रुरवश्चेमाः इमे रुरवः । द्विखुरेति किं ? अश्वाश्चेमे अश्वाश्चेमाः इमेऽश्वाः । संघ इति किं ? गौश्चायं गौश्चेयं इमौ गावौ । अशिशावविति किं ? वत्साश्चेमे वत्साश्चेमाः इमे वत्साः । प्राय इति किं ? उष्ट्राश्चेमे उष्ट्राश्चेमाः उष्ट्रा इमे ।

+नवनैकं च वा ॥ १०७ ॥ नपुंसकमनपुंसकेन सह प्रयोगे नपुंसकं प्रयोक्तव्यमेकत्वं च वा स्यादनन्यार्थप्रकृतौ । शुक्लं च वस्त्रं शुक्लश्च कंबलः ते इमे शुक्ले । तदिदं शुक्लं वा । शुक्लं शुक्लश्च शुक्ला च बृहतिका तानीमानि शुक्लानि । तदिदं शुक्लं वा । अनपेति किं ? शुक्लं च शुक्लं च शुक्ले । अनन्यार्थप्रकृताविति किं ? शुक्लं च वस्त्रं कृष्णश्च कंबलः तौ शुक्लकृष्णौ ।

+सिद्ध्यार्थात् पुनर्वसुर्भे ॥१०८॥ सिद्ध्यार्थशब्दाद्भे वर्तमानात् परः पुनर्वसुशब्दः भे वर्तमानो द्वंद्वविषयो ह्यर्थः सन्नित्यमेकार्थो भवति । उदितौ सिद्ध्यपुनर्वसू । पुष्यपुनर्वसू । तिष्यपुनर्वसू । सिध्यार्थादिति किं ? आर्द्रापुनर्वसवः । भ इति किं ? तिष्यपुनर्वसवो माणवकाः ।

+योक्तं पूर्वं ॥ १०९ ॥ सविधिसूत्रेषु यया निर्दिष्टं पूर्वं प्रयोक्तव्यं । अधिश्रि । धर्मश्रितः । भयभीः ।

राजदंतादौ ॥ ११० ॥ राजदंतादिषु पूर्वनिपातेऽप्राप्तं यत्पदं तत्पूर्वं प्रयोक्तव्यं । दंतानां राजा राजदंतः । वनस्याग्रे अग्रेवणं । पूर्वं वासितं पश्चाल्लिप्तं लिप्तवासितं । नग्नमुषितः । उलूखलमुसले । चित्ररथबाह्लीकौ । दारजारौ । आर्यापती । जंपती । दंपती । जायापती ।

+संख्याल्पा ॥ १११ ॥ से अल्पा संख्या, पूर्वं प्रयोक्तव्या । द्वित्राः । त्रिचतुराः । पंचदश । पंचषाः ।

+द्वंद्वे चिस्त्वेकं ॥ ११२ ॥ द्वंद्वे चिसंज्ञं सुसंज्ञं चैकं पूर्वं प्रयोक्तव्यं । कुशकाशं । तृणकाष्ठं । अग्निधूमं । वायुतोयं । मुनिगुप्तौ । चिसिवति किं ? कुक्कुटमयूरौ । एकमिति किं ? गुरुरविभास्करतनयाः । रविभास्करतनयगुरवः ।

अजाद्यत् ॥ ११३ ॥ अजाद्यकारांतमेकं पूर्वं प्रयोक्तव्यं द्वंद्वे । इंद्रचंद्रौ । उष्ट्रखरं ।

अल्पाच्तरं ॥ ११४ ॥ द्वंद्वे सेऽल्पाच्तरमेकं पूर्वं प्रयुज्यते । धवखदिरौ । वाग्वायू । प्लक्षन्यग्रोधं ।

+अर्च्यं ॥ ११५ ॥ द्वंद्वेऽर्च्यमभ्यर्हितं पूर्वं प्रयुज्यते । कामक्रोधौ । वधूवरौ । दीक्षातपसी । वासुदेवार्जुनौ ।

+वर्णभ्रात्रनुपूर्वं ॥ ११६ ॥ वर्णो भ्राता च द्वंद्वेऽनुपूर्वं क्रमेण पूर्वं प्रयोक्तव्यः । ब्राह्मणक्षत्रियौ । ब्राह्मणक्षत्रियविट्शूद्राः । भीमसेनार्जुनौ । रामलक्ष्मणौ । बलदेववासुदेवौ । युधिष्ठिरभीमसेनार्जुनाः ।

+समाऽभर्तु ॥ ११७ ॥ भं नक्षत्रं ऋतुश्च समासे समानाक्षरमनुपूर्वं पूर्वं प्रयोक्तव्यं । अश्विनीभरण्यौ । भरणीकृत्तिकारोहिण्यः । हेमंतशिशिरौ । हेमंतशिशिरवसंताः । समाविति किं ? पुष्यपुनर्वसू । ग्रीष्मवसंता ।

+धर्मार्थादिषु वा ॥ ११८ ॥ धर्मार्थादिषु द्वंद्वेष्वप्राप्तः पूर्वनिपातो वा पूर्वं निपतति । धर्मार्थौ । अर्थधर्मौ । शब्दार्थौ । अर्थशब्दौ । कामार्थौ । अर्थकामौ । आद्यंतौ । अंतादी । गुणवृद्धी । वृद्धिगुणौ ।

+गुणस्त्रियाश्चि वे ॥ ११९ ॥ गुणः स्त्रियसंज्ञं च वसे पूर्वं प्रयोक्तव्यं । चित्रगुः । लंबकर्णः । सर्वकर्णः । विश्वदेवः । बहुमतः । पंचरक्तः ।

वाहिताग्न्यादिषु ॥ १२० ॥ वाहिताग्न्यादिषु वसेऽप्राप्तं पूर्वनिपातनं वा पूर्वं निपात्यते । आहिताग्निः । अग्न्याहितः । पुत्रजातः । जातपुत्रः ।

पूर्वं-दत्तजातः । जातदत्तः । पीतघृतः । घृतपीतः । मार्योढः । ऊढभार्यः । गतार्थः । अर्थगतः । शीर्षच्छिन्नः । छिन्नशीर्षः ।

+प्रियः ॥ १२१ ॥ प्रियो वा बसे पूर्वं प्रयोक्तव्यः । प्रियगुडः । गुडप्रियः ।

+गड्वादय ईपः ॥ १२२ ॥ ईबंतात् गडुप्रभृतयो बसे वा पूर्वं प्रयोक्तव्याः । गडुकंठः । कंठगडुः । गडुशिराः । शिरोगडुः ।

+क्तांतात् ॥ १२३ ॥ बसे क्तादीबंतात्क्तान्तानि पूर्वं वा प्रयोक्तव्यं । उद्यतोऽसिरनेन-अस्युद्यतः । उद्यतासिः । खड्गोद्गीर्णः । उद्गीर्णखड्गः । वज्रहस्तः । हस्तवज्रः । चक्रपाणिः । पाणिचक्रः । करवालकरः । करकरवालः । ईबाकर्षणार्थः चशब्दः ।

+कालाकृतिसुखादयः ॥ १२४ ॥ कालवाचिनः आकृतिर्जातिस्तद्वाचिनः सुखादयश्च बसे क्तांताद् वा पूर्वं प्रयोक्तव्याः । मासयाताः । यातमासाः । सांगरजग्धी । जग्धसांगरा । सुखयाता । यातसुखा । दुःखयाता । यातदुःखा ।

क्तः ॥ १२५ ॥ क्तांतं बसे पूर्वं प्रयोक्तव्यं । ज्ञातविश्वः । व्याख्यातशास्त्रः । भिक्षितभिक्षः । अवमुक्तोपानत्कः । विश्रुतकीर्तिः ।

*ये कडारादयः ॥१२६॥ यसे कडारादयो वा पूर्वं प्रयोक्तव्याः । कडारभद्रः, भद्रकडारः । गडुलशांडिल्यः, शांडिल्यगडुलः । बधिरांधः, अंधबधिरः । नटधूर्तः, धूर्तनटः । कूटदाक्षिः, दाक्षिकूटः ।

उत्तरपदं द्यु ॥ १२७ ॥ से यदुत्तरपदं तत् द्युसंज्ञं भवति । दशगवधनः । त्र्यहजातः द्युप्रदेशाः "दिगधिकं खुद्दद्यौ" इत्यादयः ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकानाम्नि
लघुवृत्तौ प्रथमस्याध्यायस्य
तृतीयः पादः ।

---

## अथ प्रथमाध्याये चतुर्थः पादः ।

---

कर्मणीप् ॥ १ ॥ कर्मणि कारके इप् विभक्ती भवति । कटं करोति । जैनेंद्रं पठति । पायसं भुंक्ते । आदित्यं पश्यति । अर्हं लंघयति ।

+हांतरांतरेणातिसिधङ्निकषासमयाभिर्वोपाधौ ॥ २ ॥ हादिभिर्योगे इप् भवत्युपाधौ विशेषणे । हा देवदत्तं वर्द्धते व्याधिः । अंतरा गंधमादनं माल्यवंतं चोत्तराः कुरवः । अंतरा निषधं नीलं च विदेहाः । अंतरेण सौमनसं विद्युत्प्रभं च देवकुरवः । अंतरेण जलधिं हिमवंतं च भरतः । मोक्षमंतरेण नात्यंतिकं सुखं । अतिवृद्धं कुरून्मद्रकुलं । धिग्देवदत्तमयशः प्रवृद्धं । निकषा ग्रामं नदी । समया ग्रामं वनं । उपाधाविति किं ? प्रधाने व्याप्यादौ मा भूत् । चकारोऽनुक्तसमुच्चयार्थः । तेन— बुभुक्षितं न प्रतिभाति किंचित् । वृणीष्व भद्रे प्रतिभाति यस्त्वां ।

+पर्यभिसर्वोभयैस्तस्त्यैः ॥ ३ ॥ पर्यादिभिस्तस्त्यांतैर्योगे इप् भवति । परितो ग्रामं वनानि । अभितो ग्रामं । सर्वतो ग्रामं । उभयतो ग्रामं वनानि ।

+द्विरुक्तैरधोभिः ॥ ४ ॥ द्विरुक्तैरधोऽध्युपरिभिर्योगे इप् भवति । अधोऽधो ग्रामं । अध्यधि ग्रामं । उपर्युपरि ग्रामं ग्रामाः । द्विरुक्तैरिति किं ? अधो ग्रामस्य ।

*कालाध्वन्यभेदे ॥ ५ ॥ कालेऽध्वनि चोपाधौ इप् भवत्यभेदेऽत्यंतसंयोगे द्रव्यादिना । संवत्सरं क्षीरौदनं । शरदं मथुरा रमणीया । संवत्सरमधीते । क्रोशं शिकता । योजनं दीर्घो गिरिः । क्रोशमधीते । कालाध्वनीति किं ? स्थाल्यां पचति । अभेदे इति किं ? मासे मासस्य वा द्विरधीते ।

सिद्धौ भा ॥ ६ ॥ सिद्धौ क्रियाफलनिष्पत्तौ गम्यमानायां कालाध्वभ्यां भा भवत्यभेदे । मासेन प्राभृतमधीतं । क्रोशेन तर्कमधीतं । सिद्धाविति किं ? मासं काव्यमधीतं न च ज्ञातं ।

क्रियामध्ये केपौ ॥ ७ ॥ क्रिययोर्मध्ये कालाध्वभ्यां केपौ विभक्त्यौ स्तः । अद्य भुक्त्वा मुनिः द्व्यहाद् भोक्ता, द्व्यहे भोक्ता । इहस्थोऽयमिष्वासः क्रोशात् क्रोशे वा विध्यति लक्ष्यं ।

*स्वती पूजायां तिः ॥ ८ ॥ पूजार्थे स्वतीशब्दौ तिसंज्ञौ स्तः । सुसाध्य गतः । अतिसिच्य गतः । पूजायामिति किं ? सुसिक्त्वा गतः । काकुरियं ।

*न निः ॥ ९ ॥ पूजार्थे स्वतीशब्दौ गिसंज्ञौ न स्तः । सुसिक्तं भवता । अतिस्तुतं त्वया । गिनिमित्तं षत्वं नास्ति । पूजायामिति किं ? अतिषिक्तं किं तवात्र । कुत्सार्थोऽत्र ।

*अतिक्रमेऽतिर्गितिः ॥ १० ॥ अतिक्रमे आधिक्येऽतिर्गितिसंज्ञो न भवति । अतिसिक्तमेव भवता । अतिस्तुतमेव त्वया । अतिसिक्त्वैव गतः । गिसंज्ञाश्रयं षत्वं तिसंज्ञाश्रयः सविधिश्च नास्ति । अतिक्रमे इति किं ? अतिशय्य गतः ।

*पदार्थसंभावनाऽनुज्ञागर्हासमुच्चयेऽपिः॥११॥ एतेष्वर्थेष्वपिर्गीतिसंज्ञो न भवति । सर्पिषोऽपि स्यात् । बिंदुः स्तोकं मात्रा अपिशब्दार्थः । अपिस्तुयाद् राजानं । अपिस्तुहि । धिग्ब्राह्मणमपि स्तुयात् वृषलं । धिग्ब्राह्मणमपि सिंचेत् पलांडु । अपि सिंच । अपि स्तुहि ।

*व्यर्थौ पर्यधी ॥ १२ ॥ व्यर्थावनर्थांतरवाचिनौ पर्यधी गितिसंज्ञौ न भवतः । कुतः पर्यागतः । कुतोऽधिगत्य । पर्यानतं । गितिसमज्ञाश्रयः "प्राग्धोस्ते" इति प्रयोगनियमः सत्वि.धिर्णत्वं च न भवति ।

वीप्सेत्थंभूतलक्षणेऽभिनेप् ॥ १३ ॥ एष्वर्थेष्वभिना योगे इब् भवति गितिनिषेधश्च । वृक्षं वृक्षमभिसिंचति । साधुस्त्वं मातरमभिस्वित: । वृक्षमभिसजति ।

भागे चानुप्रतिपरिणा ॥ १४ ॥ भागेऽर्थे वीप्सादिष्वन्वादिभिर्योगे इब् भवति गितिसंज्ञानिषेधश्च । यदत्र मामनुस्यात् । मां प्रति स्यात् । मां परि स्यात् तदीयतां । वृक्षं वृक्षमनुसिंचति, प्रतिसिंचति, परिसिंचति । साधु त्वं मातरमनुस्वित:, प्रतिस्वित: । वृक्षमनुसजति, प्रतिसजति, परिसजति । भागं चेति किं ? परिषिंचत्योदनं ।

*आर्थेऽनुना ॥ १५ ॥ आर्थे हेत्वादावनुना योगे इब् भवति । ऋषभस्य प्रव्रज्यामनुप्राव्रजन् राजसहस्राणि । ज्ञानोत्पत्तिमन्वागमन् सुराः । शांतिनाथचरितपह्लवप्रसारणमनुप्रावर्षत् पर्जन्यः । तेन हेतुनेत्यर्थः। नदीमन्वसिता सेना । नद्या सहावसितेत्यर्थः।

*उत्कृष्टे ॥ १६ ॥ अनुना योगे उत्कृष्टेऽर्थे इब् भवति । अनुपूज्यपादं वैयाकरणाः । अनुसमंतभद्रं तार्किकाः । अन्वकलंकदेवं शास्तारः ।

उपेन ॥ १७ ॥ उपेन योगे उत्कृष्टेऽर्थे इब् भवति । उपसिंहनंदिनं कवयः । उपाकलंकदेवं वादिनः । उपशालिभद्रम.ढ्याः । उपार्जुनं योद्धारः ।

*ईप साधिके ॥ १८ ॥ उपेन योगे साधिकेऽर्थे ईब् भवति । उपखार्यां द्रोणः ।

*स्वेशेऽधिना ॥ १९ ॥ स्वे ईशितव्ये ईश्वरे च ईब् भवत्यधिना योगे । स्वे-अधिकुरुषु श्रेणिकः । अधिमगधेषु श्रेणिकः । अधिश्रेणिके मगधाः । अधिमेघेश्वरे कुरवः ।

*काङ्माभिविधिमर्यादे ॥ २० ॥ आङा योगे का विभक्ती भवत्यभिविधिमर्यादयोः । आकुमारेभ्यो यशः समंतभद्रस्य । आपाटलिपुत्राद् वृष्टो देवः ।

वर्ज्येऽपपरिभ्यां ॥ २१ ॥ वर्ज्येऽर्थेऽपपरिभ्यां योगे का भवति । अपत्रिगर्तेभ्यो वृष्टो देवः । परित्रिगर्तेभ्यो वृष्टो देवः । परिपरित्रिगर्तेभ्यो वृष्टो देवः । वर्ज्ये इति किं ? अपशब्दो देवदत्तस्य ।

*यत्प्रतिमे प्रतिना ॥ २२ ॥ यतः प्रतिमा प्रतिदानं यतश्च प्रतिमा प्रतिनिधिः सादृश्यं ततः प्रतिना योगे का भवति न गितिसंज्ञा च । माषानस्मै तिलेभ्यः प्रतियच्छति । अर्ककीर्तिर्भरततः प्रति ।

*चेष्टागतिकर्मण्यप्राप्तेऽविपी ॥ २३ ॥ चेष्टाभिकायाः गतेः कर्मण्यसंप्राप्तेऽर्थेऽविपी विभक्त्यौ स्तः । ग्रामाय गच्छति । ग्रामं गच्छति । नगराय व्रजति । नगरं व्रजति । चेष्टागतिकर्मणीति किं ? ग्रामादागच्छति । चेष्टाग्रहणं किं ? मनसा मेरुं गच्छति । गतिग्रहणं किं ? पचत्योदनं । अप्राप्त इति किं ? स्त्रियं गच्छति ।

संप्रदानेऽप् ॥ २४ ॥ संप्रदाने कारके अप् विभक्ती भवति । वज्रजंघाय श्रीमतीमदात् । त्रिपृष्ठाय स्वयंप्रभामदात् । श्रीविजयाय सुतारामदात् । अमोघजिह्वाय ग्रामशतमदात् । देवाय बलिं प्रयच्छति ।

+तादर्थ्ये ॥ २५ ॥ तादर्थ्ये अप् भवति । अवहननायोलूखलं । रंधनाय स्थाली ।

+प्रकृत्यर्थैर्विकारे ॥ २६ ॥ प्रकृत्यर्थैर्धुभिर्योगे विकारेऽर्थेऽप् भवति। मूत्राय प्रकल्पते यवागूः। क्षीरेभ्यो जायते दधि। तत्तत्प्रकृत्यादिविकाररूपमापद्यते इत्यर्थः। विकार इति किं? पुत्रतिनः संपद्यते शाल्यः।

+ज्ञाप्येऽरिष्टेन ॥ २७ ॥ अरिष्टेन उत्पातेन ज्ञाप्येऽर्थे ज्ञाप्यमाने अप् भवति।

वाताय कपिला विद्युदातपायातिलोहिनी।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥

अरिष्टेनेति किं? मित्रस्येदं छत्रं।

●स्पर्धवाचोऽर्थात् कर्मणि ॥ २८ ॥ स्पर्धो वाग् यस्य तस्य धोः कर्मण्यप् भवति तत्र स्पर्धवागर्थात् न साक्षात् प्रयुक्तः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। पाकाय व्रजति। पक्तये व्रजति। स्पर्धवाच इति किं? प्रविश पिंडीं। अर्थादिति किं? एधानाहर्तुं व्रजति।

●शक्तार्थनमःस्वस्तिस्वाहास्वधावषड्भिर्हितैः ॥२९॥ शक्तार्थैर्नमःप्रभृतिभिश्च योगे अप् भवति। शक्तो जिनदत्तो देवदत्ताय। अलं मल्लो मल्लाय। नमोऽभिनंदनदेवाय। स्वस्ति प्रजाभ्यः। इंद्राय स्वाहा। वषडग्नये। स्वधा पितृभ्यः। आमयाविने हितं।

प्रगर्हे मन्यकर्मण्यजीवे वा ॥ ३० ॥ प्रकर्षेण गर्हे गम्यमाने मन्यतेः कर्मणि जीववर्जिते वा अप् भवति। न त्वा तृणाय मन्ये। न त्वा तृणं मन्ये। न त्वा लोष्टाय मन्ये। न त्वा लोष्टं मन्ये। प्रग्रहणं किं? काष्ठं त्वां मन्ये। गर्हे इति किं? इंद्रनीलात् पद्मरागमधिकगुणं मन्ये। मन्ये ग्रहणं किं? न त्वा तृणं चिंतयामि। अजीव इति किं? न त्वा श्वानं मन्ये।

संज्ञो भा दे ॥ ३१ ॥ संपूर्वस्य जानातेः कर्मणि वा भा विभक्ती भवति दे। मात्रा संजानीते। मातरं संजानीते।

●कर्तृकरणे ॥ ३२ ॥ कर्तरि करणे च कारके भा भवति। देवदत्तेन कृतं। जिनदत्तेन भुक्तं। विष्णुमित्रेण पीतं। दात्रेण लुनाति। परशुना छिनत्ति। ध्यानेन कर्माणि हंति।

+प्रकृत्यादिभ्यः ॥ ३३ ॥ एभ्यो भा भवति। प्रकृत्या अभिरूपः। प्रायेण वैयाकरणः। गोत्रेणास्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। सहस्रेण अश्वान् क्रीणाति।

सहार्थेन ॥ ३४ ॥ सहार्थेन योगे भा भवत्यप्राधान्ये। वत्सेन सह गौः। पुत्रेण सहागतः। पुत्रेण सह स्थूलः। पुत्रेण सह धनवान्। अर्थग्रहणं पर्यायार्थं। पुत्रेण सार्द्धं साकं सत्रा अमा युगपत् समं। पुत्रेण युक्तं—करणनिर्देशाः।

येनांगिविकारेत्थंभावौ ॥ ३५ ॥ येनांगिनो विकारो विकृतत्वमित्थंभावोऽनेन प्रकारेण भवनं च लक्ष्यते ततो भा भवति। पाणिना कुणिः। पादेन खंजः। अक्ष्णा काणः।

शिखया बटुमद्राक्षीत् श्वेतच्छत्रेण भूपतिं।
केशवं शंखचक्राभ्यां त्रिभिर्नेत्रैः पिनाकिनं॥

अपि भवान् कमंडलुना छात्रमद्राक्षीत्। अपि भवान् चूलया परिव्राजकमदर्शत्। छात्रत्वादिप्रकारमापन्नो मनुष्यः कमंडल्वादिना लक्ष्यते। अंगिविकारेत्थंभावौ" इति किं? अक्षि काणमस्य।

हेतौ ॥ ३६ ॥ हेत्वर्थे भा भवति। धनेन कुलं। विद्यया यशः। अन्नेन वसति। अध्ययनेन वसति।

+का ॥ ३७ ॥ हेतौ का भवति। सिद्धिरनेकांतात्। पर्वतोऽग्निमान् धूमवत्त्वात्।

●ऋणे ॥ ३८ ॥ हेतौ ऋणे का भवति। शताद्बद्धः। सहस्राद्बद्धः। निष्काद्बद्धः। हेतौ, इति किं? बद्धस्त्वया देवदत्तो नाहं बध्नामि शत मे धारयति शतेन बद्धः।

गुणे श्रीदत्तस्याखियां ॥ ३९ ॥ गुणे हेतौ श्रीदत्ताचार्यमतेन का भवत्यस्त्रियां। जाड्याद्बद्धः। जाड्येन बद्धः। ज्ञानान्मुक्तः। ज्ञानेन मुक्तः। गुण इति किं? धनेन कुलं। अस्त्रियामिति किं? बुद्ध्या मुक्तः।

●हेतौ सर्वाः प्रायः ॥ ४० ॥ हेतुशब्दप्रयोगे—

१ लौकिकव्यवहारे ... हेतुः। २ पूर्वं ... ॥

ये प्रकृते हेत्वर्थे तद्वाचिनः सर्वाः विभक्तयः प्रायेण भवंति । धनेन हेतुना वसति । धनाय हेतवे । धनाद्धेतोः । धनस्य हेतोः । धने हेतौ । कं हेतुं वसति । केन हेतुना । किं निमित्तं । केन निमित्तेन । किं कारणं । केन कारणेन । किं प्रयोजनं । केन प्रयोजनेन । यं हेतुं वसति । येन हेतुना । येन निमित्तेन । एवं सर्ववचनेषु ।

काऽपादाने ॥ ४१ ॥ अपादाने कारके का विभक्ती भवति । रथात् पतितः । आचार्यादधीते । चौरेभ्यो बिभेति । अधर्माज्जुगुप्सते । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः,अभिरूपतराः,दर्शनीयतराः ।

+ल्यप्खे कर्माधारे ॥ ४२ ॥ ल्यांतस्य खे कर्मण्याधारे च का स्यात् । प्रासादात् प्रेक्षते । आसनात् प्रेक्षते । अत एव वचनात् ल्यबंतं द्रष्टव्यं । ल्यप्खे इति किं ? प्रासादमारुह्य प्रेक्षते । आसने उपविश्य प्रेक्षते । कर्माधार इति किं ? गृहादागमाधीते ।

*दिक्शब्दान्यार्थांचुदृत्त्याहीतराराद्बहिर्युक्ते ॥४३॥ दिक्शब्देरन्यार्थैरंचुदृत्त्यादिभिश्च युक्ते का भवति । पूर्वो ग्रामात् । उत्तरो ग्रामात् । अन्यो देवदत्तात् । भिन्नो देवदत्तात् । प्राग् ग्रामात् । प्रत्यग् ग्रामात् । दक्षिणा ग्रामात् । दक्षिणाहि ग्रामात् । इतरोऽस्मात् । गृहादारात् क्षेत्रं । बहिर्ग्रामात् ।

*तास्तोऽसर्थैः ॥ ४४ ॥ अतसर्थप्रत्ययैर्योगे ता भवति । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । उपरि ग्रामस्य । उपरिष्टात् ग्रामस्य । परो ग्रामस्य ।

*इप् चैनेन ॥ ४५ ॥ एनेन योगे इप् ता च स्यात् । दक्षिणेन विजयार्द्धं वसति । उत्तरेण हिमवंतं । पूर्वेण ग्रामस्य । उत्तरेण ग्रामस्य ।

*का चर्ते ॥ ४६ ॥ ऋते शब्देन योगे का स्यात् इप् च । ऋते धर्मात् कुतः सुखं । चित्रं यथाश्रयमृते । न ह्यंगं विक्रियते रोगमृते ।

*पृथग्नानाभ्यां भा च ॥ ४७ ॥ पृथग्नानाभ्यां योगे भा स्यात् का च । पृथक् देवदत्तेन । पृथक् देवदत्तात् । नाना गुरुदत्तेन । नाना गुरुदत्तात् ।

*विना त्रिः ॥ ४८ ॥ विना योगे त्रिसो भाकेपो भवति । विना सम्यक्त्वेन । विना सम्यक्त्वात् । विना सम्यक्त्वं कुतो मुक्तिः ।

*स्तोकाल्पकृच्छ्रकतिपयात् करणे का वाऽसत्वे ॥ ४९ ॥ स्तोकादेरसत्ववचनात् करणे का वा स्यात् । स्तोकान्मुक्तः । स्तोकेन मुक्तः । अल्पान्मुक्तः । अल्पेन मुक्तः । कृच्छ्रान्मुक्तः । कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः । कतिपयेन मुक्तः । असत्वे इति किं ? अल्पेन सीधुना मत्तः । करणे इति किं ? अल्पं जल्पति ।

+तृप्तार्थैस्ता ॥ ५० ॥ तृप्तार्थैर्धुभिर्योगे करणे ता भवति । ओदनस्य तृप्यति । ओदनस्य तृप्तः । सक्तूनां पूर्यते । सक्तूनां पूरणः ।

*ज्ञोऽस्वार्थे ॥ ५१ ॥ जानातेरस्वार्थे अनवबोधने वर्तमानस्य करणे ता भवति । पयसो जानीते । दध्नो जानीते । अस्वार्थे इति किं ? स्वनिना दुहितरं जानाति ।

*का चारादर्थैः ॥ ५२ ॥ आरादर्थैर्दूरार्थैरंतिकार्थैश्चासत्ववाचिभिर्युक्ते का स्यात् ता च । दूरं ग्रामात् । दूरं ग्रामस्य । विप्रकृष्टं पर्वतात् । विप्रकृष्टं पर्वतस्य । अंतिकं वनात् । अंतिकं वनस्य । अभ्यासं देशात् । अभ्यासं देशस्य ।

*तेभ्यः केभ्याः ॥ ५३ ॥ तेभ्यः आरादर्थेभ्यः केभ्याः भवंति । दूराद् ग्रामस्य । दूरं ग्रामस्य । दूरेण ग्रामस्य याति । अंतिकात् ग्रामस्य । अंतिकं ग्रामस्य । अंतिकेन ग्रामात् ।

*ईबाधारे च ॥ ५४ ॥ ईप् विभक्ती भवति आधारे कारके तेभ्यश्च ।

अपात्रे रमते लोको गिरौ वर्षति वासवः ।
अन्यस्त्रीषु मनो याति कुलस्त्रीषु न गच्छति ॥

---

१ शब्दग्रहणेनात्र [illegible] शब्दो गृह्यते तेन देशकालवृत्तिभिरपि पूर्वादिभिर्योगे का भवति । २ पर्यायनिवृत्त्यर्थं [illegible] । तेनेह न–[illegible] ।

१ [illegible] करणभूतेन पयसा [illegible] च [illegible] प्रतिपद्यते वा [illegible] ।

कटे. आस्ते । स्थाल्यां पचति । गंगायां घोषः । दूरे वनस्य । विप्रकृष्टे वृक्षस्य । अंतिके कूपस्य । समीपे देवस्य ।

+क्तेनकर्मणि ॥ ५५ ॥ क्तांतस्य इन्विषयस्य कर्मणीब् भवति । अधीतं व्याकरणमनेन-अधीती व्याकरणे । आम्नाती छंदसि । अधिती गुरौ । कर्मग्रहणं किं ? भुक्तपूर्वी ओदनं । इन्ग्रहणं किं ? गुरुमुपश्लिष्टः शिष्यः ।

+हेतौ तद्युक्ते ॥ ५६ ॥ कर्मणा युक्ते हेतौ ईब् भवति ।

चर्मणि द्वीपिनं हंति दंतयोर्हंति कुंजरं ।
केशेषु चमरीं हंति सीम्नि पुष्कलको हतः ॥

तद्युक्त इति किं ? भिक्षया वसति ।

यद्भावाद्भावगतिः ॥ ५७ ॥ यस्य भावात् क्रियातो भावांतरस्य गतिर्निर्णीतिस्तत्र ईब् भवति । गोषु दुह्यमानासु गतः । दुग्धास्वागतः । देवार्चायां क्रियमाणायां गतः कृतायामागतः । यद्भावादिति किं ? यो जटाभिः स भुंक्ते । जटाभिरित्यत्रेप् नास्ति द्रव्यत्वात् । भावगतिरिति किं ? यो भुक्तवान् स देवदत्तः । यो भुक्तवानित्यत्रेप् न भवति ।

गते स्थानिन्यध्वांतेनैकत्वं ॥ ५८ ॥ यस्याप्रयोगेऽप्यर्थो गम्यते स स्थानी । इयत्तावसितस्याध्वनोऽवसानमंतः । यद्भावाद् भावगतिस्तस्यांतेन युक्तस्याध्वनः गतशब्दे स्थानिन्यप्रयुज्यमाने तेनांतेन एकत्वं [प्रथमात्वं] भवति । पाटलिपुत्राद् राजगृहं सप्तयोजनानि । स्थानिनीति किं ? गवीधुमतः सांकाश्यं चतुर्षु योजनेषु गतेषु भवति । अध्वग्रहणं किं ? कार्तिक्याः आग्रहायणी मासे । अंतेनेति किं ? अद्य नचतुर्षु योजनेषु गतेषु भोजनं । चकारः ईबबाधनार्थः ।

ता चानादरे ॥ ५९ ॥ यद्भावाद् भावगतिस्तत्र ता भवतीप् चानादरे गम्यमाने । रुदतो लोकस्य प्राब्राजीत् । रुदति लोके प्राब्राजीत् । देवदत्ते क्रोशति प्राब्राजीत् । देवदत्तस्य क्रोशतः प्राब्राजीत् ।

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ॥ ६० ॥ एतैर्योगे तेपौ स्तः । गवां स्वामी । गोषु स्वामी । यतीनामीश्वरः यतिष्वीश्वरः । नृणामधिपतिः । नृष्वधिपतिः । धनस्य दायादः । धने दायादः । गवां साक्षी । गोषु साक्षी । शतस्य प्रतिभूः । शते प्रतिभूः । गवां प्रसूतः । गोषु प्रसूतः ।

कुशलायुक्तेनासेवायां ॥ ६१ ॥ कुशलायुक्ताभ्यां योगे तेपौ स्तः । मुहुर्मुहुस्तात्पर्येण वा सेवायां गम्यमानायां । कुशलो विद्याग्रहणस्य । कुशलो विद्याग्रहणे । आयुक्तस्तपश्चरणे । आयुक्तस्तपश्चरणस्य । आसेवायामिति किं ? कुशलश्चित्रकर्माणि न च करोति । आयुक्तो गौः शकटेन । आकृष्य युक्त इत्यर्थः ।

*साधुनिपुणेनानभ्यादिनार्चायामीप् ॥ ६२ ॥ साधुनिपुणाभ्यां योगे अभिप्रभृतिभिरयोगे चार्चायां गम्यमानायां ईप् स्यात् । जिने साधुः । गुरौ निपुणः । अर्चायामिति किं ? साधुरमात्यो राज्ञः । अनभ्यादिनेति किं ? साधुर्मातरमभि । मातरमनु । पितरमनु । निपुणो मातरं प्रति । मातरं परि । निपुणः पितरं प्रति । पितरं परि ।

*प्रसितोत्सुकावबद्धैर्भा च ॥ ६३ ॥ एतैर्योगे भा स्यादीप् च भवति । केशैः प्रसितः । केशेषु प्रसितः । केशैरुत्सुकः । केशेषूत्सुकः । केशैरवबद्धः । तत्र नित्यं प्रसक्तिरित्यर्थः ।

उशि भे ॥ ६४ ॥ उशि भे विषये भेपौ स्तः । पुष्येण पुष्ये वा पायसमश्नीयात् । मघाभिर्मघासु वा पललौदनं । उशीति किं ? पुष्ये चंद्रमाः । भ इति किं ? पंचालेषु वसति ।

मिद्ब्येकार्थे वाः ॥ ६५ ॥ मिद्ब्य सहैकार्थे समानार्थे वर्तमानात् ङ्याम्मृदो वा (प्रथमा) विभक्ती भवति । मुनिर्भूते । द्रोणः पच्यते । गौः । कुमारी । वृक्षः । कुंडं । खारी । एकः । द्वौ । बहवः । एकार्थे इति किं ? त्वया पच्यते ओदनः ।

संबोधने बोऽर्थ्यं ॥ ६६ ॥ संबोधने या वा तस्या बोऽर्थ्यमिति संज्ञा भवति । हे देव । हे देवौ । हे देवाः ।

*बुः किः ॥ ६७ ॥ बोध्यसंज्ञाया वायाः बुः

किसंज्ञो भवति । हे कन्ये । हे कुमारि । हे वधु । किप्रदेशा: "केरेक:" प्रभृतय: ।

**ता शेषे ॥ ६८ ॥** कारकाणामविवक्षा ततोऽन्य: स्वस्वाम्यादिर्वा शेषस्तस्मिन् ता विभक्ती भवति । नटस्य शृणोति । राज्ञ: स्वं । मद्राणां राजा । तस्य भ्राता । ग्रामस्य समीपं । शालीनां राशि: । यवानां धाना: । तस्य हस्त: । गो: स्थानं ।

**स्मर्थदयेशां कर्मणि ॥ ६९ ॥** स्मृत्यर्थानां दयेशोश्च कर्माणि ता स्यात् । मातु: स्मरति । पितुरध्येति । सर्पिषो दयते । पयस ईष्टे । शेष इति किं ? मातरं स्मरति ।

**कृ: प्रतियत्ने ॥ ७० ॥** कृञ: कर्मणि ता स्यात् प्रतियत्नेऽर्थे । एधो दकस्योपस्कुरुते । शङ्खपस्रस्योपस्कुरुते । प्रतियत्न इति किं ? कुंभं करोति बुद्धया ।

*** रुजर्थस्याज्वरिसंताप्योर्भावोक्तेः ॥ ७१ ॥** रुजर्थानां भाववाचिनां धूनां कर्मणि ता स्यात् ज्वरिसंतापी विहाय । चौरस्य रुजति रोग: । वृषलस्यामयति रुजा । रुजर्थस्येति किं ? एति जीवंतमानंद: । अज्वरिसंताप्योरिति किं ? अपथ्याशिनं ज्वरयति ज्वर: । अत्याशिनं संतापयति पीडा । भावोक्तेरिति किं ? मधुराशिन रुजति श्लेष्मा ।

**आशिषि नाथ: ॥ ७२ ॥** नाथते: कर्मणि ता भवत्याशिषि । पयसो नाथते । दध्नो नाथते । आशिषीत्येव । माणवकमुपनाथयति । अंग पुत्राधीष्वेति याचत इत्यर्थ: ।

*** जासनाटक्राथपिषां हिंसायां ॥ ७३ ॥** जासादीनां हिंसार्थानां कर्माणि शेषे ता भवति । चौरस्योज्जासयति । दस्योर्नाटयति । कितवस्योत्क्राथयति । जारस्य पिनष्टि । हिंसायामिति किं ? चौरं बंधनादुज्जासयति । धाना: पिनष्टि ।

*** प्रात्घ्नः ॥ ७४ ॥** प्रनिभ्यां व्यस्तसमस्तविपर्यस्ताभ्यां हंते: कर्मणि ता स्यात् हिंसार्थे । चुटाकस्य प्रहंति । वृषलस्य निहंति । प्रणिहंति । निप्रहंति ।

**व्यवहृपणो: सामर्थ्ये ॥ ७५ ॥** एतयो: सामर्थ्ये क्रयविक्रये द्यूते च कर्माणि ता भवति । शतस्य व्यवहरते । सहस्रस्य व्यवहरते । शतस्य पणते । सहस्रस्य पणते । सामर्थ्य इति किं ? शलाकां व्यवहरति ।

**दिव: ॥ ७६ ॥** व्यवहृपणिसमानार्थस्य दिवे: कर्मणि ता भवति । शतस्य दीव्यति । सहस्रस्य दीव्यति ।

**वा गौ ॥ ७७ ॥** गिपूर्वस्य दिव: कर्मणि ता वा भवति । शतस्य प्रतिदीव्यति । शतं प्रतिदीव्यति ।

*** कालाधारे सुजर्थे ॥ ७८ ॥** सुजर्थो यस्य तस्मिन् त्येऽर्थे युक्ते सति काले आधारे कारके ता भवति । द्विरह्नो भुंक्ते । त्रिरह्नो भुंक्ते । पंचकृत्वोऽह्नो भुंक्ते । कालग्रहणं किं ? त्रि: कंसपात्र्यां भुंक्ते । आधार इति किं ? द्विरह्ना भुंक्ते । सुजर्थ इति किं ? अह्नि भुंक्ते जैन: । शेष इति किं ? द्विरह्न्यधीते ।

**कर्तृकर्मणो: कृति ॥ ७९ ॥** कर्तरि कर्मणि च कृत्प्रयोगे ता भवति । भवतां शायिका । भवतासिका । यवानां लावका: । सक्तूनां पायक: । विश्वस्य ज्ञाता । सकलस्य द्रष्टा । कृतीति किं ? कृतपूर्वी कटं ।

*** क्तस्याधारसतो: ॥ ८० ॥** आधारे सति च वर्तमानकाले य: क्तस्तस्य प्रयोगे ता भवति । अस्मिन्नेभिरश्यते स्म । इदमेषामाशितं । इदमेषां शयितं । सतां मत: । राज्ञां बुद्ध: । सतां पूजित: । राज्ञामर्चित: । साधूनां शीलित: ।

**+ कामुकस्य ॥ ८१ ॥** अस्य प्रयोगे ता भवति । दास्या: कामुक: । धन्यस्य स्त्रिय: कामुका: भवंति । वेश्याया: कामुक: ।

*** न शितलोकखार्थानव्तृणां ॥ ८२ ॥** श्यादीनां प्रयोगे ता न भवति । ओदनं भुक्त्वा । स्व: भुक्तं कृतवान् । ओदनं भुक्तवान् । देवदत्तेन भुक्तं । विष्णुमित्रेण पीतं । चैत्यं कारयामास । जिनान् वंदिष्यमाण: । ओदनं पचमान: । कटं कुर्वन् । कटं कुर्वाण: । दानं चिकीर्षु: । रिपून् जिष्णु: । ग्राममागामुक: । सुकर: कटो भवता । ईषत्कर: कटो भवता । दुष्कर: कटो भवता । ईषत्पानं पयो भवता । सुपानं तक्रं भवता ।

ओदनं पचमानः । इदं यजमानः । कारकम् धर्माणां । जैनेंद्रमधीयन् । अर्हन् पूज्यं । कटान् कर्ता । पठिता जैनेंद्रं । कटं कारको गच्छति । ओदनं भोजको व्रजति ।

* आवश्यकाधमर्ण्येन: ॥ ८३ ॥ भाविनि काले आधमर्ण्ये च य इन् तस्य प्रयोगे ता न स्यात् । ग्रामं गमी । नगरमागामी । शतं दायी । सहस्रं दायी । कारी मेऽसि कटं ।

व्यस्य वा कर्तरि ॥ ८४ ॥ व्यसंज्ञकस्य प्रयोगे कर्तरि ता वा भवति । भवतः कर्तव्यो धर्मः । भवता कर्तव्यः । भवतो ज्ञेयं कर्म । भवता ज्ञेयं । भवतः खलु ग्रामो गंतव्यः । भवता खलु ग्रामो गंतव्यः । कर्तरीति किं ? गेयो माणवको गाथानां ।

* द्विप्रासेऽनाके ॥ ८५ ॥ द्वयोः कर्तृकर्मणोः प्राप्ते कर्तरि ता वा भवत्यकारमकं च विहाय । साध्वी सूत्राणां कृतिः स्वामिनः । साध्वी सूत्राणां कृतिः स्वामिना । आश्चर्यो गवां दोहो अगोपालकस्य, अगोपालकेन वा । अनाक इति किं ? चिकीर्षा देवदत्तस्य वार्त्तिकानां । भेदकाः पत्राणां वादिनः ।

+ द्विषतः ॥ ८६ ॥ द्विषेः शतृयोगे कर्मणि वा ता भवति । चौरस्य द्विषन् । चौरं वा ।

* कर्मणि गुणेऽव्यस्य ॥ ८७ ॥ व्यसंज्ञकवर्जितकृत्प्रयोगे गुणेऽमुख्ये कर्मणि ता वा स्यात् । दोग्धा गोः पयसः । दोग्धा गोः पयः । याचिता गोर्मित्रस्य । याचिता गोर्मित्रं । ज्ञापयिता शिष्यस्य धर्मस्य । ज्ञापयिता शिष्यस्य धर्मं । गमयिता माणवकस्य ग्रामस्य । गमयिता माणवकस्य ग्रामं । गुण इति किं ? नेता अश्वस्य । अव्यस्येति किं ? नेतव्याः ग्रामं शाखाः ।

* तुल्यार्थैर्भा ॥ ८८ ॥ तुल्यार्थैरुपमेयार्थैर्योगे भा भवति ता च । पित्रा तुल्यः । पितुस्तुल्यः । मात्रा तुल्यः । मातुः समानः । गुरुणा समः । गुरोः समः ।

* मद्रक्षेमायुःसुखहितार्थैराशिष्यप् ॥ ८९ ॥ मद्राद्याशिष्यर्थैः शब्दैर्योगे वा अप् स्यादाशिष्यर्थे । मद्रमस्तु जिनशासनाय । मद्रमस्तु जिनशासनस्य मद्रं कल्याणं वाऽस्तु जैनाय, जैनस्य वा । क्षेमं कुशलं निरामयं वाऽस्तु संघाय संघस्य वा । दीर्घमायुरायुष्यं चिरंजीवितं वाऽस्तु भव्याय भव्यस्य वा । शं सुखं शर्म वा भूयात् प्रजाभ्यः प्रजानां वा । हितं पथ्यं इष्टं प्रियं वा भवतु मित्राय मित्रस्य वा । अर्थः प्रयोजनं कार्यं वा भवताद्दत्ताय दत्तस्य वा । आशिषीति किं ? आयुष्यं देवदत्तस्य तपः ।

* प्राणितूर्यांगद्वंद्व एकवत्सर्वं ॥ ९० ॥ प्राण्यंगानां तूर्यांगानां च तुल्यानां द्वंद्व एकवद् भवति । पाणी च पादौ च पाणिपादं । शिरोग्रीवं । कर्णनासिकं । दंतोष्ठं । शंखपटहं । भेरीमृदंगं । मार्दंगिकपाणविकं । तुल्यमिति किं ? पाणिगृध्रौ ।

* चरणं स्थेणोर्लुङ्यनुक्तौ ॥ ९१ ॥ लुङ्परयोः स्थेणोः प्रयोगे चरणानां तुल्यानां द्वंद्व एकवद् भवत्यनूक्तावनुवादे । कठाश्च कालापाश्च कठकालापमुदगात् । कठकौथुमं प्रत्यष्ठात् । चरणमिति किं ? उदगुर्वैयाकरणमीमांसकाः । स्थेणोरिति किं ? अनंदिषुः कठकालापाः । लुङीति किं ? उद्यंति कठकौथुमाः । अनूक्ताविति किं ? प्रत्यष्ठुः कठकौथुमाः । आदिवचनमिदं ।

अध्वर्युक्रतुरनप् ॥ ९२ ॥ अध्वर्युक्रतूनामनपां द्वंद्व एकवद् भवति । अर्कश्च अश्वमेधश्च अर्काश्वमेधं । सायाह्नातिरात्रं । अध्वर्युग्रहणं किं ? इषुवज्रौ । अनबिति किं ? गवामयनादित्यानामयने ।

* अधीत्यासन्नानां ॥ ९३ ॥ अधीत्या पठित्या आसन्नानां द्वंद्व एकवद् स्यात् । पदकश्च क्रमकश्च पदकक्रमकं । क्रमकवार्त्तिकं । अधीत्येति किं ? आढ्यदरिद्रौ । आसन्नानामिति किं ? याज्ञिकवैयाकरणौ ।

अप्राणिजातेः ॥ ९४ ॥ प्राणिवर्जितद्रव्यजातिवाचिनां द्वंद्व एकवद् भवति । आराशस्त्रि । धानाशष्कुलि । युगवरत्रं । कुंडबदरं । अप्राणिग्रहणं किं ? विट्शूद्रौ । जातेरिति किं ? हिमवद्विंध्यौ ।

* विलिंगं पुर्नदीदेशं ॥ ९५ ॥ विलिंगानां भिन्नलिंगानां पुरां नदीनां देशवाचिनां द्वंद्व एकवद् भवति । मथुरापाटलिपुत्रं । कांचीकुसुमपुरं । उद्धवश्च

इरावती च उदुम्बेरावती । गंगाशोणं । कुरुकुरुक्षेत्रं । कुरुकुरुजांगलं । कुरुक्षेत्रं । सार्वाभिसारं । विलिंगमिति किं ? मथुरापाटलिपुत्रे । मंगायमुने । मद्रकेकयाः । पूर्णदीदेशमिति किं ? कुक्कुटीमयूरौ ॥

✱ नित्यद्विषां द्वंद्वे ॥ ९६ ॥ नित्यद्विषां सदा-वैरिणां द्वंद्व एकवद् भवति द्वंद्वे । देवासुरं । अहि-नकुलं । मार्जारमूषकं । श्ववराहं । अश्वमहिषं । काको-लूकं । नित्यद्विषामिति किं ? गोपालशालंकायनाः ।

वर्णेनार्हद्रूपायोग्यानां ॥ ९७ ॥ वर्णेन जातिविशेषेणार्हद्रूपस्य नैर्ग्रन्थ्यस्यायो-ग्यानां द्वंद्व एकवद् भवति । तक्षायस्कारं । कुलाल-वरुटं । रजकतंतुवायं । वर्णेनेति किं ? मूकबधिरौ । अर्हद्रूपायोग्यानामिति किं ? ब्राह्मणक्षत्रियौ ।

✱ गवाश्वादिश्च ॥ ९८ ॥ गवाश्वादिर्द्वंद्व एकवद् भवति । गवाश्वं । गवैडकं । अजाविकं । कुब्जवामनं । पुत्रपौत्रं । चकारो नियमार्थः । गणबा-ह्यानां न भवति । गोऽश्वौ ।

+ फलसेनांगक्षुद्रजीवं बह्वर्थं ॥ ९९ ॥ फलांशः सेनांशः क्षुद्रजीवांशश्च बह्वर्थांशो द्वंद्व एक-वद् भवति । बदराणि च आमलकानि च बदरामलकं । कुवलामलकं । अश्वरथं । रथिकाश्वारोहं । शतस्यश्च उत्पादकाश्च शतमुत्पादकं । यूकालिक्षं । दंशमशकं । बह्वर्थांशामिति किं ? बदरामलके । अश्वरथौ । यूकालिक्षे ।

✱ वा तरुमृगतृणधान्यपक्षि ॥ १०० ॥ तर्वादीनां बह्वर्थांशो द्वंद्वो वा एकवद् भवति । प्लक्षन्यग्रोधं । प्लक्षन्यग्रोधाः । अश्वाश्वकर्णं । अश्वाश्व-कर्णाः । रुरुपृषतं । रुरुपृषताः । न्यंकुशूकरं । न्यंकु-शूकराः । कुशकाशं । कुशकाशाः । दर्भशीर्यं । दर्भशीर्याः । व्रीहियवं । व्रीहियवाः । तिलमाषं । तिलमाषाः । हंसचक्रवाकं । हंसचक्रवाकाः । तित्तिरिकपिंजलं । तित्तिरिकपिंजलाः ।

✱ पशुव्यंजनाश्ववडवपूर्वापराधरोत्तरं ॥ १०१ ॥ पश्वादिर्द्वंद्वो वैकवद् स्यात् । गोमहिषं । गोमहिषौ । वृष्णिवत्सं । वृष्णिवत्सौ । दधिघृतं । दधिघृते । शाकसूपं । शाकसूपौ । अश्ववडवं । अश्ववडवौ । पूर्वापरं । पूर्वापरे । अधरोत्तरं । अधरोत्तरे ।

✱ विरोध्यद्रव्यं ॥ १०२ ॥ विरोधि यदद्रव्यं तद् द्वंद्वो वैकवद् स्यात् । सुखदुःखं । सुखदुःखे । एवं—शीतोष्णं । शीतोष्णे । जन्ममरणं । जन्ममरणे । लाभालाभं । लाभालाभे । सम्यग्ज्ञानमिथ्याज्ञानं । सम्यग्ज्ञानमिथ्याज्ञाने । विरोधीति किं ? कामक्रोधौ । अद्रव्यमिति किं ? सुखदुःखाविमौ ग्रामौ । शीतोष्णे इमे उदके ।

न दधिपय आदिः ॥ १०३ ॥ दधिपयः प्रभृतिर्द्वंद्व एकवन्न भवति । दधिपयसी । सर्पिर्मधु-नी । ब्रह्मप्रजापती । दीक्षातपसी । उलूखलमुसले ।

✱ स्थौ ॥ १०४ ॥ स्थौ संख्यायां द्वयतापरिच्छेदे द्वंद्व एकवन्न स्यात् । दंताश्च ओष्ठौ च द्वयोर्ने दंतौष्ठाः । बहवो मार्दंगिकपाणविकाः ।

✱ आंतिके ॥ १०५ ॥ स्थेः संख्याया आंतिके समीपे द्वंद्वो वैकवत्स्यात् । समीपे दशानामिवे उपदशं पाणिपादं । उपदशाः, पाणिपादाः । उपदशं मार्दंगिकपाणविकं । उपदशाः मार्दंगिकपाणविकाः ।

स नप् ॥ १०६ ॥ योऽयमुक्तः एकवद्भावः स नप् भवति । तथा चैवोदाहृतं ।

हश्च ॥ १०७ ॥ हसो नप् भवति । अधि-कुमारि । उपवधु । एकमुनि जैनेंद्रं । चशब्दात् क्रियाविशेषणानां नप्त्वं । साधु जल्पति । मृदु पचति ।

रः समाहारे ॥ १०८ ॥ रसः समाहारे वर्तमानो नप् स्यात् । पंचगवं । पंचाग्नि । समाहारे इति किं ? पंचाग्निप्रियः ।

+ स्त्र्यपात्राद्यत् ॥ १०९ ॥ पात्रादिवर्जितोऽ-कारांतो रः समाहारे स्त्रीलिंगो भवति । पंचपूली । दशग्रामी । चतुरध्यायी । अपात्रादीति किं ? द्विपात्रं । त्रिभुवनं । चतुष्पथं । अदिति किं ? त्रिगुप्ति ।

+ वाऽऽप् ॥ ११० ॥ आबंतो रः समाहारे वा स्त्री भवति । पंचखट्वं । पंचखट्वी । दशमालं । दशमाली । अष्टशालं । अष्टशाली ।

+ नप् चावसं ॥ १११ ॥ अन्नंतस्य नपं स्या-

१ यदा द्वंद्वैकवद्भावस्तदैकवचनमन्यदा [illegible] द्वंद्वोऽप्रयुक्तो नैकभावे तु बहुः ।

-त्यत्र् च वा । पंचतक्षं । पंचतक्षी । द्वादशराजं । द्वादशराजी ।

**योऽजन्यः** ॥ ११२ ॥ नन्सं यसं च वर्जयित्वा यसो नप् भवतीत्यतदधिकृतं ज्ञेयं । वक्ष्यति—सेनेत्यादिवा—क्षत्रियसेनं । क्षत्रियसेना । य इति किं ? महासेनो राजा । अनञ्य इति किं ? असेना । परमसेना ।

**खौ कंथोशीनरेषु** ॥ ११३ ॥ कंथांतः षो नप् भवति खुविषये उशीनरेषु यदि सा कंथा स्यात् । सौशमीनां कंथा सौशमिकंथं ग्रामः । आह्वरकंथं । चर्मकंथं । एते उशीनरेषु ग्रामाः । खाविति किं ? वीरणकंथा । उशीनरेष्विति किं ? दाक्षिकंथा ।

* **आदावुपज्ञोपक्रमं** ॥ ११४ ॥ उपज्ञोपक्रमांतः षो नप् भवत्यादौ प्राथम्ये विवक्षिते तयोः । स्वायंभुवस्योपज्ञा स्वायंभुवोपज्ञं आकालिकाचाराध्ययनं । देवोपज्ञमनेकशेषव्याकरणं । कुरुराजोपक्रमं दानं । अकंपनोपक्रमं स्वयंवरविधानं । आदाविति किं ? मैत्रोपज्ञो रथः । चैत्रोपक्रमः प्रासादः ।

**छाया बहूनां** ॥ ११५ ॥ बहूनां या छाया तदंतः षो नप् भवति । शराणां छाया शरच्छायं । इक्षुच्छायं । शलभच्छायं । बहूनामिति किं ? कुड्यच्छाया । कुड्यच्छायं ।

* **सभाऽशाला** ॥ ११६ ॥ अशाला या सभा तदंतः षो नप् भवति । स्त्रीसभं । दासीसभं । गोपालसभं । अशालेति किं ? दैशिकसभा ।

* **राक्षसाद्यराज्ञः** ॥ ११७ ॥ राक्षसादिभ्योऽराज्ञश्च परा या सभा तदंतः षो नप् भवति । राक्षससभं । रक्षःसभं । पिशाचसभं । अराज्ञ इति पर्युदासात् तत्पर्यायग्रहणं । स्वामिसभं । पार्थिवसभं । इनसभं । ईश्वरसभं । इंद्रसभं । राक्षसाद्यराज्ञ इति किं ? नरसभा । युधिष्ठिरसभा । काष्ठसभा । पाषाणसभा । राजसभा ।

**सेनासुराच्छायाशालानिशा वा** ॥ ११८ ॥ सेनाद्यंतः षो नप् भवति वा । कपिसेनं । कपिसेना । पितृसुरं । पितृसुरा । छत्रच्छायं । छत्रच्छाया । दानशालं । दानशाला । श्वनिशं । श्वनिशा ।

**द्वंद्वे पुंवल्लिंगं** ॥ ११९ ॥ द्वंद्वे से पौरवल्लिंगं भवति । कुक्कुटमयूर्यौ इमे । मयूरकुक्कुटाविमौ । दधिकुंडे । कुंडदध्नी ।

\+ **पेऽप्राप्तालंप्राप्तापन्नादौ** ॥ १२० ॥ प्राप्तालंप्राप्तापन्नपूर्ववर्जिते पसे पुंवल्लिंगं भवति । पूर्वशालेयं । अर्द्धपिप्पलीयं । अप्राप्तालंप्राप्तापन्नादाविति किं ? प्राप्यं शरीरं । निःकौशांबिः । अलंजीविकः । प्राप्तजीविकः । आपन्नजीविकः ।

* **पुंस्यश्ववडवौ** ॥ १२१ ॥ अश्ववडवावितरेतरयोगे द्वंद्वे पुंसि भवतः । अश्ववडवाविमौ । अश्ववडवाः इमे । अश्ववडवैः ।

**रात्राह्नौ** ॥ १२२ ॥ रात्राह्नशब्दौ कृतसांतौ पुंसि भवतः । एकरात्रः । द्विरात्रः । त्रिरात्रः । पूर्वाह्नः । मध्याह्नः ।

\+ **वाकादयः** ॥ १२३ ॥ एते पुंसि भवंति । उच्यते इति वाकः । अनुवाकः । संप्रवाकः । सूक्तवाकः ।

**अहः** ॥ १२४ ॥ अह इत्ययं शब्दः कृतसांतः पुंसि स्यात् । द्व्यहः । त्र्यहः ।

**पुण्यसुदिनाभ्यां नप्** ॥ १२५ ॥ पुण्यसुदिनाभ्यां परो अहो नप् भवति । पुण्याहं । सुदिनाहं ।

* **पथो श्विस्यादिः** ॥ १२६ ॥ स्यादिः स्विसंज्ञादिश्च पथशब्दो नप् भवति । विगतः पंथाः विपथं । उत्पथं । अपथं । द्विपथं । त्रिपथं । चतुःपथं ।

* **पुंसि चार्द्धर्चादयः** ॥ १२७ ॥ अर्धर्चादयः शब्दाः पुंसि नपि च वर्तंते । अर्धर्चः । अर्द्धर्चं । गोमयः । गोमयं । कुतपः । कुतपं । कषायः । कषायं । कार्षापणं । कार्षापणः ।

* **त्किःप्येऽद्दोऽजे जग्धिः** ॥ १२८ ॥ तकारादौ किति प्ये चाजे परे अदेर्जग्धिरादेशो भवति । जग्धः । जग्धवान् । जग्धिः । जग्ध्वा । प्रजग्ध्य । त्किल्य इति किं ? अदनं ।

* **घस्लृसनि** ॥ १२९ ॥ अदेर्घस्लृ-

१ । जग्धेः सिद्धेऽन्तरंगत्वात् ति किति ल्ये विधिर्वृथा । ज्ञापकस्तंतरंगाणां ल्येन बाधनमिष्यति ॥ १ ॥ शेष—द्वितीय प्रकारेणापि सिद्धं ।

देशो भवति आर्धे लुकि घञि सनि च परतः । प्रघसः । अघसत् । घासः । जिघत्सति ।

लिटि वा ॥ १३० ॥ अदेर्लिटि परे घस्लृ वा स्यात् । जघास । जक्षतुः । जक्षुः । आद । आदतुः । आदुः ।

* वेर्वय् ॥ १३१ ॥ वेञो वय् इत्ययमादेशो भवति वा लिटि । उवाय । ऊयतुः । ऊयुः । ववौ । ववतुः । ववुः ।

घ्नो वध लिङि ॥ १३२ ॥ हंतेर्वधादेशो भवति लिङि परतः । वध्यात् । वध्यास्तां । वध्यासुः । आवधिषीष्ट । आवधिषीयास्तां । आवधिषीरन् ।

लुङि ॥ १३३ ॥ हंतेर्लुङि वधो भवति । अवधीत् । अवधिष्टां । अवधिषुः ।

वेङि ॥ १३४ ॥ हंतेरिङि लुङि वधो वा स्यात् । आवधिष्ट । आवधिषातां । आवधिषत । आहत । आहसातां । आहसत ।

लुङ्येत्योर्गाः ॥ १३५ ॥ एत्योरिणिकोर्गा भवति लुङि परतः । अगात् । अगातां । अगुः । अध्यगात् । अध्यगातां । अध्यगुः ।

णौ गम ज्ञाने ॥ १३६ ॥ एत्योर्गम् भवत्यज्ञानेऽर्थे णौ परतः । गमयति । अधिगमयति । अज्ञान इति किं ? अर्थान् संप्रत्याययति ।

सनि ॥ १३७ ॥ एत्योरज्ञाने गम् स्यात् सनि परतः । जिगमिषति । अधिजिगमिषति ।

इङः ॥ १३८ ॥ इङो गम् स्यात् सनि परे । अधिजिगांसते । अधिजिगांसेते । अधिजिगांसंते ।

गाङ् लिटि ॥ १३९ ॥ इङो गाङ् भवति लिटि परतः । अधिजगे । अधिजगाते । अधिजगिरे ।

* लुङ्लङोर्णौ सन्क्योर्वा ॥ १४० ॥ इङो गाङ् वा स्यात् लुङि लङि णौ च सन्परे क्यपरे च परतः । अध्यगीष्ट । अध्यगीषातां । अध्यैष्ट । अध्यैषातां । अध्यगीष्यत । अध्यैष्यत । अधिजिगापयिषति । अध्यापिपयिषति । अध्यजीगपत् । अध्यापिपत् ।

१. [illegible] ,,इति [illegible] । [illegible]

* ब्रूस्तेर्वच्भू ॥ १४१ ॥ ब्रूञोऽस्तेश्च वच् भू इत्येतावादेशौ भवतो ऽगे परतः । वक्ता । वक्तुं वक्तव्यं । भविता । भवितुं । भवितव्यं ।

* चक्षः ख्याञ् वाचि ॥ १४२ ॥ चक्षेर्वाचि वर्तमानस्य ख्याञ् भवति । आख्याता । आख्यातुं । आख्यातव्यं । वाचीति किं ? चक्षुः । विचक्षणः । बोधेऽत्र । अभ्यान् संचक्ष्य । वर्जनेऽत्र ।

वा लिटि ॥ १४३ ॥ चक्षः ख्याञ् भवति लिटि वा । आचख्यौ । आचख्यतुः । आचचक्षे । आचचक्षाते ।

* अजोऽक्यप्घञपत्रचि ॥ १४४ ॥ अजेर्वी भवति क्यप्घञपत्रवर्जितेऽगे परतः । वीयात् । वीयास्तां । वीयते । प्रवेयं । अक्यप्घञपीति किं ? समज्या । समाजः । समजः पशूनां ।

बहुलं स्नौ ॥ १४५ ॥ अजेर्वीभावो भवति बहुलं स्नुप्रत्यये । प्रवयणो दंडः । प्राजनो दंडः । प्रवेता । प्राजिता ।

* यङ उप् ॥ १४६ ॥ यङो बहुलमुप् भवति । रोरूयते । रोरोति । रोरवीति । लालप्यते । लालपीति । लालपीति ।

* अचि ॥ १४७ ॥ यङोऽचि परतः नित्यमुप् भवति । चेच्यः । देयः । पोपुषः । लोलुवः । दर्नीध्वसः । मरीमृजः ।

+नोतः ॥ १४८ ॥ उकारांतात्परस्य यङोऽच्युप् न स्यात् । रोरूयः । नोनूयः । तोष्टूयः ।

* भुभूस्थेणिङ्पिबः सेर्मे ॥ १४९ ॥ भुसंज्ञेभ्यो भ्वादिभ्यश्च सेरुप् भवति मे परतः । अदात् । अधात् । अभूत् । अस्थात् । अगात् । अध्यगात् । अपात् । मे इति किं ? व्यत्यभविष्ट ।

वा घ्राधेट्छाशासः ॥ १५० ॥ घ्रादिभ्यः सेरुप् स्यात् वा मे परतः । अघ्रात्, अघ्रासीत् । अछात्, अछासीत् । अधात्, अधासीत् । असात्, असासीत् ।

* तन्भ्यस्तथासे ॥ १५१ ॥ तनादिभ्यः सेर्वोप् भवति थासि ते च परतः । अतथाः । अतनिष्ठाः ।

असत । असनिष्ट । असाथाः । असानिष्ठाः । असात । असनिष्ट । अक्षत । अक्षयाः । अक्षणिष्ठाः । अक्षत । अक्षणिष्ट ।

✓ * णिव्यार्षाद्यन्वणिञोः ॥ १५२ ॥ णिदंतात् व्यार्षादार्षत्यांताच परयोः युवत्यग्रेरणिञोरुप् भवति । तिकस्यापत्यं वृद्धं तैकायनिः । तस्यापत्यं युवा प्राग्द्रेरण उपि तैकायनिः पिता । तैकायनिः पुत्रश्च । गैमतायनिः पिता । गैमतायनिः पुत्रश्च । कुरोरपत्यं कौरव्यः । तदपत्यं युवा इञ उपि कौरव्यः पिता पुत्रश्च । गार्ग्यः पिता । गार्ग्यः पुत्रः । वासिष्ठः पिता पुत्रश्च । वैश्वामित्रः पिता पुत्रश्च । ण्यण्णंतात्—इञ उप् । णिव्यार्षादिति किं ? कुहडस्यापत्यं कौहडः । शिवादण् । तदपत्यं कौहडिः । यूनीति किं ? वामरथस्यापत्यं वामरथ्यः । तस्य शिष्याः वामरथाः । अणिञोरिति किं ? दाक्षिः पिता । दाक्षायणः पुत्रः ।

* प्राचिञोऽतौल्वल्यादेः ॥ १५३ ॥ प्राचां गोत्रे य इञ् तदंतात् युवत्यस्योप् भवति तौल्वल्यादीन् वर्जयित्वा । पन्नागारस्यापत्यं पान्नागारिः पिता । तदपत्यं पान्नागारिः पुत्रः । एवं—मांथरेषणिः पिता पुत्रश्च । प्राचीति किं ? प्लाक्षिः पिता । प्लाक्षायणः पुत्रः । इञ इति किं ? राघवः पिता । राघविः पुत्रः । अतौल्वल्यादेरिति किं ? तौल्वलिः पिताः । तौल्वलायनः पुत्रः । दालीपिः पिता । दालीपायनः पुत्रः ।

* पैलादेरविप्रात् ॥ १५४ ॥ पैलादेरविप्राच्च युवत्यस्योप् भवति । पीलाया अपत्यं पैलः पिता । तदपत्यं पैलः पुत्रः । शालंकिः पिता पुत्रश्च । सात्यकिः पिता पुत्रश्च । अविप्रात्—आंगः पिता । आंगः पुत्रः । मागधः पिता पुत्रश्च । कालिंगः पिता पुत्रश्च ।

* देञो द्रेः ॥ १५५ ॥ द्रिसंज्ञो य इञ् तदंतात् परस्य युवत्यस्येप् वा भवति । उदुंबरस्यापत्यं औदुंबरिः पिता । तदपत्यं औदुंबरिः पुत्रः । औदुंबरायणो वा । द्रेरिति किं ? दाक्षिः पिता । दाक्षायणः पुत्रः ।

* बहुष्वास्त्रियां ॥ १५६ ॥ द्रिसंज्ञस्य त्यस्योप् भवति बहुषु वर्तमानस्यास्त्रियां । पंचालस्यापत्यानि पंचालाः । इक्ष्वाकवः । अंगाः । वंगाः । कुरवः । बहुष्विति किं ? पांचालः । पांचालौ । अस्त्रियामिति किं ? पांचाल्यः । आंग्यः । वांग्यः । द्रेरिति किं ? औपगवाः ।

* यस्कादेर्गोत्रे ॥ १५७ ॥ यस्कादिभ्यो गोत्रे विहितस्य त्यस्योप् भवति बहुष्वस्त्रियां । यस्कस्यापत्यानि यस्काः । लह्याः । यस्कादेरिति किं ? कापटवाः । गोत्र इति किं ? यस्कस्येमे यास्काः छात्राः ।

* यञञोऽगोपवनादेः ॥ १५८ ॥ यञोऽञश्च गोत्रे बहुषूप् भवति गोपवनादिभ्यो विहितं विहाय । गर्गाः । वत्साः । वैदः । वैदौ । विदाः । और्वः । और्वौ । उर्वाः । अगोपवनादेरिति किं ? गोपवनस्यापत्यानि गौपवनाः । श्यामाकाः ।

कौंडिन्यागस्त्ययोः कुंडिनागस्ती च ॥ १५९ ॥ कौंडिन्यागस्त्य इत्येतयोः गोत्रे बहुषूब्भवत्यस्त्रियां तयोः कुंडिन अगस्ति इत्येतावादेशौ भवतः । कुंडिन्याः अपत्यानि कुंडिनाः । अगस्तयः ।

* भृगुकुत्सवसिष्ठगोतमांगिरोऽत्रेः ॥ १६० ॥ भृग्वादिभ्यो गोत्रे बहुषु यस्त्यः तस्योप् भवति । भृगोरपत्यानि भार्गवः । भार्गवौ । भृगवः । कुत्साः । वसिष्ठाः । गोतमाः । अंगिरसः । अत्रयः । अस्त्रियामिति किं ? भार्गव्यः । कौत्स्यः स्त्रियः ।

* बह्वचः प्राग्भरतेष्विञः ॥ १६१ ॥ बह्वचो मृदो य इञ् तस्य बहुषूब्भवति प्राग्गोत्रे भरतगोत्रे च । पान्नागारिः । पान्नागारी । पन्नागाराः । एवं—मंथरेषणाः । क्षीरकलभाः । भरतेषु-औद्दालकिः । औद्दालकी । उद्दालकाः । युधिष्ठिराः । बह्वच इत्येव । वैकयः । पौष्पयः । प्राग्भरतेष्विति किं ? बालाकयः । हास्तिदासयः ।

* वोपकादेः ॥ १६२ ॥ उपकादिभ्यो गोत्रे बहुषु यस्त्यः तस्य वोप् भवति । उपकस्यापत्यानि उपकाः । औपकायनाः । लमकाः । लामकायनाः । कपिष्ठलाः । कापिष्ठल्यः ।

* तिककितवादेर्द्वंद्वे ॥ १६३ ॥ तिककित-

कादीनां द्वंद्वे बहुषु यस्यस्तस्योप् भवत्यस्त्रियां । तैकायनश्च कैतवायनश्च तिककितवाः । औरसायनश्च कांकटयश्च उरसलंकटाः । कंबरभंडीरथाः ।

+ वेया द्र्याद्वेः ॥ १६४ ॥ द्वंद्वे बहुत्वे वर्तमानो यो द्रयादिस्तस्य तयोप् भवति यथापूर्वं । आंगश्च वांगश्च सौह्मश्च अंगवंगसुह्माः । यस्कलह्मबुह्माः । गर्गवत्सवाजाः । कुंडिनागस्त्यवसिष्ठाः । तयेति किं ? यास्कलह्माः छात्राः ।

+ वाऽन्येन ॥ १६५ ॥ द्रयादेर्वोप् भवति अन्येन सह द्रयादीनां द्वंद्वे बहुत्वे । आंगश्च वांगश्च दाक्षिश्च अंगवंगदाक्षयः । आंगवांगदाक्षयः । गर्गवत्सोपगवाः । गार्ग्यवात्स्योपगवाः ।

यञादेर्द्व्येकेषु तायाः षे ॥ १६६ ॥ यञादेस्तया वोप् भवति द्वयोरेकस्मिंश्च वर्तमानस्य तायाः षसे । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं । गार्ग्यकुलं । विदकुलं । बैदकुलं । अगस्तिकुलं । आगस्त्यकुलं । यञादेरिति किं ? आंगकुलं । द्व्येकेष्विति किं ? गर्गाणां कुलं गर्गकुलं । ताया इति किं ? पारमगार्ग्यः । ष इति किं ? गार्ग्यस्य समीपं उपगार्ग्यं ।

सुपो धुमृदोः ॥ १६७ ॥ धुमृदोरंतर्गतस्य सुप उप् भवति । पुत्रमिच्छत्यात्मनः पुत्रकाम्यति । पटीयति । औपगवः । राजपुरुषः । यतः । यत्र । शपल्गुः ।

* षेः ॥ १६८ ॥ षेः परस्य सुप उप् भवति । ततः । तत्र । कृत्वा । च । वा । ह । अह । एव ।

हात् ॥ १६९ ॥ हसात् परस्य सुप उप् भवति । अधिस्त्रि । उपवधु । एकमुनि । द्विमुनि ।

नातोऽम्त्वकायाः ॥ १७० ॥ हादकारांतात् सुपो नोब्भवति अम् तु भवति कां विहाय । उपकुंभं तिष्ठति । पद्म देहि त्वं वा । अत इति किं ? उपाग्नि । अकाया इति किं ? उपकुंभादानय । उपमणिकादानय ।

* भाया वा ॥ १७१ ॥ हादकारांताद् भाया वाऽम् भवति । उपकुंभं । उपकुंभेन । उपकुंभैः कृतं ।

१ । यत्र पूर्वं यत्र विधिर्विधेयो विकारो विकल्पश्च तत्र द्वौ सुनेयौ ।

* ईपः ॥ १७२ ॥ हादकारांतादीपो वाऽम् भवति । उपकुंभे निधेहि । उपकुंभं निधेहि ।

+ स्थिनद्यृद्धेः ॥ १७३ ॥ स्थ्यवयवान्नदीवाचिनात् अवृद्धिलक्षणाच्च हादकारांतादीपोऽम् भवति नित्यं । एकविंशतिभारद्वाजं । त्रिकोसलं । द्वियमुनं वसति । सप्तगंगं वसति । त्रिगोदावरं वसति। सुमद्रं । सुमगधं ।

+ परस्परादेर्वाम्सुपोऽपुंसि ॥ १७४ ॥ परस्परादीनामपुंसि सुपः आम् वा भवति । इमे सख्यौ परस्परां भोजयतः । परस्परं भोजयतः । आभिः सखीभिः परस्परां भोज्यते । परस्परेण वा भोज्यते । इमाः सख्यः परस्परां प्रयच्छंति । परस्परस्मै वा प्रयच्छंति । इमे सख्यौ अन्योन्यां भोजयतः । अन्योन्यं वा भोजयतः । आभिः सखीभिरन्योन्यां भोज्यते अन्योन्येन वा भोज्यते । इमे सख्याविरतेतरां इतरेतरं वा भोजयतः । इमे कुले परस्परां परस्परं अन्योन्यां अन्योन्यं इतरेतरां इतरेतरं वा भोजयतः। कुलैःपरस्परेण परस्परां अन्योन्येन अन्योन्यां इतरेतरां इतरेतरेण वा भोज्यते । कुलानि परस्परां परस्परस्मै वा प्रयच्छंति । अपुंसीति किं ? परस्परमिमे जनाः भोजयंति । अन्योन्यमिमे जनाःभोजयंति ।

---

इति जैनेंद्र ( शब्दार्णव ) व्याकरणे
शब्दार्णवचंद्रिकायां लघुवृत्तौ
प्रथमोऽध्यायः ।



# अथ द्वितीयोऽध्यायः।

## प्रथमः पादः।

स्यः॥ १ ॥ स्य इत्ययमधिकारो वेदितव्य आ ष्वः। वक्ष्यति–तव्यानीयौ। कर्तव्यः। करणीयः।

परः ॥ २ ॥ धोर्मृदो वा यस्त्यसंज्ञको विधीयते स पर एव भवति। कर्तव्यः। करणीयः। अजा। औपगवः।

+ कित्गुप्तिजः सन् भिषज्यादिनिंदाक्षमे ॥ ३ ॥ किद् गुप् तिज् इत्येतेभ्यः सन् भवति भिषज्यादावर्थे निंदायां क्षमायां च। ज्वरं चिकित्सति। शत्रुं चिकित्सति। जुगुप्सते। तितिक्षते। भिषज्यादाविति किं? संकेतयति। गोपायति। तेजयति।

* निशानार्जवजिज्ञासावैरूप्ये शान्दान्मान्बधादीश्चस्य ॥ ४ ॥ शानादिभ्यः सन् भवति निशानादिष्वर्थेषु चस्य च दीः। शीशांसति। शीशांसते। दीदांसति। दीदांसते। मीमांसते। बीभत्सते। निशानादाविति किं? निशानयति। निदानं। मानिता। बाधयति।

✓ तुमीच्छायां धोर्वोप् ॥५॥ धोरिच्छायां कृते तुमि सन् वा भवति तुमश्चोप्। भोक्तुमिच्छति बुभुक्षते। चिकीर्षति। जिहीर्षति। इच्छायामिति किं? कर्तुं गच्छति। धोरिति किं? प्रकर्तुमैच्छत् प्राचिकीर्षत्।

+ न सनः ॥६॥ तुमि इच्छायां धोर्यो विहितः सन् तदंतात् सन् न भवति। चिकीर्षितुमिच्छति। तुमीच्छायामिति किं? चिचिकित्सिषति।

* स्वेपः काम्यः ॥ ७ ॥ स्वस्यात्मनो यदिबंतं तस्मादिच्छायां वा काम्यो भवति। पुत्रमिच्छत्यात्मनः पुत्रकाम्यति। वस्त्रकाम्यति। स्वः काम्यति। इदंकाम्यति। स्वग्रहणं किं? पुत्रमिच्छति अध्यापकः परस्य।

* क्यजम्रिमः ॥ ८ ॥ स्वस्येबंतात् म्रिमकारांतं त्यक्त्वा क्यज् भवति। स्वस्य पुत्रमिच्छति पुत्रीयति। वस्त्रीयति। कंबलीयति। वाच्यति। अम्रिम इति किं? उच्चैरिच्छति। किमिच्छति।

* गौणादीपश्चाचारे ॥ ९ ॥ गौणादिबंतादीबंतादाचारेऽर्थे क्यच् स्यात्। पुत्रमिवाचरति पुत्रीयति छात्रं। वस्त्रीयति कंबलं। प्रासादे इवाचरति प्रासादीयति कुड्यां।

+ कर्तुः क्विः ॥ १० ॥ कर्तुः गौणादाचारेऽर्थे क्विर्भवति। अश्व इवाचरति अश्वति गर्दभः। गर्दभत्यश्वः। पुरुषति स्त्री। कर्तुरिति किं? पटीयति कंबलं।

+ गल्भक्लीबहोडाङ्‌ङित् ॥ ११ ॥ एभ्यः क्विङित् भवति। गल्भ इवाचरति गल्भते। क्लीबते। होडते।

* क्यङ् च ॥ १२ ॥ गौणादाचारेऽर्थे कर्तुः क्यङ् भवति। श्येन इवाचरति काकः श्येनायते। कुमुदं पुष्करायते। अश्वायते गर्दभः। गर्दभायतेऽश्वः। चकारो बाधनार्थश्चकार।

* सः खं वा ॥ १३ ॥ गौणात् कर्तुराचारेऽर्थे क्याङि परतः सकारस्य वा खं स्यात्। मथितं पयस्यते। मथितं पयायते।

* अप्सरसः ॥ १४ ॥ क्याङि परतः सखं भवत्यप्सरसः। अप्सरायते कन्या।

+ तद्वत्योजःस्वप्नात् ॥ १५ ॥ आभ्यां तद्वति वर्तमानाभ्यां क्यङ् स्यात्। ओजस्वीवाचरति ओजायते। ओजस्यते। स्वप्नवानिवाचरति स्वप्नायते। तद्वतीति किं? स्वप्न इवाचरति।

* भृशादेश्च्व्योस्तः ॥ १६ ॥ भृशादेश्च्व्यर्थे क्यङ् भवति सकारतकारयोश्च खं। अभृशो भृशो भवति भृशायते। शीघ्रायते। मद्रायते। उन्मनस्-उन्मनायते। वेहत्–वेहायते।

शब्दकोहितादिभ्यः क्यष् ॥ १७ ॥ शब्दं-

१ आदिशब्देन विप्रहविनाशयोर्ग्रहणं।

भ्यो लोहितादिभ्यश्च च्व्यर्थे क्यष् भवति । दमदमद् भवति दमदमायति । दमदमायते । हडहडायति । हडहडायते । लोहितायति । लोहितायते । निद्रायति । करुणायति ।

* सुखादेर्भुजीषः ॥ १८ ॥ सुखादेरिबंतात् भुज्यर्थे क्यङ् भवति । सुखं भुंक्ते सुखायते । दुःखायते । भुजीति किं ? सुखं वेदयते प्रसाधको देवदत्तस्य ।

+ कष्टकक्षकृच्छ्रसत्रगहनात् पापे चिकीर्षौ ॥१९॥ कष्टादेरिबंताद् पापे वर्तमानात् चिकीर्ष्यर्थे क्यङ् स्यात् । कष्टं चिकीर्षति कष्टायते । कक्षायते । कृच्छ्रायते । सत्रायते । गहनायते ।

बाष्पोष्मफेनादुद्वमौ ॥ २० ॥ बाष्पादेरिबंतादुद्वमत्यर्थे क्यङ् भवति । बाष्पमुद्वमति बाष्पायते । ऊष्माणं उद्वमति ऊष्मायते । फेनायते नदी ।

* शब्दादेः कृवि ॥ २१ ॥ शब्दादेरिबंतात् करोत्यर्थे क्यङ् स्यात् । शब्दं करोति शब्दायते । वैरायते । कलहायते । अभ्रायते । कण्वायते । मेघायते ।

* रोमंथादुद्वर्ते ॥ २२ ॥ रोमंथशब्दादुद्वर्ते वर्तमानात् कृञर्थे क्यङ् भवति । रोमंथायते गौः । उद्वर्त इति किं ? रोमंथं करोति कीटकः ।

* तपसः क्यच् ॥ २३ ॥ तपःशब्दादिबंतात् कृञि क्यच् भवति । तपः करोति तपस्यति ।

* नमोवरिवश्चित्रङः पूजासपर्याविस्मये ॥ २४ ॥ एभ्यः पूजादिष्वर्थेषु वर्तमानेभ्यः कृञर्थे क्यच् भवति । नमस्करोति नमस्यति मुमतिनाथं । वरिवस्यति गुरून् । चित्रीयते । कित्वाद् । पूजादिष्विति किं ? नमस्करोति ।

+ निरस्यंगेभ्यो णिङ् ॥ २५ ॥ अंगेभ्य इबंतेभ्यो निरस्यर्थे णिङ् भवति । हस्तं निरस्यति हस्तयते । पादयते । निरसीति किं ? हस्तमाचष्टे हस्तयति ।

* पुच्छभांडाद्यच्चौ ॥ २६ ॥ आभ्यां अस्यर्थे चिमर्थे च णिङ् भवति । पुच्छमुदस्यति उत्पुच्छयते । परिपुच्छयते । भांडं संचिनोति संभांडयते । परिभांडयते ।

* चीवरात्परिधानार्जनेः ॥ २७ ॥ चीवरात् परिधाने अर्जने च णिङ् भवति । चीवरं परिधत्ते समर्जयति वा परिचीवरयते भिक्षुः ।

+ मृदो ध्वर्थे णिञ् बहुलं ॥२८॥ मृदो धनामर्थे णिञ् भवति बहुलं । सूत्रं करोति सूत्रयति व्याकरणं । मुंडयति माणवकं । मिश्रयति धान्यं । श्लक्ष्णयति वस्त्रं । पाशं विमोचयति विपाशयति । रूपं दर्शयति रूपयति । पयो भुंक्ते-पयो व्रतयति । सावद्यं न भुंक्ते-सावद्यं व्रतयति । लोमान्यनुमार्ष्टि अनुलोमयति । वस्त्रेण समाच्छादयति संवस्त्रयति । सेनया अभियाति अभिषेणयति । वर्मणा संनह्यते संवर्मयति । वीणयोपगायति उपवीणयति । श्लोकैरुपस्तौति उपश्लोकयति । न च भवति-आख्यानमाचष्टे ।

+ श्वेताश्वाश्वतरगालोडिताह्वारकस्या— श्वतरेतकत्वं च ॥ २९ ॥ एषां णिच्यश्वतरेतकानां लं भवति । श्वेताश्वमाचष्टे श्वेतयति । अश्वतरं-अश्वयति । गालोडितं-गालोडयति । आह्वारकं-आह्वारयति । णिञ् संनियोगार्थश्चकारः ।

* हलिकलित्वचाः ॥ ३० ॥ हलिकलित्वचां णिच्यदंतता निपात्या । हलिं गृह्णाति हलयति । कलिं-कलयति । त्वचं-त्वचयति । अत्वनिपातः किं ? अजहलत् ।

* वेदार्थसत्यस्याः ॥ ३१ ॥ एषां णिच्या-कारांतादेशो भवति । वेदमाचष्टे वेदापयति । अर्थापयति । सत्यापयति ।

* धोर्यङ् भृशाभीक्ष्णेऽशुभरुचेः ॥ ३२ ॥ शुभिरुचिमुक्ताद्धोर्भृशेऽभीक्ष्णे चार्थे यङ् भवति । भृशं पुनः पुनर्वा पठति पापठ्यते । देदीप्यते । बोभुज्यते । भृशाभीक्ष्ण इति किं ? ओदनं पचति । अशुभरुचेरिति किं ? भृशं शोभते । पुनः पुना रोचते ।

+ सूचिमूत्रिसूत्र्यट्यर्त्यशूर्णोः ॥ ३३ ॥

एभ्यो भृशाभीक्ष्ण्ये यङ् भवति । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अटाट्यते । अशाश्यते । अरार्यते । ऊर्णोनूयते । नियमार्थोऽयं योगः । हलादिभ्योऽनेकाज्भ्यः सूच्यादिभ्य एव, एकाज्भ्योऽजादिभ्योऽत्यादिभ्य एव यङ् भवति नान्यतः । भृशं चकास्ति । पुनः पुनरीहते ।

* गत्यर्थात्कुटिले ॥ ३४ ॥ गत्यर्थाद्धोः कुटिलेऽर्थे यङ् स्यात् । कुटिलं क्रामति चंक्रम्यते । जंगम्यते ।

लुपसदचरजपजभदहदशगॄदशो गर्ह्ये ॥ ३५ ॥ एभ्यो गर्ह्येऽर्थे यङ् भवति । गर्हितं लुंपति लोलुप्यते । सासद्यते । चंचूर्यते । जंजप्यते । जंजभ्यते । दंदह्यते । जेगिल्यते । दंदश्यते । गर्ह इति किं ? स्वर्गृहे सुखं सीदति ।

* चुरादिभ्यो णिच् ॥ ३६ ॥ एभ्यो णिच् भवति स्वार्थे । चोरयति । चिंतयति । आडयति । लालयति । पीडयति । भक्षयति । आच्छादयति । मंडयति । छर्दयति । चेतयते । मंत्रयते ।

+ युजादेर्वा ॥ ३७ ॥ युजादिभ्यो वा णिच् स्यात् स्वार्थे । योजयति । योजति । अर्चयति । अर्चति । साहयति । सहति । ईरयति । ईरति । लाययति । लयति । वर्जयति । वर्जति । वारयति । वरति । वारयते । वरते । भावयति । भवति । आपयति । आपति ।

+ भुवः प्राप्तौ णिङ् ॥ ३८ ॥ भुवो णिङ् भवति प्राप्तौ वा । भावयते । भवते ।

हेतुमति ॥ ३९ ॥ हेतुमति ण्यर्थे णिच् भवति । कटं कारयति । ओदनं पाचयति । छात्रं पाठयति ।

कंड्वादेर्यक् ॥ ४० ॥ कंड्वादेर्यगागमो भवति स्वार्थे । कंडूयति । कंडूयते । वल्गूयति । मंतूयति । मिषज्यति । असूयति ।

गुपूधूपविच्छिपणिपनेरायः ॥ ४१ ॥ एभ्य आयत्यो भवति । गोपायति । धूपायति । विच्छायति । पनायते । पणायते ।

कमृतेर्णिङीयङ् ॥ ४२ ॥ आभ्यां यथासंख्यं णिङ् ईयङ् इत्येतौ स्तो भवतः । कामयते । ऋतिः सौत्रो धुः । घृणार्थो गत्यर्थश्च । ऋतीयते ।

* वाऽऽर्धे त्रयः ॥ ४३ ॥ अगे परे गुपादिभ्य आयो णिङीयङ् च त्रयो वा भवंति । गोपायांचकार । जुगोप । धूपायिता । धूपिता । कामयिता । कमिता । ऋतीयिता । अर्तिता ।

तदंता धवः ॥ ४४ ॥ येऽनुक्रांताः सनादयस्तदंताः शब्दाः धुसंज्ञा भवंति । तथा चोदाहृतं ।

+ गिर्नोऽस्त्ये ॥४५॥ गिसंज्ञको धुर्न भवत्यस्त्ये परतः । अभ्यमनायत । प्रासादीयत् । गिरिति किं ? अमहापुत्रीयत् । अस्त्य इति किं ? औत्सुकायत ।

स्यतासी लृलुटोः ॥ ४६ ॥ धोः स्यतासी इत्येतौ स्तो भवतः लृलुटो परतः । करिष्यति । अकरिष्यत् । कर्त्तास्मि । भोक्ष्यते । अभोक्ष्यत । भोक्ता ।

* कास्यनेकाज्भ्यस्त्यामलिड्वत् कृञ्चास्ति ॥४७॥ कासेरनेकाज्भ्यः त्यांतेभ्यश्च लिड्वत् कृञि परे आम् भवति । कासांचक्रे । कासाम्बकार । चकासाम्बभूव । चकासामास । दरिद्राञ्चकार । दरिद्राम्बभूव । दरिद्रामास । बुभूषाञ्चकार । बुभूषाम्बभूव । बुभूषामास । गवाञ्चकार । गवाम्बभूव । गवामास । लोलूयाञ्चक्रे । कारयाञ्चकार । कारयाम्बभूव । कारयामास ।

+ सरीजादिदयायासोऽनृच्छ्यूर्णोः ॥४८॥ सरीरिजादेर्धोः ऋच्छत्यूर्णवर्जितात् दयादेश्च लिड्वत् कृञ्याम् भवति । इंदाम्बभूव । इंदाञ्चकार । इंदामास । एधांचक्रे । दयांचक्रे । पलायांचक्रे । आसांचक्रे । अनृच्छूर्णोरिति किं ? आनर्च्छ । प्रोर्णुनाव ।

* वोषविदजागृसमिधः ॥ ४९ ॥ एभ्यो लिड्वत् कृञ्याम् स्यात् वा । ओषाञ्चकार । ओषाम्बभूव । ओषामास । उवोष । विदाञ्चकार । विदाम्बभूव । विदामास । विवेद । जागराञ्चकार । जागराम्बभूव । जागरामास । जजागार । समिधाञ्चक्रे । समीधे ।

भीह्रीभृहोश्लुवत् ॥ ५० ॥ भ्यादेर्लिड्वत्कृञ्याम् वा भवति श्लौव कार्यं च । बिभयाञ्चकार ।

१. [illegible]

बिभयाञ्चभूव । बिभयामास । बिभाय । जिह्रयाञ्चकार । जिह्रयाम्बभूव । जिह्रयामास । जिह्राय । बिभराञ्चकार । बिभराम्बभूव । बिभरामास । बभार । जुहवांचकार । जुहवांबभूव । जुहवामास । जुहाव ।

* विदां कु लोटि ॥ ५१ ॥ विदां कु वा निपात्यो लोटि परतः । विदांकरवाणि । वेदानि । विदांकरवाव । वेदाव । विदांकरवाम । वेदाम । विदांकुरु । विद्धि । विदांकुरुतं । वित्तं । विदांकुरुत । वित्त । विदांकरोतु । वेत्तु । विदांकुरुतां । वित्तां । विदांकुर्वंतु । विदंतु ।

सिर्लुङि ॥ ५२ ॥ धोः सिस्लो भवति लुङि परतः । अकार्षीत् । अभैत्सीत् ।

स्पृशमृशकृषतृपदृपो वा ॥ ५३ ॥ एभ्यो लुङि सिर्वा स्यात् । अस्प्राक्षीत् । अस्पार्क्षीत् । अस्पृक्षत् । अम्राक्षीत् । अमार्क्षीत् । अमृक्षत् । अक्राक्षीत् । अकार्क्षीत् । अकृक्षत् । अत्राप्सीत् । अतार्प्सीत् । अतृपत् । अद्राप्सीत् । अदार्प्सीत् । अदृपत् ।

* इकः शलोऽनिटोऽदृशः क्सः ॥ ५४ ॥ इकः परो यः शल् तदंतात् दृशिवर्जितात् धोरनिटः लुङि क्सो भवति । अलिक्षत् । अधिक्षत् । अधुक्षत् । इक इति किं ? अधाक्षीत् । शल इति किं ? अभैत्सीत् । अनिट इति किं ? अमोषीत् । अदृश इति किं ? अद्राक्षीत् ।

श्लिषः स्वार्थे ॥ ५५ ॥ श्लिषः स्वार्थे लुङि क्सो भवति । आश्लिक्षत् भार्यां दत्तः । स्वार्थ इति किं ? उपाश्लिषत् जतु च काष्ठं च ।

* णिकमिश्रिद्रुस्रोः कर्तरि ङः ॥ ५६ ॥ ण्यंतेभ्यः कमादिभ्यश्च कर्तृवाचिनि लुङि परतः ङः भवति । अचीकरत् । अबीभवत् । अचकमत । अशिश्रियत् । अदुद्रुवत् । असुस्रुवत् । कर्तरीति किं ? अकारयिषातां कटौ पुत्रेण ।

वा धेट्श्व्योः ॥ ५७ ॥ आभ्यां लुङि परतः ङः वा स्यात् । अदधत् । अधात् । अधासीत् । अशिश्वियत् । अश्वत् । अश्वयीत् ।

* वच्यस्यख्यातेरङ् ॥ ५८ ॥ एभ्यः कर्तरि लुङ्यङ् भवति । अवोचत् । पर्यास्थत । आख्यत् । आख्यतां । आख्यन् ।

लिपिसिच्ह्वोऽर्तेः ॥ ५९ ॥ एभ्यो लुङ्यङ् भवति । अलिपत् । असिचत् । आह्वत । आरत् ।

ते वा ॥ ६० लिपादेर्ते लुङ्यङ् वा भवति । अलिपत । अलिप्त । असिचत । असिक्त । अह्वत । अह्वास्त । समारत । समार्त ।

* द्युतपुष्यादिलिस्सर्तिशास्तेर्मे ॥ ६१ ॥ द्युतादेः पुष्यादेः लृकारेद्भ्यः सर्तिशास्तिभ्यां च मे लुङ्यङ् भवति । व्यद्युतत् । व्यलुठत् । व्यकठत् । अपुषत् । अकुपत् । अशुषत् । अगमत् । अपतत् । असरत् । अशिषत् । मे इति किं ? व्यद्योतिष्ट । व्यत्यपुषत ।

वेरितः ॥ ६२ ॥ इरसंज्ञेतो धोर्मे लुङ्यङ् वा भवति । अभिदत् । अभैत्सीत् । अभिदत् । अभैत्सीत् ।

* जृभ्रिस्तंभुम्रुचुम्लुचुग्रुचुग्लुचुग्लुंचः ॥ ६३ ॥ एभ्यो लुङ्यङ् वा स्यात् । अजरत् । अजारीत् । अश्वत् । अश्वयीत् । अस्तभत् । अस्तंभीत् । अम्रुचत् । अम्रोचीत् । अम्लुचत् । अम्लोचीत् । अग्रुचत् । अग्रोचीत् । अग्लुचत् । अग्लोचीत् । अग्लुंचत् । अग्लुंचीत् ।

* दीपजनबुधपूरितायिप्यायस्ते ञिः ॥ ६४ ॥ दीपादेः कर्तरि लुङि ते परतः ञिर्वा भवति । अदीपि । अदीपिष्ट । अजनि । अजनिष्ट । अबोधि । अबुद्ध । अपूरि । अपूरिष्ट । अतायि । अतायिष्ट । अप्यायि । अप्यायिष्ट । त इति किं ? अदीपिषातां ।

पदः ॥ ६५ ॥ पदः लुङि ते परतः ञिर्भवति । उदपादि मैत्र्यं । समापादि सस्यं ।

* कर्मणि ॥ ६६ ॥ कर्तृत्वेन विवक्षिते कर्मणि लुङि ते ञिर्भवति । अकारि कटः स्वयमेव । अकृत कटः स्वयमेव । अलावि केदारः । अलविष्ट केदारः स्वयमेव ।

---

१। सूत्रं वचिरादेशो "वक्तुं वाँ" इति धातुसूत्रयोर्वचिरादेशमेव ज्ञापकं गेऽप्यादेशस्य ।

**दुहश्च ॥ ६७ ॥** दुहेः कर्तृकर्मणि लुङि ते वा ञिर्भवति । अदोहि गौः स्वयमेव । अदुग्ध गौः स्वयमेव । नियमोऽयं—दुह एव हलंतात् ञिर्वा नान्यतः।अभेदि कुशूलःस्वयमेव। अछेदि काष्ठःस्वयमेव।

*** कौ ॥ ६८ ॥** धोर्भावर्थे लुङि ते ञिर्भवति । आसि भवता । अहारि भागो भवता । अकारि कटो भवता ।

**न रुधः ॥ ६९ ॥** रुधः कर्मकर्तरि ञिर्न स्यात् । अरुद्ध गौः स्वयमेव ।

**तपोऽनुतापे ॥ ७० ॥** तपेः कर्मकर्तरि अनुतापे च ञिर्न स्यात् । अतप्त तपः स्वयमेव साधुः । अन्ववातप्त पापेन कर्मणा । अनुतापे चेति किं ? अतापि पृथ्वी राज्ञा ।

**यक् दुहः ॥ ७१ ॥** दुहेः कर्मकर्तरि यक् न स्यात् । दुग्धे गौः स्वयमेव । अदुग्ध गौः स्वयमेव ।

**नमः शप्तु ॥ ७२ ॥** नमेः कर्मकर्तरि यग् न भवति शप्तु स्यात् । नमते दंडः स्वयमेव । अनमत दंडः स्वयमेव ।

**+ दधिणिश्रिश्रंथिग्रंथिवचस्नोश्च ञिश्च।७३।** दे धीनां ण्यंतानां श्रथादीनां च नमेश्च ञिर्यक् च न भवति । व्यकृत सैंधवाः स्वयमेव । विकुर्वंते सैंधवाः स्वयमेव । अपीपचत औदनः स्वयमेव । पाचयंते ओदनः स्वयमेव । उदशिश्रियत दंडः स्वयमेव । उच्छ्रयते दंडः स्वयमेव । अश्रंथिष्ट मेखला स्वयमेव । श्रथ्नीते मेखला स्वयमेव । अग्रंथिष्ट मेखला स्वयमेव । ग्रथ्नीते मेखला स्वयमेव । अवोचत कथा स्वयमेव । ब्रूते कथां स्वयमेव । प्रास्नोष्ट गौः स्वयमेव । प्रस्नुते गौः स्वयमेव । अनंस्त दंडः स्वयमेव । नमते दंडः स्वयमेव ।

**+ भूषार्थसन्किरादीनां यक् च ॥ ७४ ॥** भूषार्थानां सन्नंतानां किरादीनां च कर्मकर्तरि यक् ञिश्च न भवति । भूषयते कन्या स्वयमेव । अबूभुषत कन्या स्वयमेव । मंडयते कन्या स्वयमेव । अममंडत कन्या स्वयमेव । अलंकुरुते कन्या स्वयमेव । अलमकृत कन्या स्वयमेव । अलमचीकरत कन्या स्वयमेव । चिकीर्षते कटः स्वयमेव । अचिकीर्षिष्ट स्वयमेव कटः । बिभित्सते कुशूलः स्वयमेव । अबिभित्सिष्ट कुशूलः स्वयमेव । किरते हस्ती स्वयमेव । अकीर्ष्ट हस्ती स्वयमेव । गिरते ग्रासः स्वयमेव । अगीर्ष्ट ग्रासः स्वयमेव ।

**कुषरजोः श्यो मे वा ॥ ७५ ॥** कुषि रंजी इत्यंताभ्यां कर्मकर्तरि मे श्यो वा भवति । कुष्यति पादः स्वयमेव । कुष्यते पादः स्वयमेव । रज्यति वस्त्रं स्वयमेव । रज्यते वस्त्रं स्वयमेव । यदा श्यो न भवति तदा यग्दाविधी स्तः ।

**+ कर्मवद्धेऽश्रवादीनां ॥ ७६ ॥** श्रवत्यादिवर्जितानां धूनां कर्मकर्तरि विहिते लकारे कर्मवत् कार्यं भवति । भिद्यते कुशूलः स्वयमेव । लूयते लूयमानो वा केदारः स्वयमेव । अपाच्योदनः स्वयमेव । अश्रवादीनामिति किं ? भवत्युदकं स्वयमेव । गलत्युदकं स्वयमेव ।

*** तपस्तपोऽधेः ॥ ७७ ॥** तपेर्धोः तपोऽधेः तपःकर्मकस्य कर्ता कर्मवद् भवति । तप्यते तपः साधुः । अतप्यत तपस्तापसः । तपोऽधेरिति किं ? उत्तपति सुवर्णं सुवर्णकारः ।

**+ सृजः श्राद्धे ॥ ७८ ॥** सृजः श्राद्धवति कर्तरि लकारे सति कर्मवत् कार्यं स्यात् । सृज्यते माल्यं धार्मिकः। श्राद्ध इति किं? सृजति माल्यं मालिकः।

**+ क्वचित् करणे ॥ ७९ ॥** धोः करणे कर्तरि लकारे सति क्वचित् कर्मवत् कार्यं भवति । परिवारयंति पुरुषाः कंटकैर्वृक्षं । परिवारयंते कंटकाः स्वयमेव वृक्षं । क्वचिदिति किं ? साधु असिश्छिनत्ति ।

**गे यक् ॥ ८० ॥** धोर्भिवाचिनि गे परतः यग् भवति । सुप्यते भवता । आस्यते भवता ग्लायते लतया । क्रियते कटः । भ्रियते कर्मकारः । ह्रियते भारः ।

**कर्तरि शप् ॥ ८१ ॥** धोः कर्तृवाचिनि गे परतः शप् भवति । जयति । तरति । पठति । पचति । पचते ।

*** ह्वदादेरुप् ॥ ८२ ॥** ह्वादेरदादेश्चोत्त-

रस्य श्नपः उश्नुपौ स्तः । जुहोति । बिभेति । जिहेति । आति । प्साति । क्षौति । अप्येति । वेति । सूते । इष्टे ।

दिवादेः श्यः ॥ ८३ ॥ दिवादिभ्यः श्यो भवति कर्तरि गे परतः । दीव्यति । सीव्यति । कुप्यति । पुष्यति । सूयते ।

वा भ्राभ्लाशभ्रमक्रमत्रसत्रुटलषः ॥८४॥ एभ्यो गे परतः श्यो वा स्यात् । भ्रास्यते । भ्रासते । भ्लास्यते । भ्लासते । भ्राम्यति । भ्रमति । क्राम्यति । क्रामति । त्रस्यति । त्रसति । त्रुट्यति । त्रुटति । लष्यति । लषति ।

यमः ॥ ८५ ॥ यमेर्वा श्यो भवति गे परतः । यस्यति । यमति ।

समः ॥ ८६ ॥ समपूर्वाद् यमः श्यो वा स्यात् । संयस्यति । संयमति । नियमोऽयं–गेः सम एव वा श्यो नान्यतः । प्रयस्यति । आयस्यति । वियस्यति ।

स्वादेः श्नुः ॥ ८७ ॥ स्वादिभ्यः श्नुर्भवति कर्तरि गे परे । सुनोति । सुनुते । मिनोति । मिनुते । धृष्णोति ।

श्रोः शृः ॥ ८८ ॥ श्रु इत्येतस्य कर्तरि गे परतः श्नुर्भवति शृ इत्ययं चादेशः । धर्मं शृणोति ।

वाऽक्षः ॥ ८९ ॥ अक्षेर्वा श्नुर्भवति । अक्ष्णोति । अक्षति ।

तक्षः स्वार्थे ॥ ९० ॥ तक्षतेः स्वार्थे तनूकरणे श्नुर्वा स्यात् । तक्ष्णोति, तक्षति काष्ठं । स्वार्थे इति किं ? संतक्षति वाग्भिर्दुर्जनः ।

* तुदभ्यः शः ॥ ९१ ॥ तुदादिभ्यो गे परतः शो भवति । तुदति । तुदते । दिशति । निक्षिपति । कृषति । जुषते । पणते । लजते ।

* रुधां श्नम् ॥ ९२ ॥ रुधादीनां गे श्नम् भवति । रुणद्धि । भिनत्ति । विशिनष्टि । भुनक्ति ।

कृञ्तनादेरुः ॥ ९३ ॥ कृञस्तनादिभ्यश्च गे उर्भवति । करोति । तनोति । वनुते । मनुते ।

धिन्विकृण्व्योरच ॥ ९४ ॥ आभ्यां उ-भवति अकारश्चांतादेशः । धिनोति । कृणोति ।

क्र्यादेः श्ना ॥ ९५ ॥ क्र्यादिभ्यः श्ना भवति गे परतः । क्रीणाति । प्रीणाति । गृह्णाति । वृणीते ।

स्तंभुस्तुंभुस्कंभुस्कुंभुस्कुञ्भ्यः श्नुश्च॥९६॥ एभ्यः श्नुर्भवति कर्तरि गे श्ना च । स्तभ्नाति । स्तभ्नोति । स्तुभ्नाति । स्तुभ्नोति । स्कभ्नाति । स्कभ्नोति । स्कुभ्नाति । स्कुभ्नोति । स्कुनोति । स्कुनाति ।

हौ हलः श्नः शानः ॥ ९७ ॥ हलः परस्य श्नाप्रत्ययस्य शानो भवति हौ परतः । गृहाण । अशान । कुषाण । मुषाण । हल इति किं ? क्रीणीहि ।

* ईपा वाक् ॥ ९८ ॥ अत्र धोरधिकारे ईपा निर्दिष्ट वाक्संज्ञ भवति । कर्मण्यण् । कुंभकारः । वाक्प्रदेशाः-"वागमिङ्" इत्येवमादयः ।

कृदमिङ् ॥ ९९ ॥ इतः प्रभृत्यत्र धोरधिकारे कृत्संज्ञकाल्याः प्रत्ययाः मिङं वर्जयित्वा । वक्ष्यति—तव्यानीयौ । स्तोतव्यः । स्तवनीयः ।

प्राक् क्तेर्वाऽसमः ॥१००॥ क्ति इत्येतस्मात् प्राक् असमरूपो वा भवति । इत्यधिकारे वेदितव्यः । जेयं । जेतव्यं । ज्ञः । ज्ञाता । ज्ञायकः । प्राक्क्तेरिति किं ? चिकीर्षा । केरन्यो बाधकः । असम इति किं ? अणं को बाधत एव । गोदः । कंबलदः ।

ण्वोर्व्यः ॥१०१॥ ण्वु इत्येतस्मात् प्राक् ये त्यास्ते व्यसंज्ञका भवंति । पुत्रस्य कर्तव्यं । दत्तस्य करणीयं । व्यप्रदेशाः—व्यस्य वा कर्तरि,, इत्येवमादयः ।

तव्यानीयौ ॥१०२॥ धोरेतौ त्यौ स्तः । हर्तव्यं । हरणीयं ।

* योऽचोऽध्यादेः ॥१०३॥ अजंताद्धोर्यो भवति ध्यादिवर्जितात् । देयं । धेयं । नेयं । अत्र

---

१ । [illegible] । तेन–[illegible] ।

इति किं ? पाक्यं । अभ्यासुरिति किं ? वार्म्यं । आजाम्यं । कार्यं । वार्यं ।

* पोरदुकोऽत्रपिवपिरपित्रपिचपिलभिच-लिहचेः ॥१०४॥ पवर्गान्ताददुको धोः त्रपादिव-र्जितात् यो भवति । शप्यं । लभ्यं । रम्यं । पोरिति किं ? पाक्यं । अदुकः इति किं ? लेप्यं । अत्रपादेरिति किं ? त्राप्यं । वाप्यं । राप्यं । लप्यं । चाप्यं । जाम्यं । आचाम्यं । दाम्यं ।

\+ यतिचतितकिशकिशसिसहयजेः ॥१०५॥ एभ्यो यो भवति । यत्यं । चत्यं । तक्यं । शक्यं । शस्यं । सह्यं । यज्यं ।

* गदमदयमोऽगेः ॥ १०६ ॥ गदादेरगि-पूर्वाद् यो भवति । गद्यं । मद्यं । यम्यं । अगेरिति किं ? निगाद्यं । प्रगाद्यो धर्मः ।

* चरेः ॥ १०७ ॥ अगिपूर्वाच्चरेर्यो भवति । चर्यं ।

\+ आङोऽगुरौ ॥ १०८ ॥ आङ्पूर्वाच्चरेर्यो भवत्यगुरावर्थे । आचर्यं व्रतं । अगुराविति किं ? आचार्यः पूज्यपादः ।

* पण्यावद्योपसर्यावर्यं विक्रेयगर्ह्यर्तुमत्युपे-ये ॥ १०९ ॥ पण्यादयो निपात्यंते विक्रेयादिष्व-र्थेषु । पण्या गौः विक्रेय इत्यर्थः । अवद्यं पापं गर्ह्य-मित्यर्थः । उपसर्या गौः ऋतुमतीत्यर्थः । शतेन वर्या स्त्री उपेया सेव्या इत्यर्थः । अन्यत्र पाण्यः साधुः । अनूद्यः जनापवादः । उपसार्या शरदि मथुरा । वृत्या गौः ।

* स्वामिवैश्येऽर्यः ॥ ११० ॥ अर्यो नि-पात्यः स्वामिनि वैश्ये चाभिधेये । अर्यः स्वामी वैश्य-श्च । आर्यः साधुरन्यत्र ।

वदः सुपि क्यप् च ॥ १११ ॥ वदेरगि सुपि वाचि क्यप् भवति यश्च । सत्योद्यं । सत्यवद्यं । तत्त्वोद्यं । तत्त्ववद्यं । सुपीति किं ? वाद्यं ।

* भूयहत्याग्निचित्या भावे ॥ ११२ ॥ एते शब्दाः अगिसुपि वाचि भावे निपात्यंते । ब्रह्मभवनं ब्रह्मभूयं गतः । मोहत्या । स्त्रियां क्यपि तुक् । अग्नेः श्रयणं अग्निचित्या ।

* शास्वृदृस्तुवेतिजुषः ॥ ११३ ॥ एभ्यः क्यप् भवति । शिष्यः । स्तुत्यः । इत्यः । अधीत्यः । प्रावृत्यः । आदृत्यः । जुष्यः ।

* ऋदुकोऽक्लृपचृतः ॥ ११४ ॥ ऋदुको धोः क्यप् भवति क्लृपादिवर्जितात् । वृत्यं । वृध्यं । सृप्यः । अक्लृपादेरिति किं ? संकल्प्यं । चर्त्यं । अर्च्यं ।

* जिविपून्यो हलिमुंजकल्के ॥ ११५ ॥ जेः विपूर्वाभ्यां पूनीभ्यां क्यप् भवति हल्यादिषु । जित्यो हलिः महद्धलं । विपूयो मुंजः तृणविशेषः । विनीयः कल्कः त्रिफलादीनां । जेयं । विपव्यं । विनेयमन्यत्र ।

पदाऽस्वैरिबाह्यापक्ष्ये ग्रहः ॥ ११६ ॥ ग्रहेः क्यप् भवति पदादिष्वर्थेषु । प्रगृह्यं पदं । गृह्यका इमे परवशा इत्यर्थः । ग्रामगृह्या स्त्री । बहिर्भूतेत्यर्थः । भुजबलगृह्याः । भरतगृह्याः तत्पक्ष्य इत्यर्थः । ग्राह्यमन्यत्र ।

भृञोऽसौ ॥ ११७ ॥ भृञः क्यप् भवत्य-सौ । भृत्याः कर्मकराः । असाविति किं ? भार्या नाम क्षत्रियाः ।

\+ समि वा ॥ ११८ ॥ संपूर्वात् भृञः क्यप् भवति वा । संभृत्याः । संभार्याः भृतकाः ।

[redacted] ॥ ११९ ॥ एभ्यः क्यप् भवति वा । कृत्यं । कार्यं । मृज्यं । मार्ग्यं । वृष्यं । वर्ष्यं । जप्यं । जाप्यं । शस्यं । शंस्यं । दुह्यं । दोह्यं । गुह्यं । गोह्यं ।

* खेयमृषोद्ये ॥ १२० ॥ खेयमृषोद्यशब्दौ निपात्येते । खनेः क्यप् नस्य चेत्वं । खेयः कूपः । मृषापूर्वाद् वदेः क्यप् । मृषोद्यं ।

* कुप्याज्यभिद्योद्ध्ययुग्यं खौ ॥ १२१ ॥ कुप्यादयः खौ निपात्यंते । गुपेरादी कत्वं क्यपि । कुप्यं फल्गुभांडं । आज्यं घृतं । भिनत्ति कूलमिति भिद्यो नदः । उज्झत्युदकमित्युद्ध्यो नदः । युग्यं वाहनं । खाविति किं ? गोप्यं । आज्यं । भेद्यं । उज्झ्यं । योग्यं ।

ण्यः ॥ १२२ ॥ धोर्ण्यो भवति । हार्यं । कार्यं । वाक्यं ।

\+ पाणिसमवे सृजः ॥ १२३ ॥ आभ्यां

किंम्बिद्धारिपारिवेद्युदेजिचेतिसातिसा-
होऽगौ ॥ १४२ ॥ लिंपविंदिभ्यां धार्या-
दिभ्यश्च ण्यंतेभ्यः शो भवत्यगौ वाचि। लिंपतीति लिंपः। विंदः। धारयः। पारयः। वेदयः। उदेजयः। चेतयः। सातं सुखं करोतीति णिचि सातयः। साहयः। अगाविति किं? प्रलिपः। निर्विदः।

* दुन्योर्णः ॥१४३॥ दुनीभ्यामगौ णो भवति। दुनोतीति दावः। नायः। अगाविति किं? प्रदवः। प्रणयः।

* ज्वलादिग्रहाद्वा ॥ १४४ ॥ ज्वलादिभ्यो ग्रहेश्च अगौ णो वा स्यात्। ज्वालः। ज्वलः। स्थालं। स्थलं। नालः। नलः। चालः। चलः। बालः। बलं। कोलः। कुलं। फालः। फलं। पातः। पतः। क्वाथः। क्वथः। क्षारः। क्षरः। बोधः। बुधः। कासः। कसः। ग्राहः। ग्रहः।

* तन्श्याद्व्यधाश्रुसंश्रुवतीणश्वसः॥१४५॥ एभ्यो णो भवति। तानः। उत्तानः। अवश्यायः। दायः। धायः। व्याधः। आश्रावः। संश्रावः। अत्यायः। श्वासः।

हृसोऽवे ॥ १४६ ॥ हृसाभ्यामवपूर्वाभ्यां णत्यः स्यात्। अवहारः। अवसायः।

* नृत्खन्रजः शिल्पिनि ट्वुः ॥ १४७॥ नृतादिभ्यः ट्वुर्भवति शिल्पिनि गम्यमाने। नृत्यतीति नर्तकः। खनकः। रजकः। नर्तकी। खनकी रजकी। शिल्पिनीति किं? नर्त्तिका।

* पाणिघट्टताडघट् ॥ १४८ ॥ पाणौ ताडे च वाचि हंतेरट्टल्यघटिखानि निपात्यंते शिल्पिनि। पाणिं पाणिना वा हंतीति पाणिघः। ताडं हंतीति ताडघः।

* गस्थकः ॥ १४९ ॥ गायतेस्थको भवति शिल्पिनि। गाथकः।

* णनट् ॥ १५० ॥ गायतेर्णनट् स्यात् शिल्पिनि। गायनः। गायनी।

व्रीहिकाले हः ॥ १५१ ॥ जहातेर्व्रीहौ काले च णनट् स्यात्। जहत्युदकमिति हायना व्रीहयः। जहाति भावान् सह हृतानिति हायनः संवत्सरः।

प्रुसृल्वः साधौ वुन् ॥ १५२ ॥ एभ्यः साध्वर्थे वुन् भवति। साधु प्रवते प्रवकः। सरकः। लवकः। साधाविति किं? प्रावकः।

* आशिषि वुञ् ॥ १५३ ॥ आशिष्यर्थे धोर्वुञ् भवति। जीवतादित्याशास्यमानो जीवकः। जीवका। नंदकः। नंदका।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां
लघुवृत्तौ द्वितीयाध्यायस्य
प्रथमः पादः।

---

## द्वितीयः पादः।

—:o:—

कर्मण्यण् ॥ १ ॥ कर्मणि वाचि धोरण् भवति। नगरं करोति नगरंकारः। कांडलावः। द्वारपालः।

+ शीलीक्षिक्षम्काम्याचर्भक्षेर्णः ॥ २ ॥ एभ्यो णो भवति कर्मणि वाचि। धर्मं शीलयतीति धर्मशीलः। धर्मशीला। सुखप्रतीक्षः। क्लेशक्षमः। धर्मकामः। उत्तमाचारः। वायुभक्षः।

* आतः कोऽह्वावामः ॥३॥ आकारांताद्धोः कर्मणि वाचि को भवति ह्वादिवर्जितात्। सर्वं जानातीति सर्वज्ञः। अंगुलित्रः। पार्ष्णित्रं। अह्वादेरिति किं? स्वर्गह्वायः। तंतुवायः। धान्यमायः।

प्रे ॥ ४ ॥ कर्मणि प्रशब्दे च वाचि धोरातः को भवति। तत्त्वप्रज्ञः। नियमोऽयं—प्र एव गौ नान्यस्मिन्। गोसंदायः। वडवासंदायः।

दाज्ञः ॥ ५ ॥ दाज्ञाभ्यां कर्मणि प्रशब्दे च वाचि को भवति। मोक्षप्रदः। सुखप्रदः। तत्त्वप्रज्ञः। धर्मप्रज्ञः। अयमपि नियमः—प्रे दाज्ञ एव नान्यतः। अंगुलिप्रत्रायः। पार्ष्णिप्रत्रायः।

संख्यः ॥ ६ ॥ संपूर्वात् ख्या इत्येतस्मात् को भवति। पशून् संख्याति संचष्टे पशुसंख्यः। गोसंख्यः।

सुपि ॥ ७ ॥ सुबंते वाचि धोरातः को भवति । द्वाभ्यां पिबतीति द्विपः । पादपः । कच्छपः । स्वर्गाय प्रददातीति स्वर्गप्रदः ।

+ नखमुचादयः ॥ ८ ॥ एते भावे वेदितव्याः । नखान् मुंचंतीति नखमुचानि धनूंषि । मूलानि विभुजतीति मूलविभुजो रथः । कौ मोदते कुमुदं । समे तिष्ठतीति समस्थः । विषमस्थः । पर्वतस्थः ।

स्थः ॥ ९ ॥ सुपि वाचि तिष्ठतेः को भवति । आखूनाकुथानं आखूत्थं । शलभोत्थं । अनिर्दिष्टार्थत्वात् स्वार्थे भावे भवति ।

दुहो घश्च ॥ १० ॥ दुहेः सुपि वाचि को भवति घश्चांतादेशः । कामं दोग्धीति कामदुघो धर्मः ।

* तुंदशोके परिमृजापनुदोऽलसमुखाहरे ११
तुंदशोकयोर्वाचोराभ्यां को भवत्यलससुखाहरयोः । तुंदं परिमार्ष्टि तुंदपरिमृजोऽलसः । शोकमपनुदतीति शोकापनुदः पुत्रः । तुंदपरिमार्ज आतुरः । शोकापनोदो धर्माचार्योऽन्यत्र ।

गष्टक् ॥ १२ ॥ गायतेः कर्मणि वाचि टक् भवति । वक्रं गायतीति वक्रगः । वक्रगी ।

सुरासीध्वोः पिबः ॥ १३ ॥ सुरासीध्वोर्वाचोः पिबतेष्टक् भवति । सुरापः । सुरापी । सीधुपः । सीधुपी ।

* ओऽर्हः ॥ १४ ॥ कर्मणि वाचि अर्हतेरत्यो भवति । राज्यार्हः । पूजामर्हतीति पूजार्हो जिनः । पूजार्हा प्रतिमा ।

* धृञोऽसूत्रे ॥ १५ ॥ असूत्रे वाचि धृञोऽस्त्यो भवति । गणधरः । शशिधरः । असूत्र इति किं ? सूत्रधारः ।

शम्यस्थो घोः खौ ॥ १६ ॥ शमि वाचि स्वार्जिताद्धोरत्यो भवति खौ । शंभवः । शंकरः । शंवदः । पुनर्घुग्रहणं बाधकबाधनार्थं । तेन सुविषयं हेत्वादिना परत्वादट् माभूत् । शंकरा नाम परिव्राजिका । अस्थ इति किं ? शंस्थः । खाविति किं ? शंकरी जिनविद्या ।

स्तंबेरमकर्णेजपौ ॥ १७ ॥ एतौ हस्तिनि सूचके च निपात्येते खौ । स्तंबेरमो हस्ती । कर्णेजपः सूचकः ।

+ शक्तिलांगलांकुशयष्टितोमरधनुर्घटे ग्रहः १८
शक्त्यादिषु वाक्षु ग्रहेरत्यो भवति । शक्तिं गृह्णातीति शक्तिग्रहः । लांगलग्रहः । अंकुशग्रहः । यष्टिग्रहः । तोमरग्रहः । धनुर्ग्रहः । घटग्रहः । एष्विति किं ? कमंडलुग्राहः ।

+ सूत्रे धारणे ॥ १९ ॥ सूत्रे वाचि ग्रहेरत्यः स्वार्थे धारणेऽर्थे । सूत्रग्रहः । सूत्रग्राहोऽन्यः ।

* हृगोऽवयोऽनुत्सेधे ॥ २० ॥ कर्मणि वाचि हृञोऽत्यो भवति वयस्यनुत्सेधे च गम्यमाने । कवचहरः क्षत्रियकुमारः । अंशहरः पुत्रः । वयोऽनुत्सेध इति किं ? भारहारः ।

आङि शीले ॥ २१ ॥ कर्मणि आङि च वाचि शीले हृञोऽत्यो भवति । पुष्पाण्याहरत्येवं शीलः पुष्पाहरः । सुखाहरः । आङीति किं ? पुष्पाणि हर्ता ।

* दृतिनाथे पशाविः ॥ २२ ॥ दृतिनाथयोर्वाचोर्हृञः पश्वर्थे कर्तरि इर्भवति । दृतिं चर्ममयीं खल्वां हरतीति दृतिहरिः । नाथहरिः पशुः । दृतिहारोऽन्यः ।

फलेग्रह्यात्मंभरिकुक्षिंभरिः ॥ २३ ॥
एते शब्दाः निपात्यंते । फलानि गृह्णातीति फलेग्रहिः वृक्षः । आत्मानं बिभर्ति–आत्मंभरिः । कुक्षिंभरिः । फलस्यैत्वमात्मकुक्ष्योश्च मुम् निपात्यते ।

शकृत्स्तंबे वत्सव्रीहौ कृः ॥ २४ ॥
शकृत्स्तंबयोर्वाचोः कृञो वत्से व्रीहौ चार्थे इर्भवति । शकृत्करिः वत्सः । स्तंबकरिः व्रीहिः । शकृत्कारोऽन्यत्र ।

किंयत्तद्बहुष्वः ॥ २५ ॥ किमादिषु वाक्षु कृञोऽत्यो भवति । किंकरः । किंकरा । यत्करः । तत्करः । बहुकरः ।

* स्यिदिवाविभानिशाप्रभाभास्करांतानंतादिनांदीलिपिलिबिबलिभक्तक्षत्रचित्रसंख्याजंघाबाह्वहर्धनुररुष्करेऽट् ॥ २६ ॥ स्यिसंज्ञकेषु

दिवादिषु च वाक्षु कृञोऽट् स्यो भवति। एककरः। द्विकरः। त्रिकरः। चतुष्करः। दिवाकरः। विभाकरः। निशाकरः। प्रभाकरः। भास्करः। कारकरः। अंतकरः। अनंतकरः। आदिकरः। नांदीकरः। लिपिकरः। लिबिकरः। बलिकरः। भक्तकरः। बाहुकरः। अहस्करः। धनुष्करः। जंघाकरः। अरुष्करः। कर्तृकरः। चित्रकरः। क्षेत्रकरः। टकारो ङ्यर्थः।

हेतुशीलानुलोम्येऽशब्दश्लोककलहगाथावैरचाटुसूत्रमंत्रपदे ॥ २७ ॥ शब्दादिवर्जिते कर्मणि वाचि कृञोऽट् स्यात् हेतौ शीले आनुलोम्ये चार्थे। यशः करोतीत्येवं हेतुः यशस्करी विद्या। कुलकरं धनं। तीर्थकरो जिनः। शोककरी कन्या। श्राद्धं करोतीत्येवं शीलः श्राद्धकरः। समासकरः। पूजाकरः। प्रेषणं करोतीत्येवमनुकूलः प्रेषणकरः। वचनकरः। हेत्वादिष्विति किं? कांडकारः। अशब्दादीति किं? शब्दकारः। श्लोककारः। कलहकारः। गाथाकारः। वैरकार। चाटुकारः। सूत्रकारः। मंत्रकारः। पदकारः।

कर्मणि भृतौ ॥ २८ ॥ कर्मशब्दे वाचि कृञोऽट् स्यो भवति भृतौ गम्यमानायां। कर्मकरः। कर्मकरी। भृताविति किं? कर्मकारः।

+ पार्श्वादिषु श्योऽः ॥ २९ ॥ पार्श्वादिषु सुबंतेषु वाक्षु शीङोऽस्यो भवति। पार्श्वाभ्यां शेते पार्श्वशयः। पृष्ठशयः। उत्तानः शेते—उत्तानशयः।

* आधारे ॥ ३० ॥ आधारे वाचि अस्यो भवति शीङः। खे शेते खेशयः। खशयः। गर्तशयः। दरीशयः।

* चरोऽट् ॥ ३१ ॥ आधारे वाचि चरेरट् भवति। कुरुषु चरतीति कुरुचरः। कुरुचरी। मद्रचरः। मद्रचरी।

भिक्षासेनादाये ॥ ३२ ॥ भिक्षादिषु वाक्षु चरेरट् भवति। भिक्षां चरतीति भिक्षाचरः। भिक्षाचरी। सेनाचरः। आदायचरः।

पुरोऽग्रतोऽग्रे सृः ॥ ३३ ॥ एषु वाक्षु सरतेरट् स्यात्। पुरो यातीति पुरःसरः। अग्रतःसरः। अग्रेसरः। अग्रेसरी।

पूर्वे कर्तरि ॥ ३४ ॥ पूर्वशब्दे कर्तृवाचिनि वाचि सरतेरट् स्यात्। पूर्वः सरति यातीति वा पूर्वसरः। पूर्वसरी। कर्तरीति किं? पूर्वं देशं सरतीति पूर्वसारः।

एजेः खश् ॥ ३५ ॥ कर्मणि वाच्येजेः खश् भवति। अंगान्येजयतीति—अंगमेजयः। जनमेजयः। अरिमेजयः।

+ शर्धललाटवाते हाकृतपाजः ॥ ३६ ॥ शर्धादौ वाचि यथासंख्यं हाकादेः खश् वा स्यात्। शर्धं जहतीति शर्धंजहाः मृगाः। ललाटंतपः सविता। वातमजाः मृगाः।

+ शुनीस्तने धेटः ॥ ३७ ॥ शुनीस्तनयोर्वाचोर्धेटः खश् भवति। शुनीं धयतीति शुनिंधयः। स्तनंधयः।

+ नाडीनासिकामुष्टिघटीखरीवाते ध्मश्च ॥ ३८ ॥ एषु वाक्षु ध्मो धेटश्च खश् स्यात्। नाडीं धमतीति नाडिंधमः। नाडिंधयः। नासिकंधमः। नासिकंधयः। मुष्टिंधमः। मुष्टिंधयः। घटिंधमः। घटिंधयः। खरिंधमः। खरिंधयः। वातंधमः। वातंधयः।

+ पाणौ ॥ ३९ ॥ पाणौ वाचि ध्मः खश् स्यात्। पाणिंधमाः पथिकाः।

उदि कूले रुजवहः ॥ ४० ॥ उत्पूर्वाभ्यां रुजिवहिभ्यां कूले वाचि खश् स्यात्। कूलमुद्रुजतीति कूलमुद्रुजः वृक्षः। कूलमुद्वहः।

वहाभ्रे लिहः ॥ ४१ ॥ वहाभ्रयोर्वाचोः लिहेः खश् स्यात्। वहं लेढीति वहंलिहा गौः। अभ्रंलिहः प्रासादः।

मितनखपरिमाणे पचः ॥ ४२ ॥ मितादिषु वाक्षु पचेः खश् स्यात्। मितंपचा कन्या। नखंपचा यवागूः। प्रस्थंपचं कुडं। द्रोणंपचा स्थाली।

प्रियवशे वदः ॥ ४३ ॥ प्रियवशयोर्वाचोः वदेः खश् स्यात्। प्रियंवदः। वशंवदः।

* कूलाभ्रकरीषे कषः ॥ ४४ ॥ कूलादिषु वाक्षु कषेः खश् भवति । कूलं कषयतीति कूलंकषा नदी । अभ्रंकषो वायुः । करीषंकषा वात्या ।

* सर्वे ॥ ४५ ॥ सर्वशब्दे वाचि कषेः खश् स्यात् । सर्वंकषो विप्रः ।

* सहेः ॥ ४६ ॥ सर्वे वाचि सहेः खश् स्यात् । सर्वं सहते सर्वंसहाः सूरयः ।

* विध्वरुस्तिले तुदः सत्वं ॥ ४७ ॥ एषु वाक्षु तुदेः खश् स्यात् वाचः सकारस्य च त्वं । विधुंतुदो राहुः । अरुंतुदो वैद्यः । तिलंतुदो वायुः ।

* द्विषत्परे तापेः खच् तः ॥ ४८ ॥ द्विषति तकारांते परे च वाचि तापेः खच् भवति वाचस्तकारस्य च त्वं । द्विषतस्तापयतीति द्विषंतपः । परंतपः ।

* वाचंयमो व्रती ॥ ४९ ॥ वाक्पूर्वाद् यमेः खच् अमश्चानुग निपात्यो व्रतिनि गम्यमाने । वाचं यच्छतीति वाचंयमो व्रती । वाग्यामोऽन्यः ।

भृतृवृजिधारिदम्तपत्सहः खौ ॥ ५० ॥ एभ्यः कर्मणि सुपि च वाचि खच् स्यात् खौ । विश्वंभरा भूः । रथेन तरतीति रथंतरो राजा । पतिं वृणोति वृणुते वा पतिंवरा कन्या । शत्रुंजयो गिरिः । युगं धारयतीति युगंधरो राजा । अरिं दाम्यति अरिंदमः । शत्रुंतपः । शत्रुंसहः । खाविति किं ? भूमिभारः ।

* मेघर्त्तौ कृः ॥ ५१ ॥ मेघर्त्योर्वाचोः कृञः खच् स्यात् । मेघंकरः । ऋतिंकरः ।

* भये ॥ ५२ ॥ भये वाचि कृञः खच् स्यात् । भयंकरः ।

क्षेमप्रियमद्रेऽण् च ॥ ५३ ॥ क्षेमादौ वाचि कृञः खच् स्यादण् च । क्षेमंकरः । क्षेमकारः । प्रियंकरः । प्रियकारः । मद्रंकरः । मद्रकारः ।

* पुरंदरभगंदरेम्मदासूर्यंपश्योग्रंपश्या : ॥ ५४ ॥ पुरंदरादयः शब्दाः खजंताः खशंताश्च निपात्यंते । पुरं दारयतीति पुरंदरः । भगशब्दे वाचि दारेः खजमंतता च वाचो निपात्यते । भगंदरो व्याधिः । खच् । इरया माद्यति—इरंमदः । इराशब्दे वाचि मदेः खश् । न सूर्यं पश्यंतीति असूर्यंपश्याः राजदाराः । उग्रंपश्यः । सूर्ये नञ्पूर्वे उग्रे च वाचि दृशेः खश् ।

* सुभगाढ्यस्थूलपलितनग्नांधप्रियेष्वच्व्यर्थे च्वौ भ्वः ख्नुख्नुकञ् ॥५५॥ सुभगादिषु अच्व्यंतेषु च्व्यर्थे वर्तमानेषु वाक्षु भुवः ख्नुख्नुकञौ स्तः । असुभगः सुभगो भवति सुभगंभविष्णुः । सुभगंभावुकः । आढ्यंभविष्णुः । आढ्यंभावुकः । स्थूलंभविष्णुः । स्थूलंभावुकः । पलितंभविष्णुः । पलितंभावुकः । नग्नंभविष्णुः । नग्नंभावुकः । अंधंभविष्णुः । अंधंभावुकः । प्रियंभविष्णुः । प्रियंभावुकः । अच्व्याविति किं ? सुभगीभविता । सुभगीभावुकः ।

* कृः करणे खनट् ॥ ५६ ॥ सुभगादिषु अच्व्यंतेषु च्व्यर्थे वर्तमानेषु वाक्षु कृञः खनट् स्यात् करणे कारके । असुभगं सुभगं कुर्वत्यनेन सुभगंकरणं । आढ्यंकरणं । स्थूलंकरणं । पलितंकरणं । नग्नंकरणं । अंधंकरणं । प्रियंकरणं ।

* भावे चाशितंभवः ॥ ५७ ॥ आशितंभवो निपात्यते भावे करणे च । आशितस्य भवनं आशितंभवः । आशितो भवत्यनेनेति आशितंभव ओदनः । आशिते वाचि भुवः खच् ।

+ गमेः खच्खड्डाः ॥ ५८ ॥ सुपि वाचि गमेः खच् खड् डश्च स्यात् । तुरां गच्छति तुरंगमः । तुरंगः । तुरगः । पतंगः । पतगः । पारगः । अध्वगः । अंतगः । दूरगः । सर्वगः । गुरुतल्पगः । अनंतगः ।

+ विहायसो विह च ॥ ५९ ॥ विहायसो विहादेशः स्यात् गमेः खच् खड्डाश्च सुः । विहायसा गच्छतीति विहंगमः । विहगः ।

+ सुदुस्त्वाधारे डः ॥ ६० ॥ सुदुरोर्वाचोर्गमेर्डो भवति आधारे कारके । सुखेन गम्यतेऽस्मिन् इति सुगः पंथाः । दुर्गो गिरिः ।

+ निसि देशे ॥ ६१ ॥ निसि वाचि गमेर्डो भवति देशे गम्यमाने । निर्गम्यतेऽस्मिन्निति निर्गो देशः ।

+ उरगः ॥ ६२ ॥ उरसा गच्छति-उरगः । इसके निपात्यते ।

आशिषि ग्नः ॥ ६३ ॥ आशिष्यर्थे हंतेर्डो भवति । तिमिं हंतु इत्याशंसितः तिमिहः । शत्रुहः । पापहः ।

* क्वचिदपे ॥ ६४ ॥ अपे वाचि हंतेः कचिड्डो भवति । क्लेशापहः । तमोपहः ।

कुमारशीर्षे णिन् ॥ ६५ ॥ एतयोर्वाचोः हंतेर्णिन् स्यात् । कुमारं हंति कुमारघाती । शीर्षघाती ।

* टगमर्त्ये ॥ ६६ ॥ कर्मणि वाचि हंतेष्टग् भवत्यमर्त्ये कर्तरि । वातघ्नमाविकं क्षीरं पित्तघ्नं माहिषं पयः । पतिघ्नी पाणिरेखा । अमर्त्य इति किं ? पापघातो मुनिः ।

जायापत्योर्लक्षणे ॥ ६७ ॥ जाया पति इत्येतयोर्वाचोः हंतेष्टक् स्यात् लक्षणवति कर्तरि । जायाघ्नः पुत्रः । पतिघ्नी पुत्री ।

शक्ति हस्तिकवाटे॥६८॥ अनयोर्वाचोः शक्यर्थे हंतेष्टक् स्यात् । हस्तिघ्नः । कवाटघ्नः । शक्तीति किं ? हस्तिघातो व्याध उपायेन ।

*राजघः ॥ ६९ ॥ राजनि वाचि हंतेष्टग् घत्वं टित्वं च निपात्यते । राजानं हंतीति राजघः ।

स्पृशोऽनुदके क्विः ॥ ७० ॥ अनुदके सुपि वाचि स्पृशेः क्विर्भवति । घृतं स्पृशतीति घृतस्पृक् । तैलस्पृक् । अनुदक इति किं ? उदकस्पर्शः ।

ऋत्विग्दधृक्स्रग्दिगुष्णिगंचुयुजिक्रुंचः ॥ ७१ ॥ ऋत्विगादयः कथंता निपात्यंते । अंचादेश्च क्विप् भवति । ऋतून् ऋतौ वा यजते ऋत्विक् । धृष्णोतीति दधृक् । धृषेर्द्वित्वं । सृजंति तामिति स्रक् । सृजेर्मालार्थे क्विरमागमश्च । दिशंति तामिति दिग् । उत्स्निह्यति-उष्णिक् । उत्पूर्वस्य स्निहेः क्विरंत्यतखं षत्वं च । प्राङ् । युङ् । क्रुङ् ।

* कर्मणीवे त्यदाद्यन्यसमाने दृशष्टक् सक् च ॥ ७२ ॥ त्यदादौ अन्यशब्दे समाने च कर्मणि इवार्थे उपमाने वाचि दृशेष्टक् सक् क्विश्च स्यात् । त्यमिव पश्यति स इव दृश्यते वा त्यादृशः । त्यादृक्षः । त्यादृक् । तादृशः । तादृक्षः । तादृक् । तादृशी । यादृशः । यादृक्षः । यादृक् । अन्यादृशः । अन्यादृक्षः । अन्यादृक् । सदृशः । सदृक्षः । सदृक् । सदृशी । कर्मणीति किं ? स इव पश्यति । इव इति किं ? यं पश्यति यद्दर्शः । तद्दर्शः ।

मन्वन्क्वनिब्विचः क्वचित् ॥ ७३ ॥ सुपि वाचि धोर्मन् वन् क्वनिप् विच् च त्याः क्वचिद् दृश्यंते । सुष्ठु शृणाति सुशर्मा । हिनोति हेमा । विजावा । अग्रेगावा । प्रातरित्वा । कृत्वा । वेट् । जागः ।

क्विप ॥ ७४ ॥ धोः क्विप् क्वचिद् दृश्यते । अंतरिक्षे सीदति—अंतरिक्षसत् । प्रसत् । ग्लसूः । प्रसूः । अंडसूः । वित् । चित् । जित् । तत्त्ववित् । कर्मचित् । विद्विद् । गोधुक् । अश्वयुक् । बलभित् । रज्जुछित् । अग्रणीः । सम्राट् । भामनशीलो भाः ।

अदोऽनन्ने ॥ ७५ ॥ अन्नवर्जिते सुपि वाचि अदेः क्विप् भवति । सस्यमत्तीति सस्यात् । वृक्षात् । अनन्न इति किं ? अन्नादः ।

क्रव्ये ॥ ७६ ॥ क्रव्यं आममांसे वाचि अदेः क्विप् स्यात् । क्रव्यात् ।

भजो ण्विः ॥ ७७ ॥ सुपि वाचि भजेर्ण्विर्भवति । अर्धभाक् । अंशभाक् । स्वर्गभाग् । मोक्षभाग् ।

* शीलेऽजातौ णिन् ॥ ७८ ॥ जातिवार्जिते सुपि वाचि धोर्णिन् भवति शीले गम्यमाने । उष्णं भुंक्ते इत्येवं शील उष्णभोजी । शीतभोजी । शील इति किं ? उष्णभोजः । अजाताविति किं ? शालीन् भोक्ता ।

साधौ ॥ ७९ ॥ साध्वर्थे धोर्णिन् भवति । साधुकारी । साधुदायी । मित्रदायी । भोजनकारी ।

+ ब्रह्मवादी ॥ ८० ॥ ब्रह्मणि वाचि वदेर्णिन् निपात्यते । ब्रह्म वदंतीति ब्रह्मवादिनः ।

कर्तरीवे ॥ ८१ ॥ कर्तृवाचिनि इवार्थे वाचि धोर्णिन् स्यात् । उष्ट्र इव क्रोशतीति उष्ट्रक्रोशी । ध्वांक्षरावी । सिंहनादी । कर्तरीति किं ? शालीनिव भुंक्ते कोद्रवान् । इव इति किं ? उष्ट्रान् क्रोशति ।

*व्रताभीक्ष्ण्ये ॥ ८२ ॥ सुपि वाचि धोर्णिन् स्यात् व्रते आभीक्ष्ण्ये च गम्यमाने । पार्श्वेन शेते इत्येवं व्रतमस्य पार्श्वशायी । श्मशानवासी । आतपस्थायी । पुनः पुनः क्षीरं पिबंतीति क्षीरपायिणोऽश्राः । कषायपायिणो गांधारयः । सुरापायिणः प्राच्याः ।

*मन्यात् ॥ ८३ ॥ सुपि वाचि धोर्मन्यतेर्णिन् भवति । शोभनमानी । पटुमानी ।

*खश् स्वस्य ॥ ८४ ॥ स्वस्यात्मनः सुपि वाचि मन्यतेः खश् स्यात् णिन् च । पंडितमात्मानं मन्यते पंडितंमन्यः । पंडितमानी । सर्वज्ञंमन्यः । सर्वज्ञमानी ।

*व्यभौ भ्वो भूते ॥ ८५ ॥ व्यभ्योर्वाचोर्भवतेर्णिन् स्यात् भूतेऽतीतेऽर्थे वर्तमानात् । विभूतमान् विभावी । अभिभावी । भूत इति किं ? विभवति ।

करणे यजः ॥ ८६ ॥ करणे कारके वाचि यजेर्णिन् भवति भूतेऽर्थे । अग्निष्टोमेन इष्टवान् अग्निष्टोमयाजी । वाजपेययाजी । राजसूययाजी ।

*कर्मणि घ्नः कुत्स्यः ॥ ८७ ॥ कर्मणि वाचि हंतेर्भूतेऽर्थे णिन् स्यात् कुत्स्यश्चेत् कर्ता । पितरं हतवान् पितृघाती । मातृघाती । पितृव्यघाती । मातुलघाती । कुत्स्य इति किं ? चौरं हतवान् ।

*इन विक्रयः ॥ ८८ ॥ कर्मणि वाचि विक्रीञः इन् स्यात् भूतेऽर्थे कुत्स्यश्चेत् कर्ता । तैलं विक्रीतवान् तैलविक्रयी । सोमविक्रयी । कुत्स्य इति किं ? धान्यविक्रायः ।

*ब्रह्मभ्रूणवृत्रे क्विप् घ्नः ॥ ८९ ॥ ब्रह्मादिषु वाक्षु हंतेः क्विप् स्यात् भूते । ब्रह्माणं हतवान् ब्रह्महा । भ्रूणहा । वृत्रहा । नियमोयं । ब्रह्मादिषु भूते क्विबेव नान्यः । ब्रह्मादिषु एव हंतेः क्विबिति द्विधा नियमः । मित्रं हतवान् ।

सुकर्मपापमंत्रपुण्ये कृः ॥ ९० ॥ एषु वाक्षु कृञः क्विप् भवति भूते काले । सुष्ठु कृतवान् सुकृत् । कर्मकृत् । पापकृत् । मंत्रकृत् । पुण्यकृत् । अयमपि नियमः—स्वादिष्वेव कृञः क्विप् नान्यस्मिन् । सूत्रकारः ।

सोमे सोः ॥ ९१ ॥ सोमे वाचि सुञः क्विप् स्यात् । सोमं सुतवान् सोमसुत् । सोमसुतौ । सोमसुतः । अयमपि नियमः—सोमे एव सुञः क्विप् नान्यस्मिन् । सुरासावः ।

अग्नौ चेः ॥ ९२ ॥ अग्नौ वाचि चिञः क्विप् भवति । अग्निं चितवान् अग्निचित् । अग्निचितौ । अग्निचितः । अयमपि नियमः—अग्नावेव चिञः क्विप् नान्यत्र । कुड्यचायः ।

*कर्मण्यग्न्यर्थे ॥ ९३ ॥ कर्मणि वाचि चिनोतेर्भूते कर्मणि कारके क्विप् भवत्यग्न्यर्थेऽभिधेये । श्येन इव चितः श्येनचित् । कंकचित् । रथचक्रचित् ।

दृशेः क्वनिप् ॥ ९४ ॥ कर्मणि वाचि दृशेः क्वनिप् स्यात् भूते काले । विश्वं दृष्टवान् विश्वदृश्वा । मेरुदृश्वा । सर्वदृश्वा ।

*राजसहे युधिकृञः ॥ ९५ ॥ राज्ञि सहे च वाचि युधिकृञ्भ्यां क्वनिप् स्यात् । राजानं योधितवान् राजयुध्वा । राजकृत्वा । सह युद्धवान्—सहयुध्वा । सहकृत्वा ।

+ अनोऽनौ डः ॥ ९६ ॥ अनौ वाचि जनेर्डो भवति । पुमांसमनुजाता पुमनुजा स्त्री । स्त्र्यनुजः । अनुजः ।

+ ईपि ॥ ९७ ॥ ईबंते वाचि जनेर्डः स्यात् । मंदुरायां जातः मंदुरजः । अप्सुजः । वलभीजः । जलजं । अंगजः ।

+ कायामजातौ ॥ ९८ ॥ काति जातिवर्जिते वाचि जनेर्डः स्यात् । जाड्याज्जातं जाड्यजं दुःखं । संतोषजं सुखं । संकल्पजः कामः । अजाताविति किं ? अश्वाज्जातः ।

+ क्वचित् ॥ ९९ ॥ क्वचिदन्यस्मिन् वाचि जनेर्डो भवति । द्विर्जातः—द्विजः । क्षीरोदो जातं क्षीजममृतं । क्षत्रियजं युद्धं । ब्राह्मणजः पशुवधः । अजः । प्रजाः । भुजजाः । केशजाः । क्वचिन्न स्यात्—गृहस्थो जातः । क्वचिदन्यतः—अततीति अः । कायतीति कः । खन्यते इति खं । अवतीति अः ।

क्तः ॥१००॥ धोर्भूते तसंज्ञकत्यो भवति। भिन्नो स्म कृतः। करोति स्म कृतवान्।

यज्सुसोर्ध्वनिप् ॥ १०१ ॥ यजसुभ्यां ध्वनिप् स्यात्। इष्टवान्। यज्वा। यज्वानौ। यज्वानः। सुत्वा। सुत्वानौ। सुत्वानः।

जृषोऽतृ ॥ १०२ ॥ जृष अतृ इत्ययं त्यो भवति। जीर्णवान्। जरन्। जरंतौ। जरंतः।

* लिटः क्वसुकानौ ॥ १०३ ॥ धोः परस्य लिटः स्थाने क्वसुकानौ स्तः। पेचिवान्। ररज्वान्। पेचानः। ररजानः।

* वस्सदिण्श्रोः क्वसुः ॥ १०४ ॥ एभ्यो लिटः क्वसुः स्यात्। अनूषिवान्। उपसेदिवान्। उपेयिवान्। शुश्रुवान्।

* अनाश्वान् ॥ १०५ ॥ नञ्पूर्वात् अश्नातेर्लिटः क्वसुः स्यादिडभावश्च निपात्यः। अनाश्वान् तपश्चकार।

* कर्तर्यनूचानः ॥ १०६ ॥ वचेरनुपूर्वात् कर्तरि कारके कानो निपात्यः। अनूचानो व्रतोपपन्नोऽशेषशास्त्रपारगो वा। कर्तरीति किं? अनूक्तं।

लुङ् ॥ १०७ ॥ धोर्भूते काले लुङ् स्यात्। अहोषीत्। अकार्षीत्। अपाक्षीत्।

* वसो निश्यंत्ययामास्वापे ॥१०८॥ निशि वसेर्लुङ् स्यात् लङोपवादः भूते अंत्ययामास्वापे गम्यमाने क्व भवानुषितः। अहमत्राऽवात्सं। अंत्ययामास्वाप इति किं? अमुत्रावसं।

अनद्यतने लङ् ॥ १०९ ॥ अनद्यतने भूते धोर्लङ् भवति। अपचत्। अपठत्। अकरोत्। अपुनात्।

+ ख्याते दृश्ये ॥ ११० ॥ ख्याते लोकविज्ञाते भूतेऽनद्यतने दृश्ये प्रयोक्तुः शक्यदर्शने वर्तमानाद्धोर्लङ् भवति। लिडपवादः। अदहत् यवनः साकेतं। ख्याते इति किं? जघान ग्रामं। दृश्य इति किं? जघान कंसं किल वासुदेवः।

* स्मर्तेऽयदि लृट् ॥ १११ ॥ स्मृतिवचने यच्छब्दवर्जिते वाचि भूतेऽनद्यतने वर्तमानाद्धोर्लृट् स्यात्। लङोऽपवादः। अभिजानासि मित्रोर्जयंते नेमिस्वामिनं वंदिष्यामहे। स्मरसि मान्यखेटे वत्स्यामः। अयदीति किं? अभिजानासि पुत्र यत् क्षुल्लकपुरे अवसाम।

* वा साकांक्षे ॥ ११२ ॥ साकांक्षेऽर्थे भूते स्मर्थे वाचि लृट् स्यात् वा। स्मरसि देवदत्त कास्मीरेषु वत्स्यामः तत्रौदनान् भोक्ष्यामहे। कास्मीरेष्ववसाम। तत्रौदनान् अभुंज्महि।

परोक्षे लिट् ॥ ११३ ॥ भूतानद्यतने परोक्षे वर्तमानाद्धोर्लिट् स्यात्। चकार। सुप्तोऽहं किल विललाप। मत्तोऽहं किल विचचार।

+ निह्नवेऽत्यंते ॥ ११४ ॥ अत्यंतनिह्नवे भूते अनद्यतनेऽर्थे धोर्लिट् स्यात्। किं त्वं गत्वा कलिंगेषु स्थितोऽसि। किं कलिंगान् जगाम। नाहं कलिंगान् जगाम। नाहं कलिंगान् ददर्श। सर्वं मूलतोऽपलपतीत्यर्थः।

* हशश्वद्युगांतःप्रश्ने लङ् च ॥ ११५ ॥ हशश्वतोर्वाचोर्युगांतःप्रश्ने च पञ्चवर्षाभ्यंतरे प्रष्टव्ये परोक्षे लङ् स्यात् लिट् च। इति हाकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच्चकार। किमदात् पुत्रोऽतिथिभ्यो दानं। किं ददौ पुत्रोऽतिथिभ्यो दानं। हशश्वद्युगांतःप्रश्ने इति किं? जघान किलाश्वग्रीवं त्रिपृष्ठः।

पुरि लुङ् वा ॥ ११६ ॥ पुराशब्दे वाचि भूतेऽनद्यतनेऽर्थे वर्तमानाद्धोर्लुङ् वा भवति। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा छात्राः। ऊषुरिह पुरा छात्राः।

---

१। [illegible] अंत्यायाः पश्चिमयामे कोऽप्युषितः तं वाममबोधयन्तः, केन चित् क भवानुषितः इति पृष्टः प्रत्याचष्टे [illegible] ततोऽप्यतीतेऽनद्यतने [illegible] प्राप्तः [illegible] स्वापे लङेव—अमुत्रावसमिति [illegible]।

२। [illegible] अनद्यतनः [illegible]। न विद्यतेऽद्यतनो यस्मिन् तस्मिन् भूतानद्यतनेऽपि [illegible] लङ्।

लट् ॥ ११७ ॥ पुराशब्दे चापि भूतेऽनद्यतनेऽर्थे वर्तमानाद्धोर्लट् भवति । वसंतीह पुरा छात्राः ।

स्मे ॥ ११८ ॥ स्मे चापि भूतानद्यतनेऽर्थे धोर्लट् स्यात् । पृच्छन्ति स्म सुप्रभातं पुरा बुध्यंते स्म विद्याधराः । कुलोपन्यायं बुध्यंते स्म पार्थिवाः ।

+ ननौ पृष्टोक्तौ ॥ ११९ ॥ पृष्टस्योक्तौ प्रतिवचने भूतेऽर्थे वर्तमानाद्धोर्ननौ चापि लट् स्यात् । किमकार्षीः कटं देवदत्त ? । ननु करोमि भोः । किमवोचः किंचित्पुत्र ? । ननु ब्रवीमि ।

सति ॥ १२० ॥ सति संप्रतिकाले धोर्लट् भवति । भवति । नयति । तरति । पद्मप्रभनाथं स्तौमि ।

पूङ्यजोः शानः ॥ १२१ ॥ पूङ्यजभ्यां धोः शानो भवति । पवमानः । यजमानः ।

वयःशक्तिशीले ॥ १२२ ॥ एष्वर्थेषु धोः शानः स्यात् सति काले । कति कवचं पर्यस्यमानाः । कति कंठं बिभ्राणाः । कतीह पचमानाः । कतीह समश्नानाः । कतीह मंडयमानाः । कतीह जानानाः ।

धारीङः शत्रकृच्छ्रे ॥ १२३ ॥ सति काले धारीङ्भ्यां शतृ इत्ययं त्यो भवत्यकृच्छ्रे सुखसाध्ये । धारयन् धर्मशास्त्रं । अधीयन् जैनेन्द्रं । अकृच्छ्र इति किं ? कृच्छ्रेण धारयति । कृच्छ्रेणाधीते ।

* सुग्द्विषर्हः सत्र्यारिस्तुत्ये ॥ १२४ ॥ एभ्यः सत्र्यादिष्वर्थेषु शतृ इति त्यः स्यात् । सर्वे सुन्वंतः सत्रिणः यजमानाः । द्विषन् शत्रुः । अर्हन् विद्यां । सुरां सुन्वति । द्वेष्टि भार्या पतिं । चौरो वधमर्हत्यन्यत्र ।

* शीलधर्मसाधौ तृन् ॥ १२५ ॥ एष्वर्थेषु धोस्तृन् भवति सति काले । करणशीलः कर्ता कटान् । वदिता जनापवादान् । मुंडनधर्माणः—श्रावकमूर्धां मुंडयितारः श्राविष्ठायना भवंति । आद्रे सिद्धमन्नमपहर्तारः आहरकाः भवंति । साधु गच्छतीति गंता खेलः । सलीलगतेत्यर्थः ।

* भ्राज्यलंकृञ्निराकृञ्भूसहिरुचिवृतवृधिचरिप्रजनापत्रपोन्मदपत्पचपतवदिसहजीषु इष्णुः ॥ १२६ ॥ सति काले भ्रादिभ्यः इष्णुर्भवति शीलाद्यर्थे । अलंकरणशीलः अलंकरणधर्मा साधु वा भवतीति भ्राजिष्णुः । एवं—भ्राजिष्णुः । अलंकरिष्णुः । निराकरिष्णुः । प्रजनिष्णुः । उत्पचिष्णुः । उत्पतिष्णुः । उन्मदिष्णुः । रोचिष्णुः । अपत्रपिष्णुः । वर्तिष्णुः । वर्धिष्णुः । सहिष्णुः । चरिष्णुः ।

ग्लाजिस्थो ग्स्नुः ॥ १२७ ॥ एभ्यः शीलादौ सति काले ग्स्नुर्भवति । ग्लास्नुः । भूष्णुः । जिष्णुः । स्थास्नुः ।

त्रसगृधृषिक्षिपः क्नुः ॥ १२८ ॥ त्रसादेः क्नुत्यः स्यात् । त्रस्नुः । गृध्नुः । धृष्णुः । क्षिप्नुः ।

* शम्भ्यो घिनिण् ॥ १२९ ॥ शमादिभ्योऽष्टभ्यः शीलादौ सत्यर्थे घिनिण् स्यात् । शमी । दमी । तमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रमादी ।

युजभुजत्यजरञ्जभजाद्यभ्याघ्नः ॥ १३० ॥ एभ्यो घिनिण् स्यात् शीलादौ । दोही । अनुरोधी । दोषी । द्वेषी । द्रोही । योगी । त्यागी । रागी । भागी । अभ्याघाती ।

आङि यम्यसक्रीड्मुषः ॥ १३१ ॥ यमादेराङ्पूर्वाद् घिनिण् स्यात् शीलादौ सत्यर्थे । आयामी । आयासी । आक्रीडी । आमोषी ।

वौ कषिलसकत्थस्रंभः ॥ १३२ ॥ वौ चापि कषादेः घिनिण् भवति । विकाषी । विकेकी । विलासी । विकत्थी । विस्रंभी ।

* लषोऽपे च ॥ १३३ ॥ अपे वौ च चापि शीलादौ सत्यर्थे लषेर्घिनिण् स्यात् । अपलाषी । विलासी ।

* चरोऽतौ च ॥ १३४ ॥ अतौ अपे च चापि चरेर्घिनिण् स्यात् । अतिचारी । अपचारी ।

* प्रे लपसृद्रुमथः ॥ १३५ ॥ प्रे चापि लपादेर्घिनिण् स्यात् । प्रलापी । प्रसारी । प्रद्रावी । प्रमाथी ।

* वदसृः ॥ १३६ ॥ प्रे चापि वदिसृभ्यां घिनिण् भवति । प्रवादी । प्रसारी ।

* परौ दहमुहः ॥ १३७ ॥ परौ चापि दहिमुहिभ्यां वदसृभ्यां च घिनिण् भवति । परिदाही । परिमोही । परिवादी । परिसारी ।

* देवुर्वेच ॥ १३८ ॥ परौ वाचि देवृक्रोशकाण्यंताच घिनिण् स्यात्। परिदेवते परिदेवयतीति च परिदेवी।

* क्षिप्रटः ॥ १३९ ॥ परौ वाचि क्षिपिरड्भ्यां घिनिण् भवति। परिक्षेपी। परिराटी।

* वादेश्च वुञ् ॥ १४० ॥ परौ वाचि वादेः क्षिपरड्भ्यां च शीलादौ सत्यर्थे वुञ् भवति। परिवादकः। परिक्षेपकः। परिराटकः।

निंदहिंसक्लिशखादविनाशिव्याभाषासूयात् ॥ १४१ ॥ निंदादिभ्यो वुञ् भवति शीलादौ। निंदकः। हिंसकः। क्लेशकः। खादकः। विनाशकः। व्याभाषकः। असूयकः।

देविक्रुशो गौ ॥ १४२ ॥ गौ वाचि देविक्रुशिभ्यां वुञ् भवति। आदेवकः। परिदेवकः। उपदेवकः। उपक्रोशकः। आक्रोशकः। परिक्रोशकः।

* रुचलार्थाद्धेरनः ॥ १४३ ॥ रौत्यर्थेभ्यः चलत्यर्थेभ्यो धिभ्यः अन इत्ययं त्यो भवति। रवणः। कथनः। शब्दनः। चलनः। कंपनः। चोपनः। धेरिति किं? पठिता शास्त्रं। कंपयिता शाखां।

* हलाद्यंतात्कैदितोऽयसूदृदीपदीक्षणिङः॥१४४ कैदितोर्हलादेर्हलंताद्धेर्धोः शीलादौ सत्यर्थे अनः स्यात् यकारांतादिवर्जितात्। वर्त्तनः। वर्द्धनः। द्योतनः स्पर्द्धनः। हलाद्यंतादिति किं? एधिता। धर्ता। अयसूदादेरिति किं? क्नूयिता। क्ष्मायिता। सूदिता। दीपिता। दीक्षिता। उत्पुच्छयिता। परिचीवरयिता।

* सृजुज्वलशुचलषपतपदगृध्नुशुचः ॥ १४५ ॥ एभ्योऽनः स्यात् शीलादौ सत्यर्थे। सरणः। जवनः। ज्वलनः। लषणः। पतनः। पदनः। गर्धनः। शोचनः।

क्रुधमंडार्थात् ॥ १४६ ॥ क्रुध्यर्थात् मंडार्थाच्चानः स्यात्। क्रोधनः। कोपनः। रोषणः। मंडनः। भूषणः।

कम्यद्रमो यङः ॥ १४७ ॥ आभ्यां यङंताभ्यामनो भवति शीलादौ सत्यर्थे। चंक्रमणः। दंद्रमणः।

यजजपदशदंदशूकः ॥ १४८ ॥ एभ्यो यङंतेभ्य ऊको भवति। यायजूकः। जंजपूकः। दंदशूकः। दंदशूकः।

जागुः ॥ १४९ ॥ जागर्तेरूकः स्यात् शीलादौ सत्यर्थे। जागरूकः।

लषपतपदस्थाभूवृषहनकमगमशृभ्य उकञ् ॥ १५० ॥ एभ्य शीलादौ सत्यर्थे उकञ् स्यात्। अपलाषुको नीचः। प्रपातुका गर्भाः। उपपादुकाः देवाः। उपस्थायुकाः। प्रभावुकः। वर्षुकः पर्जन्यः। प्रघातुकः। कामुका धन्यस्य स्त्रियो भवंति। आगामुकः स्वगृहं। आघातुको जीवान् नरकं याति।

* जल्पभिक्षकुट्टलुंटवृङ्षाकः ॥ १५१ ॥ एभ्यष्टाको भवति। जल्पाकः। जल्पाकी। भिक्षाकः। वराकः। कुट्टाकः। लुंटाकः।

प्रे सृजोरिन् ॥ १५२ ॥ प्रे वाचि सृजुभ्यां इन् स्यात्। प्रसर्वी। प्रजवी।

परिभूजिदृक्षिविश्रीण्वमाव्यथाभ्यमः ॥ ॥ १५३ ॥ एभ्यः इन् भवति शीलादौ सत्यर्थे। परिभर्वी। जयी। आदरी। क्षयी। विश्रयी। उदयी। वमी। अव्यथी। अभ्यमी।

* निद्रातंद्राश्रद्धाशीङ्दयस्पृहिगृहिपतेरालुः ॥ १५४ ॥ निद्रादेरालुर्भवति। निद्रालुः। तंद्रालुः। श्रद्धालुः। शयालुः। दयालुः। स्पृहयालुः। गृहयालुः। पतयालुः।

* शदसदाधेट्सेरुः ॥ १५५ ॥ एभ्यो रुर्भवति। शद्रुः। सद्रुः। दारुः। धारुः। सेरुः।

* घस्यत्सुः क्मरः॥ १५६ ॥ घस्यादेःक्मरः स्यात् शीलादौ सत्यर्थे। घस्मरः। अद्मरः। सृमरः।

* भासमिदभंजो घुरः ॥ १५७ ॥ एभ्यो घुरो भवति। भासुरं वपुः। मेदुरं मुखं। भंगुरं काष्ठं।

* वेत्तिच्छिद्भिदेः कित् ॥ १५८ ॥ वेत्यादेः घुरः स्यात् स च किद्भवति। विदुरः। छिदुरः। भिदुरः।

* जिण्नशजेष्ट्वरप् ॥ १५९ ॥ एभ्यः ट्वरप् भवति स च कित्। सृत्वरः। सृत्वरी। इत्वरः। इत्वरी। नश्वरः। नश्वरी। जित्वरः। जित्वरी।

**गत्वरः ॥ १६० ॥** गमेष्ट्वरप् मत्वं च निपात्यं । गत्वरः । गत्वरी ।

**नम्रकंपिस्म्यजसकमृहिंसदीपो रः॥१६१॥** एभ्यो रो भवति शीलादौ सत्यर्थे । नम्रं मुखं । कंप्रा शाखा । स्मेरं मुखं । अजस्रं तत्त्वं भावयामः । कम्रा स्त्री । हिंस्रः पापमतिः । दीप्रः प्रदीपः ।

*** सन्भिक्षाशंसिविदिच्छादुः ॥ १६२ ॥** सन्नंताद् भिक्षादेश्च उर्भवति । चिकीर्षुः । बुभुक्षुः । बुभुत्सुः । बीभत्सुः । भिक्षुः । आशंसुः । विंदुः । इच्छुः । वेत्तेर्नुम् । इच्छतेश्च छो निपात्यः ।

*** स्वपतृष्णृषो क्नुक् ॥ १६३ ॥** स्वपादेः क्नुक् भवति शीलादौ सत्यर्थे । स्वप्नक् । स्वप्नजौ । स्वप्नजः । तृष्णक् । धृष्णक् ।

**शृवंदादारुः ॥ १६४ ॥** आभ्यामारुः स्यात् । शरारुः । वंदारुर्जनाः ।

**भ्यः क्रुक्लुकौ ॥ १६५ ॥** बिभेतेः क्रुक्लुकौ स्तः । भीरुः । भीरुकः । भीलुकः ।

**स्थेशभासपिसकसो वरः ॥ १६६ ॥** स्थादेर्वरो भवति । स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।

**यो यङः ॥ १६७ ॥** यातेर्यङंतात् वरः स्यात् । यायावरः ।

**+ सहवहचलपापतेरिः ॥ १६८ ॥** सहादेर्यङंतात् इर्भवति । सासहिः । वावहिः । चाचलिः । पापतिः ।

**+धाग्रक्रमगमजनमेः किर्लिट् च ॥१६९॥** एभ्यः शीलादौ किर्भवति स च लिड्वत् । दधिः । चक्रिः । सस्रिः । जज्ञिः । नेमिः । चकारात् शीलाद्यर्थ उत्तरत्र नानुवर्तते ।

*** संविप्राद् भ्वोऽस्त्रौ डुः ॥ १७० ॥** समादिपूर्वाद् भुवः सत्यर्थे डुर्भवत्यस्त्रौ । संभवतीति संभुः जनिता । विभुः सर्वगतः । प्रभुः स्वामी । अस्त्राविति किं ? विभूर्नाम कश्चित् ।

*** मितंद्र्वादयः ॥१७१॥** एते ड्वंता निपात्यते । मितं द्रवतीति मितंद्रुः । शंभुः । स्वयंभुः ।

*** इत्रः प्वो दैवते ॥ १७२ ॥** दैवतेऽर्थे पूञः इत्रो भवति । पवित्रोऽर्हन् स मां पुनातु ।

*** ऋषौ करणे ॥ १७३ ॥** पुवः करणे कारके इत्रः स्यात् ऋषौ नाम्नि चाभिधेये । पूयतेऽनेनेति पवित्रो दर्भः । पवित्रोऽयमृषिः ।

*** लूधूसूखनर्तिसहचरः ॥ १७४ ॥** एभ्यः करणे इत्रः स्यात् । लुनंति तेनेति लवित्रं । धवित्रं । सवित्रं । खनित्रं । अरित्रं । सहित्रं । चरित्रं ।

*** व्ययोद्रौघ्नघनः ॥ १७५ ॥** व्यादिभ्यः हंतेर्घनो निपात्यः । विहन्यतेऽनेनेति विघनः । अयोघनः । द्रुघनः ।

*** स्तंबाद् घ्नश्च ॥ १७६ ॥** स्तंबाद् घ्नः घनश्च निपात्यः । स्तंबो हन्यतेऽनेनेति स्तंबघ्नः । स्तंबघनः ।

*** वहपरिघं ॥ १७७ ॥** वहपरिघशब्दौ निपात्येते । वहंति अनेनेति वह्यं शकटं । वह्येयः । परिहन्यतेऽनेनेति परिघः । हंतेर्घत्वमी निपात्यौ ।

**प्वो हलकोलास्ये त्रट् ॥ १७८ ॥** पूञः त्रट् भवति हलास्ये कोलास्ये च करणे । हलस्य पोत्रं । कोलस्य पोत्रं । तन्मुखमित्यर्थः ।

*** दाव्नीशसयुयुजस्तुतिसिचपदर्दशमिहनहस्तोः ॥ १७९ ॥** एभ्यः करणे सति काले त्रट् स्यात् । दाति तेन दात्रं । नेत्रं । शस्त्रं । योत्रं । योक्त्रं । तोत्रं । सेत्रं । सेक्त्रं । पत्रं । दंष्ट्रा । मेढ्रं । नद्ध्री । स्तोत्रं ।

*** धात्री ॥ १८० ॥** धेटः धात्रश्च कर्मणि त्रट् निपात्यते । धयंति दधति तामिति धात्री स्तनदायिनी आमलकी च ।

*** ञीन्मत्यर्थार्थशील्यादिभ्यः क्तः॥१८१॥** ञीद्भ्यः मत्यर्थेभ्योऽर्चार्थेभ्यः शील्यादिभ्यश्च सति काले क्तो भवति । ञिमिदा—मिन्नः । ञिधृषा-धृष्टः । राज्ञां मतः । राज्ञां बुद्धः । राज्ञामिष्टः । राज्ञां ज्ञातः । सतामर्चितः । सतां पूजितः । शीलितः । रक्षितः । क्षांतः ।

१ भवतीति वर्तमानेऽर्थो बोधव्यार्थः ।

उणादयो बहुलं ॥ १८२ ॥ उण् इत्येवमादयस्त्याः सति काले बहुलं भवंति । कृवापाजिमिस्वदिसाध्यशूभ्य उण् । कारुः । वायुः । पायुः । जायुः । मायुः । स्वादुः । साधुः । आशुः । कचिद्धन्येऽन्यतोऽपि दृश्यंते । जरंडः । करंडः । शर्पिंडः । एरंडः । शंखः । क्वचिद् भूतेऽपि । कषितोऽसौ कषिः । ततोऽसौ तनिः । मसितं—भस्म । चरित्रं तत्र—चर्म । वृतं तत्र—वर्म ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ द्वितीयाध्यायस्य द्वितीयपादः ।

---

तृतीयः पादः ।

—:o:—

गम्यादिर्भवत्स्यंति ॥ ॥ १ ॥ गम्यादयः शब्दाः वत्स्यंति काले साधवो भवंति । गमिष्यतीति गमी ग्रामं । आगामी नगरं । प्रस्थायी । भावी ।

लृट् ॥ २ ॥ वत्स्र्यत्यर्थे धोर्लृट् स्यात् । करिष्यति । हरिष्यति । पक्ष्यते । अध्येष्यते ।

* शेकावद्यतने लुट् ॥ ३ ॥ शेकेऽनद्यतने वत्स्र्यति धोर्लुट् स्यात् । इयं कदा गंता । यैवं पादौ निदधाति । अयं नु कदाऽध्येता य एवमनभियुक्तः । श्वः कर्ता । श्वोऽध्येता ।

पुरायावतोर्लट् ॥ ४ ॥ एतयोर्वाचोर्लट् भवति वत्स्र्यत्यर्थे । पुराधीते । यावदधीते । पुरा भुंक्ते । यावद् भुंक्ते ।

वा कदाकर्ह्योः ॥ ५ ॥ कदा कर्हि इत्येतयोर्वाचोर्वा लट् स्यात् । कदा भुंक्ते । कदा भोक्ष्यते । कदा भोक्ता । कर्हि भुंक्ते । कर्हि भोक्ष्यते । कर्हि भोक्ता ।

* किंवृत्तेऽर्थित्वे ॥ ६ ॥ किंवृत्ते वाचि वत्स्र्यति काले वा लट् भवत्यर्थित्वे गम्यमाने । को भवद्भ्यो भिक्षां ददाति, दास्यति, दाता वा । कं भवंतो भोजयंति, भोजयिष्यंति, भोजयितारो वा । स्वयं लब्धुमिच्छुरेवं पृच्छति । अर्थित्व इति किं ? कः स्कंधावारं यास्यति ।

लिप्स्यासिद्धौ ॥ ७ ॥ लिप्स्यसिद्ध्यर्थे वा लट् स्यात् । यो भवद्भ्यो दानं ददाति, दास्यति, दाता वा [१] स स्वर्गलोकं गच्छति, गमिष्यति, गंता वा ।

* लोटि हेतौ ॥ ८ लोटि लोडंते वाचि लोटः प्रत्यासत्त्या लोडंतार्थस्य प्रैषादेर्हेतौ निमित्ते वत्स्र्यति काले वा लट् स्यात् । उपाध्यायश्चेदागच्छति, आगमिष्यति, आगंता वा । अथ त्वं जैनेंद्रमधीष्व । तर्कमधीष्व ।

लिङ् चोर्ध्वमौहूर्तिके ॥ ९ ॥ लोटि लोडंते वाचि लोटः प्रत्यासत्त्या लोडंतार्थस्य प्रैषादेर्हेतौ निमित्ते ऊर्ध्वे मौहूर्तिके वत्स्र्यति काले लिङ् स्यात् लट् च वा । ऊर्ध्वमुहूर्त्तात् उपरि मुहूर्त्तस्य उपाध्यायश्चेदागच्छेत्, आगच्छति, आगमिष्यति, आगंता । अथ त्वं सूत्रमधीष्व, गणितमधीष्व ।

वुणतुम्लृटू क्रियायां तदर्थायां ॥ १० ॥ क्रियार्थायां क्रियायां वाचि वत्स्र्यति वुणतुम्लृटो भवंति । कारको व्रजति । कर्तुं व्रजति । करिष्यामीति व्रजति । पाचको व्रजति । पक्तुं व्रजति । पक्ष्यामीति व्रजति । क्रियायामिति किं ? अध्येष्ये इत्यस्य कमंडलुः । भिक्षिष्ये इत्यस्य जटाः । तदर्थायामिति किं ? धावतस्ते दंडः पतिष्यति ।

कर्मणि चाण् ॥ ११ ॥ कर्मणि वाचि क्रियायां तदर्थायां च धोरण् भवति । कुंभकारो व्रजति । गोदायो व्रजति । सुरापायो व्रजति ।

* लृटो वाऽनितौ शतृशानौ ॥ १२ ॥ वत्स्र्यति यो लृट् तस्य स्थाने शतृशानौ वा स्तः अनितौ परे । पक्ष्यन् । पक्ष्यमाणः । पक्ष्यति । अनिताविति किं ? पक्ष्यामीति व्रजति । करिष्यामीति व्रजति ।

* सल्लटः ॥ १३ ॥ सति संप्रति काले यो लट् तस्य शतृशानौ वाऽनितौ स्तः । पचन् । पचमानः । पचति । यान्, याति । शयानः । शेते ।

माङ्याक्रोशे ॥ १४ ॥ माङि वाच्याक्रोशे गम्यमाने लटः शतृशानौ स्तः । मा पचन् । मा पचमानः ।

---

१ पूर्वेण उभूत्प्रोः [illegible] च क्रियायां [illegible] ।

तौ सत् ॥ १५ ॥ तौ शतृशानौ सत्-संज्ञौ स्तः । पचन् । पचमानः । पुत्रस्य कुर्वन् । पुत्रस्य कुर्वाणः ।

* पदुजो घञ् ॥ १६ ॥ आभ्यां घञ् स्यात्, पद्यतेऽसौ पादः । रुजत्यसौ रोगः ।

* सुः स्थिरव्याध्यल्पमत्स्यबले ॥ १७ ॥ सरतेः स्थिरादिषु कर्तृषु घञ् स्यात् । चन्दनसारः । अतीसारो व्याधिः । विसारो मत्स्यः । सारं बलं । एष्विति किं ? सर्ता । सारकः ।

+ भावे ॥ १८ ॥ भावे धोर्घञ् भवति । पाकः । रागः ।

अकर्तरि ॥ १९ ॥ कर्तृवर्जिते कारके घञ् स्यात् । प्रकुर्वंति तमिति प्राकारः । दास्यतेऽस्मै दासः । आहरंति तस्मादाहारः । अकर्तरीति किं ? कारकः । कर्ता ।

इङः ॥ २० ॥ इङो घञ् भवति भावेऽकर्तरि च । अधीयते इति अध्यायः । उपेत्याधीयतेऽस्मादुपाध्यायः ।

गौ रोः ॥ २१ ॥ गौ वाचि रौतेर्घञ् भवति । सुरावः । दूरावः । संरावः । विरावः । गाविति किं ? रवः ।

समि युद्रुद्रोः ॥ २२ ॥ समि वाच्येभ्यो घञ् स्यात् भावेऽकर्तरि । संयावः । संदावः । संद्रावः । समीति किं ? उपद्रवः ।

* स्तोर्यज्ञे ॥ २३ ॥ संपूर्वात् स्तौतेर्घञ् स्यात् यज्ञविषये । संस्तुवन्त्यस्मिन्—संस्तावः छंदोगानां । संस्तवः सतामन्यत्र ।

* श्रिभ्वोऽगौ ॥ २४ ॥ अगौ वाचि श्रिभूभ्यां घञ् स्यात् । श्रायः । भावः । अगाविति किं ? प्रश्रयः । प्रभवः ।

* निरभ्यवे पूल्वयः ॥ २५ ॥ एषु वाक्षु प्वादिभ्यो घञ् स्यात् भावे कर्तरि । निष्पावः । अभिलावः । अवनायः । पवः, लवः, नयोऽन्यत्र ।

प्रे द्रुस्तुस्रोः ॥ २६ ॥ प्रे वाच्येभ्यो घञ् स्यात् । प्रद्रावः । प्रस्तावः । प्रस्रावः ।

स्तोऽऽप्रे ॥ २७ ॥ प्रे वाचि स्तृणातेर्घञ् भवत्यप्रे । शंखप्रस्तारः । विमानप्रस्तारः । बर्हिःप्रस्तरोऽन्यः ।

* वौ प्रथनेऽशब्दे ॥ २८ ॥ वौ वाचि स्तृणातेः प्रथने विस्तीर्णतायां भावेऽकर्तरि घञ् भवत्यशब्दे । पटस्य विस्तारः । गृहस्य विस्तारः । प्रथने इति किं ? विस्तरः । तृणस्याच्छादनमित्यर्थः । अशब्द इति किं ? वाक्यविस्तरः ।

क्षुश्रोः ॥ २९ ॥ वौ वाचि क्षुश्रुभ्यां घञ् स्यात् । विक्षावः । विश्रावः ।

* न्युदि ग्रः ॥ ३० ॥ न्युदोर्वाचोर्गृरूपात् घञ् स्यात् भावेऽकर्तरि । निगारः । उद्गारः । न्युदीति किं ? संगरः ।

क्रो धान्ये ॥ ३१ ॥ न्युदि वाचि किरतेर्धान्यविषये घञ् स्यात् भावेऽकर्तरि । धान्यस्य निकारः । उत्कारः । फलनिकरोऽन्यः ।

* वृर्णौ ॥ ३२ ॥ नौ वाचि वृरूपात् घञ् स्यात् धान्ये । नीवारा नाम व्रीहयः ।

* इणोऽभ्रेषे ॥ ३३ ॥ निपूर्वादिणोऽभ्रेषे युक्तकरणे घञ् स्यात् भावेऽकर्तरि । एषोऽत्र न्यायः । अभ्रेष इति किं ? न्ययं गतश्चौरः ।

* परौ क्रमे ॥ ३४ ॥ परौ वाचीणः क्रमेऽर्थे घञ् स्यात् । तव पर्यायो भोक्तुं । मम पर्यायो भोक्तुं । पर्ययोऽन्यत्र ।

* व्युपे श्यः ॥ ३५ ॥ व्युपाभ्यां शीङः घञ् स्यात् क्रमे । तव विशायः । मम विशायः । तव राजोपशायः । मम राजोपशायः ।

* हस्तादेयेऽनुद्यस्तेये चेः ॥ ३६ ॥ हस्तादेये हस्तेनादानेऽनुदि वाचि चिञो घञ् भवत्यस्तेये । पुष्पप्रचायः । हस्तादेय इति किं ? पुष्पप्रचयं करोति तरुशिखरे । अनुदीति किं ? फलोच्चयः । अस्तेय इति किं ? फलप्रचयं करोति चौर्येण ।

* चित्यावासांगोपसमाधौ च कः ॥ ३७ ॥ चित्यादिष्वर्थेषु चेर्घञ् स्यात् चकारस्य च ककारादेशः । आकायमग्निं चिन्वीत । मुनिनिकायः ।

जलबुद्बुदधर्माणः कायाः । महान् गोमयनिकायः । चयोऽन्यत्र ।

संघेऽनूर्ध्वे ॥ ३८ ॥ संघे प्राणिविशेषसमुदाये चेर्घञ् स्यात् चस्य च को भवत्यनूर्ध्वे । वैयाकरणनिकायः । देवनिकायः । संघ इति किं ? सारसमुच्चयः । अनूर्ध्वे इति किं ? उपर्युपरि शूकरनिचयः ।

+ श्रो वायुवर्णनिवृते ॥ ३९ ॥ एष्वर्थेषु शृणातेर्घञ् भवति । शारो वायुर्वर्णो निवृतं च । शरोऽन्यः ।

* माने ॥ ४० ॥ माने इयत्तायां गम्यमानायां धोरकर्तरि घञ् भवति । एको निघासः । द्वौ केदारलावौ । त्रयः काराः ।

* उदि पूयुद्रोः ॥ ४१ ॥ उदि वाचि एभ्यो घञ् भवति । उत्पावः । उद्यावः । उद्द्रावः ।

ग्रहः ॥ ४२ ॥ उदि वाचि ग्रहेर्घञ् भवति । उद्ग्राहः । उदीति किं ? विग्रहः ।

समि मुष्टौ ॥ ४३ ॥ समि वाचि ग्रहेर्घञ् स्यात् मुष्ट्यर्थे । अहो मल्लस्य संग्राहः । मौष्टिकस्य संग्राहः । मुष्टाविति किं ? संग्रहः शास्त्रस्य ।

* शापे न्यवे ॥ ४४ ॥ न्यवयोर्वाचोर्ग्रहेरकर्तरि घञ् स्यात् शापे आक्रोशे गम्यमाने । निग्राहोऽह ते जाल्म भूयात् । अवग्राहोऽह ते जाल्म भूयात् । शापे इति किं ? निग्रहश्चौरस्य ।

प्रे लिप्सायां ॥ ४५ ॥ प्रे वाचि ग्रहेर्घञ् स्यात् लिप्सायां । पात्रप्रग्राहेण चरति पिंडपातार्थी । लिप्सायामिति किं ? प्रग्रहः ।

परौ यज्ञे ॥ ४६ ॥ परौ वाचि यज्ञेऽभिधेये ग्रहेर्घञ् स्यात् । उत्तरपरिग्राहः । अधरपरिग्राहः । परिग्रहोऽन्यः ।

* वाऽवे वर्षे ॥ ४७ ॥ अवे वाचि ग्रहेर्घञ् स्याद्वा वर्षविषये । अवग्राहः । अवग्रहः । वृष्टेः प्रतिबंध इत्यर्थः । अवग्रहः पदस्यान्यत्र ।

* प्रे युग्यतुलासूत्रे ॥ ४८ ॥ प्रे वाचि ग्रहेर्घञ् भवति वा युग्यसूत्रे तुलासूत्रे चाभिधेये । प्रग्राहः । प्रग्रहः । अश्वादिसंयमनरज्जुः वणिजां तुलाग्रहणं चोच्यते ।

* वृर्वस्त्रे ॥ ४९ ॥ प्रे वाचि वृञोऽकर्तरि घञ् वा स्यात् वस्त्रेऽभिधेये । प्रावारः । प्रवरः ।

* उन्न्युच्छ्रेः ॥ ५० ॥ आभ्यां घञ् वा स्यात् । उन्नायः । उन्नयः । उच्छ्रायः । उच्छ्रयः ।

आङि रुप्लोः ॥ ५१ ॥ आङि वाचि रुप्लुभ्यां घञ् वा स्यात् । आरावः । आरवः । आप्लावः । आप्लवः ।

परौ भ्वोऽवज्ञाने ॥ ५२ ॥ परौ वाचि भवतेरवज्ञाने घञ् वा स्यात् । परिभावः । परिभवो देवदत्तस्य ।

* न्यो द्यूते ॥ ५३ ॥ परौ वाचि नयतेर्द्यूतविषयेऽकर्तरि घञ् वा स्यात् । परिणायेन शारान् हंति । परिणयः कन्यायाः । अन्यत्र—परिणयः ।

* ध्वग्रहवृदृगम्वमरणोऽच् ॥ ५४ ॥ इवर्णातादुवर्णातात् ऋकारांतात् ग्रहादेश्च भावेऽकर्तरि अज्भवति । जयः । लयः । क्रयः । नवः । लवः । यवः । तरः । शरः । करः । गरः । ग्रहः । वरः । आदरः । आगमः । वमः । रणः ।

गावदः ॥ ५५ ॥ गौ वाच्यदेरज् भवति । प्रघसः । विघसः । परिघसः । संघसः । गाविति किं ? घासः ।

नौ णश्च ॥ ५६ ॥ नौ वाच्यदेर्भावेऽकर्तरि णो भवत्यच्च । न्यादः । निघसः ।

* सूपणग्लहः प्रजनेयत्ताक्षे ॥ ५७ ॥ एभ्यो यथासंख्यं प्रजनादिविषये अज् भवति । गवामुपसरः । शाकपणः । मूलकादीनामियत्तीकृता संव्यवहारार्था मुष्टिरित्यर्थः । ग्लहः । अन्यत्र—उपसारः, पाणः, ग्लाहः ।

* समुदजः पशौ ॥ ५८ ॥ समुदोर्वाचोरजेर्भावेऽकर्तरि अच् स्यात् पशुविषये । समजः पशूनां समुदाय इत्यर्थः । उदजः पशूनां प्रेरणमित्यर्थः । पशाविति किं ? समाजः, उदाजः साधूनां ।

* विन्यभ्युपे ह्वो वश्चोत् ॥ ५९ ॥ व्यादिषु वाक्षु ह्वयतेरज् स्यात् वाशब्दस्य चोत् । विहवः । निहवः । अभिहवः । उपहवः ।

**आङ्याजौ** ॥ ६० ॥ आङि वाचि ह्वेञो-ऽज् भवति वश्चोऽश्च आजौ युद्धविषये । आहूयंते-ऽस्मिन् परस्परमिति आहवो रामस्य । आह्वायोऽन्यः ।

**निपानमाहावः** ॥ ६१ ॥ आहाव इति निपात्यते निपाने जलस्थानेऽर्थे । आहूयंतेऽस्मिन् पशवः पानायेत्याहावः पशूनां । आह्वयतेर्घञ् वश्चोश् ।

**भावेऽगौ** ॥ ६२ ॥ अगौ वाचि ह्वेञोऽज् स्यात् भावे वश्चोश् । ह्वानं-हवः ।

**हनश्च वधः** ॥६३॥ हंतेर्भावेऽगौ अज् भवति वधादेशश्च । हननं–वधः । चकारात् घञपि–घातः ।

***मदजब्व्यधोऽगौ** ॥ ६४ ॥ अगौ वाचि मदादेरज् स्यात् भावेऽकर्तरि । मदः । जपः । व्यधः । अगाविति किं ? उन्मादः ।

***ह्रस्वनत्रवण्यो वा** ॥६५॥ अगौ वाचि एभ्यो भावेऽकर्तरि अज् वा स्यात् । हसः । हासः । स्वनः । स्वानः । क्वणः । क्वाणः । नयः । नायः ।

**यमः सन्निव्युपे च** ॥६६॥ समादौ अगौ च वाचि यमेरज्वा स्यात् । संयमः । संयामः । नियमः । नियामः । वियमः । वियामः । उपयमः । उपयामः । यमः । यामः ।

***नौ स्वनगदनदपठः** ॥ ६७ ॥ नौ वाच्येभ्यो भावेऽकर्तरि अच् स्याद्वा । निस्वनः । निस्वानः । निगदः । निगादः । निनदः । निनादः । निपठः । निपाठः ।

***क्वणः** ॥ ६८ ॥ नौ वाचि क्वणेर्भावेऽकर्तरि वाऽच् स्यात् । निक्वणः । निक्वाणः ।

***वैणे गौ** ॥ ६९ ॥ वैणेऽर्थे गिपूर्वात् क्वणेर्वाऽच् स्यात् । प्रक्वणः । प्रक्वाणः वीणायाः । प्रक्वणः श्रृंखलस्यान्यत्र ।

**+स्थादिभ्यः कः** ॥ ७० ॥ स्थादिभ्यो भावेऽकर्तरि कल्यो भवति । प्रतिष्ठंतेऽस्मिन् स प्रस्थः । संस्था । प्रपिबंत्यस्यां प्रपा । विहन्यतेऽनेनेति विघ्नः ।

***घनांतर्घणोद्घनापघनोपघ्नसंघोद्घनिघं मूर्तिदेशात्याधानांगासन्नगणप्रशस्तनिमित्ते** ॥ ७१ ॥ घनादयो निपात्यते मूर्त्यादिषु अर्थेषु । दधिघनः । हंतेरापि घनभावः काठिन्ये । अंतर्घणो देशः । अन्तर्हंतेराधारं घणोऽच् । उद्धन्यतेऽस्मिन् उद्घनोऽत्याधानं । अपहन्यतेऽनेनेति–अपघनोऽगं । गुरूपघ्नः । उपहतेः को प्रभावश्चासन्ने । श्वापिसंघः । संहंतेरज् घश्च गणे । उद्धन्यते उत्कर्षेण ज्ञायते उद्घः प्रशस्तः । हंतेरज् घश्च निमित्ते । निघाः वृक्षाः । आपि घः । अन्यत्रांतर्घातः । उद्घातः । अपघातः । उपघातः । संघातः । उद्घातः । निघातः ।

***प्रघणप्रघाणौ कोष्ठांशे** ॥ ७२ ॥ एतौ कोष्ठांशे निपात्यौ । प्रघणः, प्रघाणः । गृहद्वारैकदेशः । हंतेरचि घणघाणौ निपात्यौ । प्रघातोऽन्यत्र ।

***प्रमदसंमदौ हर्षे** ॥ ७३ ॥ अमू हर्षे अजंतौ निपात्यौ । प्रमदः कन्यानां । संमदः कोकिलानां । अन्यत्र-प्रमादः । समादः ।

**ड्वितः त्रिः** ॥ ७४ ॥ डुशब्देतो धोर्भावे कर्तरि त्रिमभवति । पाकेन निर्वृत्तं पक्त्रिमं । उप्त्रिमं । कृत्रिमं । विहित्रिमं ।

**ट्वितोऽथुः** ॥ ७५ ॥ टुशब्देतो धोरथुः स्यात् । श्वयथुः । क्षवथुः । वेपथुः ।

***यजयदविच्छप्रच्छस्वपरक्षो नङ्** ॥७६॥ एभ्यो नङ् भवति भावेऽकर्तरि । यज्ञः । यत्नः । विश्नः । प्रश्नः । स्वप्नः । रक्ष्णः ।

***याच्ञा** ॥ ७७ ॥ याचेः स्त्रियां नङ् निपात्यते । याच्ञा । स्त्रीलिंगादन्यत्र–याचित्रिमं ।

**गौ धोः किः** ॥ ७८ ॥ गौ वाचि भुसंज्ञकेभ्यः किर्भवति । विधिः । निधिः । संधिः । व्याधिः । निदिः । प्रदिः । संदिः । आदिः ।

**कर्मण्याधारे** ॥ ७९ ॥ कर्मणि वाचि आधारे कारके किर्भवति धोः । जलं धीयतेऽस्मिन् जलधिः । इषुधिः । वालधिः ।

**स्त्रियां क्तिः** ॥ ८० ॥ स्त्रीलिंगे भावेऽकर्तरि वर्तमानाद्धोः क्तिर्भवति । दृष्टिः । सृष्टिः । कृतिः । हृतिः । धृतिः ।

**+कमादिभ्यः** ॥ ८१ ॥ एभ्यः स्त्रियां क्तिर्भवति । कब्धिः । प्राप्तिः । दीप्तिः ।

इका। विचर्चिका। एवं नामानो व्याख्याः। शालभञ्जिका मज्यंते यस्यां क्रीडायां सा शालभंजिका क्रीडा। वारणपुष्पप्रचायिका। उद्दालकपुष्पभंजिका। अवोषणादिका। शयनं शायिका। आसिका। क्वा॰ येव। शिरोर्तिः। चंदनतक्षाः।

देव्य प्रश्नाख्याने ॥ १०६ ॥ धोः स्त्रियामिञ् वा स्यात् ण्वुश्च। वावचनात् यथाप्राप्तं च प्रश्ने आख्याने च प्रतिवचने गम्यमाने। कां त्वं कारिमकार्षीः, कां कारिकां, कां क्रियां, कां कृत्यां, कां कृतिं। सर्वां मया कारिः, कृता। सर्वां कारिका, सर्वा क्रिया, सर्वा कृत्या, सर्वा कृतिः। कां त्वं पाठिमपाठीः, पाठिकां, पठितिं। कां त्वं गणिमजीगणः। कां गणिकां, कां गणनां।

* पर्यायार्हर्णोत्पत्तौ ण्वुः ॥ १०७ ॥ एष्वर्थेषु ण्वुर्भवति धोः स्त्रियां नित्यं भावे। भवतः शायिका। भवतः आसिका। भवतोऽग्रे गामिका। आसनादेः क्रम इत्यर्थः। अर्हति भवानिक्षुभक्षिकां। ओदनभोजिकां। इक्षुभक्षिकां मे धारयसि। ओदनभोजिकां। पयः पायिकां। इक्षुभक्षिकां मे उदपादि। उद्दालकखादिका। क्षीरपायिका

* नञ्यनिः शापे ॥ १०८ ॥ नञि वाचि धोः स्त्रियां भावेऽकर्तरि अनिर्भवति शापे आक्रोशे गम्यमाने। अमर्वानिस्ते जाल्म भूयात्। अकरणिस्ते वृषल भूयात्। नञीति। किं ? हनिस्ते जाल्मास्तु। शाप इति किं ? अकृतिस्तस्य घटस्य।

* ल्यानट् बहुलं ॥ १०९ ॥ ल्यसंज्ञा अनट् च बहुलं भवति। भावकर्मणोर्ल्यान् वक्ष्यति। ततोऽन्यत्रान्यत्रापि स्युः। ज्ञानमावृणोति आव्रियतेऽनेनेति वा ज्ञानावरणीयं। दर्शनावरणीयं। वेदनीयं। मोहनीयं। स्नांति तेन—स्नानीयं चूर्णं। दीयतेऽस्मै दानीयोऽतिथिः। भावकरणाधारेष्वनटं वक्ष्यति। ततोऽन्यत्रापि स्यात्। निरदंति तद्दिति निरदनं। राजभोजनाः शाल्यः। संप्रदीयतेऽस्मै संप्रदानं। अपादीयतेऽस्मादित्यपादानं।

* क्तभावे क्तोऽस्यादिभ्यः ॥ ११० ॥ क्लीबेऽस्यादिभ्योऽजिताद् धोर्नपि भावे क्तो भवति। हसितं जल्पितं। शोभनं। जल्पितं। आसितं। शयितं। अस्यादिभ्य इति किं ? भयं। वर्षं।

* ञिन् व्याप्तौ ॥ १११ ॥ नभावे ञिन् स्यात् धोः व्याप्तौ कात्स्न्येनाभिसंबंधे गम्यमाने। संमततः कुटनं सांकोटिनं। सांराविणं। सांमार्जिनं। व्याप्ताविति किं ? संकोटः।

* करणाधारे चानट् ॥ ११२ ॥ करणे आधारे नभावे चाश्यादिभ्यो धुभ्योऽनट् स्यात्। इध्म्यतेऽनेनेति वृश्चनः। इध्मव्रश्चनः। पलाशशातनः। दुह्यतेऽस्यामिति दोहनी। तिलपीडनी। राजधानी। हसनं। शोभनं जल्पनं। आसनं। जल्पनं। शयनं।

पुंसी घः प्रायः ॥ ११३ ॥ धोः पुंलिंगसंज्ञायां करणाधारयोर्घो भवति प्रायः। प्रच्छाद्यतेऽनेनेति प्रच्छदः। दंतच्छदः। प्लवः। एत्य कुर्वंत्यस्मिन् इति आकरः। आलयः। आपणः। पुंग्रहणं किं ? प्रधानं। खावितिति किं ? प्रहरणो दंडः। प्राय इति किं ? दोहनः। प्रसाधनः।

* गोचरसंचरवहव्रजव्यजसंक्रमापणलेखभगकषनिकषनिगमाः॥ ११४॥ एते करणाधारयोः घांता निपात्यंते पुंसी। गावश्चरंत्यस्मिन्—गोचरः। संचरतेऽनेन-संचरः। वहः। व्रजः। व्यजंत्यस्मिन् व्यजः। संक्रमः। आपणः। लेखः। भगः। कषः। निकषः। निगमः।

+ खनेर्डडरेकेकवकाश्च ॥ ११५ ॥ खनेर्धोः करणाधारयोः पुंसी डादयो भवंति घश्च। आखन्यतेऽनेनास्मिन् वा आखः। आखरः। आखनिकः। आखनिकबकः। आखनः।

+ घञ् ॥ ११६॥ खनेर्धोः करणाधारयोः पुंसी घञ् स्यात्। आखानः।

तॄस्त्रोऽवे ॥ ११७ ॥ अवे वाच्याभ्यां करणाधारयोः पुंसी घञ् स्यात्। अवतारः। अवस्तारः।

हलः ॥ ११८ ॥ हलंताद्धोः करणाधारयोः पुंसी घञ् स्यात्। वेदः। वेगः। संगः। अपामार्गः। आपाकः।

* दुरदुःसोरीषत्सुदुःषु...

॥११९॥ दारादयः पुंस्रो घञंताः निपात्यंते करणाधारयोः। दीर्यते पुमानेभिरिति दाराः। जीर्यतेऽनेनेति जारः। संहारः। उदावः। न्यायः। अवहारः। एत्य वयंत्यस्मिन्निति-आवायः।

* आनायोदंकं जलाजले ॥ १२० ॥ एतौ घञंतौ करणाधारयोर्निपात्यंते जालजलयोः। आनीयतेऽनेनास्मिन् वेति आनायः जालं। तैलमुदच्यतेऽनेनास्मिन् वेति तैलोदंकः। अन्यत्र—आनयः। जलोदंचनः।

स्वीषद्दुसि कृच्छ्राकृच्छ्रे खः ॥ १२१ ॥ एषु वाक्षु कृच्छ्राकृच्छ्रार्थेषु धोः खो भवति। सुखेन शय्यते सुशयं भवता। ईषच्छयं। दुःशयं। सुकरः। दुःकरः। ईषत्करः कटस्त्वया।

कर्तृकर्मणोर्भूकृञ्भ्यां च्वौ ॥ १२२ ॥ कृच्छ्राकृच्छ्रार्थेषु स्वीषद्दुसु वाक्षु कर्तरि कर्मणि च च्व्यर्थे वाचि भूकृञ्भ्यां खो भवति यथासंख्यं। सुखेनानाढ्येनाढ्येन भूयते स्वाढ्यंभवं भवता। ईषदाढ्यंभवं । दुराढ्यंभवं। सुखेनानाढ्य आढ्यः क्रियते स्वाढ्यंकरो देवदत्तः । ईषदाढ्यंकरः । दुराढ्यंकरः।

* आतोऽनः ॥ १२३ ॥ स्वादौ वाचि धोराकारांतादनो भवति। सुपानं पयो भवता। ईषत्पानं। दुष्पानं। सुग्लानं। सुमानं।

+ शास्युधदृषमृषदृशोऽस्ये॥ १२४ ॥ कृच्छ्रार्थेऽस्ये दुसि वाच्येभ्योऽनः स्यात्। दुःशासनः ' दुर्योधनः ' दुर्धर्षणः। दुर्मर्षणः। दुर्दर्शनः।

* सद्भूतवद्वाऽऽशंस्ये ॥ १२५ ॥ सद्भूतवदाशंस्ये सद् भूतवच्च वा त्यो भवत्याशंस्ये प्रशंसावचने। वावचनाद्यथाप्राप्तं च। उपाध्यायश्चेदागच्छति, आगमत्, आगतः,आगमिष्यति, आगंता तदा जैनेंद्रमधीमहे, अध्यगीष्महि, एतदधीतं, अध्येष्यामहे, अध्येतास्महे। आशंस्य इति किं ? उपाध्यायः आगमिष्यति।

* क्षिप्राशंसोक्तौ लृट्लिङ् ॥ १२६ ॥ क्षिप्रोक्तौ आशंसोक्तौ च शब्दे वाचि धोर्यथासंख्यं लृट्लिङौ स्तः आशंस्ये गम्यमाने। उपाध्यायश्चेदागच्छति, आगमत्, आगतः, आगमिष्यति, आगंता। क्षिप्रं, शीघ्रं, अरं, मक्षु, त्वरितं, त्वरं, आशु, तूर्णं. वेगं, तदा तर्कमध्येष्यामहे। आशंसे-संभावये, अवकल्पये, युक्तोऽधीयीय।

न लङ्लुट् सामीप्याव्युच्छित्त्योः १२७ सामीप्याव्युच्छित्त्योर्वर्तमानाद्धोर्लङ्लुटौ न स्तः। कालतत्तुल्यजातीयेनाव्यवधानं सामीप्यं। येयं पौर्णमासी अतिक्रांता एतस्यां सुपार्श्वनाथमपूपुजाम, अतिथीन् अबूभुजाम । येयममावास्या आगामिनी एतस्यां जिनमहं पूजयिष्यामि, अतिथीन् स्थापयिष्यामि। अव्युच्छित्तिः क्रियाप्रबंधः। यावदजीवत् भृशमन्नमदात्। यावज्जीविष्यति भृशमन्नं दास्यति।

* वर्त्स्यत्यनहोरात्रेऽवोऽवधेः ॥ १२८ ॥ वर्त्स्यत्यर्थे अवधेः अवः अवरस्मिन् भागे अहोरात्रवर्जिते धोर्लुङ् न स्यात्। योऽयमध्वा गंतव्यः आचित्रकूटात् तस्यावरस्मिन् भागे द्विरोदनं भोक्ष्यामहे। द्विः सूत्रमध्येष्यामहे। योयमागामी संवत्सरः तस्य यदवरं आग्रहायण्यास्तत्रार्हत्पूजां करिष्यामहे। अतिथिभ्यो दानं दास्यामहे। वर्त्स्यतीति किं ? योयमध्वागतः आदनपुरात्तस्य यदवरं कांचीपुरात् तत्र द्विरोदनं अभुज्महि । योयमतीतः संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र द्विरर्हत्पूजामकुर्म्महि । अनहोरात्र इति किं ? योयमागामी त्रिंशद्रात्रः तस्य योऽवरः पंचदशरात्रः तत्र युक्ता द्विरध्येतास्महे। अव इति किं ? योयमध्वा गंतव्यः आचित्रकूटात् तस्य यत्परं मथुरायाः तत्र युक्ताः द्विरध्येतास्महे। अवधेरिति किं ? योयमध्वा गंतव्यो निरवधिकस्तस्य यदवरं मथुरायास्तत्र युक्ता द्विरध्येतास्महे।

* वा परे काले ॥ १२९ ॥ अवधेः परस्मिन् भागे काले वर्त्स्यति लुट् वा भवत्यनहोरात्रे। योयमागामी संवत्सरः तस्य यत्परं आग्रहायण्यास्तत्र द्विरध्येष्यामहे। जैनेंद्रमध्येतास्महे।

१ अत्र भूतग्रहणेन भूतसामान्यविहितस्य लस्य परिग्रहः। न पुनरद्यतनपरोक्षयोः। ततः सामान्यातिदेशे विशेषानतिदेशात् लङ्लिटौ न भवतः। अत्र भविष्यत्कालविषये आशंस्ये प्राप्तौ लृङ्लुटौ अनेन सूत्रेण विकल्पतः पूर्यिविष्यंते। उपाध्यायश्चेदागमिष्यति तदा जैनेंद्रमध्येष्यामहे इति प्राप्तौ।

लिङ्हेतौ लृङ् क्रियावृत्तौ ॥ १३० ॥ लिङ्हेतौ वर्त्स्यति लृङ् स्यात् क्रियाया अप्रवृत्तौ सत्यां । गुरूंश्चेदुपासिष्यत शास्त्रांतमगमिष्यत् । यदि मत्समीपे आगमिष्यत दधाऽभोक्ष्यत ।

भूते ॥ १३१ ॥ भूते काले लिङ्हेतौ क्रियावृत्तौ लृङ् स्यात् । दृष्टो मया भवतः पुत्रोऽन्नार्थी चंक्रम्यमाणः, अपरश्चातिथ्यर्थी यदि तेन दृष्टोऽभविष्यत् अप्यभोक्ष्यत । न तु दृष्टः सोऽन्येन पथा गतः नोत भुक्तवान् ।

वाऽऽशेषात् ॥ १३२ ॥ शेषेऽयदौ लृङिति वक्ष्यति । आ एतस्मात् शेषसंशब्दनात् लिङ्हेतौ क्रियावृत्तौ भूते लृङ् वा भवतीति ज्ञेयं । तत्रैवोदाहरिष्यामः ।

लट् गर्हेऽपिजात्वोः ॥ १३३ ॥ गर्हेऽर्थे धोर्लट् भवति अपिजातुशब्दयोर्वाचोः । अपि तत्र भवान् प्राणिनो हंति । जातु तत्रभवान् प्राणिनो हंति गर्हामहे । अन्याय्यमेतत् । इह लिङ्हेत्वभावात् लृङ् न भवति ।

वा कथमि लिङ् च ॥ १३४ ॥ कथमि वाचि धोर्गर्हे लिङ् वा स्यात् लट् च । वावचनात् यथाप्राप्तं च । कथं नाम तत्रभवान् भूतानि हिंस्यात् । कथं नाम तत्रभवान् भूतानि हिनस्ति, अहिंसीत्, अहिनत्, जिहिंस, हिंसिष्यति, हिंसिता, अहिंसिष्यत् गर्हामहे । अन्याय्यमेतत् ।

किंवृत्ते लिङ्लृटौ ॥ १३५ ॥ किमो वृत्तं किंवृत्तं तस्मिन् किंवृत्ते वाचि धोर्लिङ्लृटौ स्तः गर्हे । किं तत्रभवान् अनृतं ब्रूयात्, अनृतं वक्ष्यति, अनृतमवक्ष्यत् ।

* अश्रद्धामर्षे ॥ १३६ ॥ अश्रद्धायाममर्षे चार्थे धोर्लिङ्लृटौ स्तः । न श्रद्दधे नावकल्पयामि न संभावयामि किं तत्रभवान् अदत्तं गृह्णीयात् गृहीष्यति, अग्रहीष्यत् । नावमर्षयामि न क्षमे धिङ्मिथ्या नैतदस्ति किं तत्रभवान् अदत्तं गृह्णीयात् गृहीष्यति, अगृहीष्यत् ।

किंकिलास्त्यर्थयोर्लृट् ॥ १३७ ॥ किं किलेऽस्त्यर्थे च वाचि अश्रद्धामर्षे धोर्लृट् स्यात् । न श्रद्दधे न क्षमे किं किल नाम तत्रभवान् परदारान् सेविष्यते । अस्ति नाम भवतु नाम विद्यते नाम तत्रभवान् अकल्प्यं सेविष्यते ।

जातुयद्यदायदौ लिङ् ॥ १३८ ॥ एषु वाक्षु धोरश्रद्धामर्षे लिङ् स्यात् । नं प्रत्ययो मे न मर्षो मे जातु तत्रभवान् सुरां पिबेत् । यत् तत्रभवान् सुरां पिबेत् । यदा तत्रभवान् सुरां पिबेत् । यदि तत्रभवान् सुरां पिबेत् । सुरामपास्यत् ।

यच्चयत्रयोः ॥ १३९ ॥ एतयोर्वाचोरश्रद्धामर्षे धोर्लिङ् भवति । न श्रद्दधे, न मृष्यामि, यच्च तत्रभवान् आक्रोशेत् । यत्र तत्रभवान् आक्रोशेत्, आक्रोक्ष्यत् ।

गर्हे ॥ १४० ॥ गर्हेऽर्थे यच्चयत्रयोर्वाचोः धोर्लिङ् स्यात् । यच्च तत्रभवान अस्मान् परिवदेत् । यत्र तत्रभवानस्मान् परिवदेत्, पर्यवदिष्यत् वृद्धो विद्वान् सन्नुत्कृष्टः गर्हामहे ।

* चित्रे ॥ १४१ ॥ चित्रेऽर्थे तयोर्वाचोर्धोर्लिङ् स्यात् । चित्रमाश्चर्यमद्भुतं विस्मयनीयं यच्च तत्रभवान् लोभं कुर्यात् । चित्रं यत्र तत्रभवान् अलोभिष्यत ।

शेषेऽयदौ लृट् ॥ १४२ ॥ अयदौ शेषे यच्चयत्राभ्यामन्यस्मिन् शेषे वाचि चित्रेऽर्थे धोर्लृट् भवति यदिशब्दश्चेन्न प्रयुज्यते । चित्रं अन्धो नाम पुस्तकं वाचयिष्यति । मूको नाम जैनेंद्रमध्येष्यते । बधिरो नाम धर्मं श्रोष्यति । अयदाविति किं ? आश्चर्यं यदि स भुंजीत ।

* वाढेऽप्युते लिङ् ॥ १४३ ॥ वाढार्थयोरप्युतयोर्वाचोर्धोर्लिङ् भवति । अपि कुर्यात् । उत कुर्यात् । वाढ इति किं ? अपिधास्यति द्वारं उत्पतिष्यति दंडः ।

* संभाव्येऽलमर्थात् ॥ १४४ ॥ संभाव्ये श्रद्धेयेऽर्थेऽलमर्थविशिष्टे वर्तमानाद्धोर्लिङ् भवति स चेदलमर्थात् स्यात् न स्वरूपतः । अपि हस्तिनं हन्यात् । अपि पर्वतं शिरसा भिंद्यात् । अपि समुद्रं दोर्भ्यां तरेत् । अर्थादिति किं ? भवति वेणुराष्ट्रेषु वत्स्यिष्यतेऽलमूर्जयंतं ।

*धूकी वाऽयदि ॥ १४५ ॥ धुवचने वाचि संभाव्ये धोर्लिङ् भवति यदिशब्दश्चेन्न प्रयुज्यते अलमर्थात्, अयदि वा । संभावयामि भुंजीत भवान् । अभुंक्त भवान् । धुग्रहणं किं ? अपि क्षारीपाकं भुंजीत । अयदीति किं ? संभावयामि यत्स भुंजीत ।

हेतुफले लिङ् ॥ १४६ ॥ हेतौ फले च तत्कार्ये वर्तमानाद्धोर्लिङ् वा स्यात् । यदि गुरून् उपासीत शास्त्रांतं गच्छेत् । यदि गुरूनुपासिष्यते शास्त्रांतं गमिष्यति ।

इच्छोद्बोधेऽकच्चिति ॥ १४७ ॥ इच्छोद्बोधे स्वाभिप्रायवदने गम्यमाने धोर्लिङ् भवत्यकच्चिति—कच्चिच्छब्दाप्रयोगे । इच्छा मे शास्त्रमधीयीत भवान् । कामो मे भुंजीत भवान् । अकच्चितीति किं ?

कच्चिज्जीवति मे माता कच्चिज्जीवति मे पिता ।
माराविद त्वां पृच्छामि कच्चिज्जीवति पार्वती ॥

इच्छार्थे लिङ्लोटौ ॥ १४८ ॥ इच्छार्थे धौ वाचि धोर्लिङ्लोटौ स्तः इच्छोद्बोधे गम्यमाने । इच्छामि कामये भुंजीत भवान् । प्रार्थये भुंक्तां भवान् ।

तुमेककर्तृके ॥ १४९ ॥ एककर्तृके इच्छार्थे धौ वाचि तुम् स्यात् । इच्छति भोक्तुं । कामयते भोक्तुं । वष्टि गंतुं । एककर्तृके इति किं ? इच्छामि भुक्तां भवान् ।

लिङ् ॥ १५० ॥ इच्छार्थे एककर्तृके धौ वाचि लिङ् स्यात् । भुंजीयेति इच्छति । अधीयीयेति वांछति ।

*वेत्तस्सति ॥ १५१ ॥ इतोऽस्मादिच्छार्थाद्धोः सति भवति काले लिङ् वा स्यात् । इच्छेत् । इच्छति । उश्यात् । वष्टि ।

विधिनिमंत्रणामंत्रणाधीष्टसंप्रश्नप्रार्थने लिङ् ॥ १५२ ॥ एष्वर्थेषु लिङ् स्यात् । विधौ-दानं कुर्यात् भवान् । प्राणिनो न हिंस्यात् । निमंत्रणे—संध्यासु नियमं कुर्यात् । आमंत्रणे—इह भवान् शयीत । अधीष्टे—तत्त्वं भवान् गृह्णीयात् । संप्रश्ने—किं नु खलु जैनेंद्रमधीयीय । प्रार्थने—भवति मे जैनेंद्रमधीयीय ।

लोट् ॥ १५३ ॥ विध्यादिष्वर्थेषु धोर्लोट् स्यात् । व्रतं रक्षतु भवान् । प्राणिनो न हिनस्तु । संध्यासु नियमं करोतु । इह भवानास्तां । तत्त्वं गृह्णातु । किं नु खलु धर्मशास्त्रमध्यये । भवति जैनेंद्रमध्यये ।

*प्रैषानुज्ञावसरे त्याश्च ॥ १५४ ॥ एष्वर्थेषु धोर्त्याः भवंति लोट् च । भवता खलु कटः कर्तव्यः । करणीयः । कार्यः । कटं करोतु भवान् हि प्रेषितोऽनुज्ञातः । भवतोऽवसरः ।

*लिङ्चोर्ध्वमौहूर्तिके ॥१५५॥ ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद्धोः प्रैषादौ गम्यमाने लिङ् भवति त्याश्च यथा प्राप्तं च । उपरि मुहूर्तस्य शीघ्रं भवान् दानं दद्यात् । भवता खलु दानं दातव्यं, देयं, दानीयं, ददातु भवान् । प्रेषितोऽनुज्ञातो भवतः प्राप्तकालो दानकरणे ।

स्मे लोट् ॥१५६॥ स्मे वाचि लोट् भवत्यूर्ध्वमौहूर्तिकेऽर्थे प्रैषादौ गम्यमाने । ऊर्ध्वमुहूर्ताद् भवान् कटं करोतु स्म प्रेषितोऽनुज्ञातो भवतोऽवसरः ।

अधीष्टे ॥१५७॥ स्मे वाचि धोर्लोट् भवत्यधीष्टेऽर्थे । अंग स्म राजन् अधीच्छामो भवानणुव्रतानि रक्षतु ।

कालवेलासमये तुम् वाऽवसरे ॥१५८॥ कालादौ वाचि धोर्वा तुम् भवत्यवसरे गम्यमाने । कालो भोक्तुं । वेला भोक्तुं । समयो भोक्तुं । कालो भोक्तव्यस्य । वेला भोजनस्य । समयो भोजनस्य । अवसर इति किं ?

कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥

लिङ् यदि ॥१५९॥ यच्छब्दप्रयोगे कालादौ वाचि धोरवसरे लिङ् स्यात् । कालो यद् भुंजीत भवान् । वेला यद् भुंजीत भवान् । समयो यद् भुंजीत ।

तृज्व्याश्चार्हे ॥ १६० ॥ अर्हेऽर्थे धोस्तृ-

र्थ्या भवंति लिङ् च। भवान् खलु कन्यायाः वोढा। भवता खलु कन्या वोढव्या, वाह्या, वहनीया। भवान् कन्यां वहेत्। अर्हो योग्य इत्यर्थः।

आवश्यकाधमर्ण्ये णिन् ॥१६१॥ आवश्यके आधमर्ण्ये च गम्यमाने धोर्णिन् स्यात्। अवश्यंकारी। अवश्यंलावी। शतंदायी। निष्कंदायी।

ह्याः ॥ १६२ ॥ आवश्यकाधमर्ण्ययोर्गम्यमानयोर्धोर्ह्याः भवंति। भवता खलु धर्मोऽवश्यं कर्तव्यः, करणीयः, कृत्यः, कार्यः। भवता खलु निष्को दातव्यः, दानीयः, देयः।

शकि लिङ् च ॥ १६३ ॥ शक्येऽर्थे धोर्लिङ् भवति ह्याश्च। भवान् खलु विद्यामधीयीत। भवता खलु विद्याऽध्येतव्या, अध्ययनीया। भवान् हि शक्तः।

* लोट् चाशिषि ॥ १६४ ॥ आशिष्यर्थे धोर्लोट् भवति लिङ् च। जयतात्। जयतां। जीयात्। जीयास्तां। आशिषि इति किं? जीवति पथ्याशी।

क्तिच्क्तौ ॥ १६५ ॥ आशिष्यर्थे धोः क्तिच्क्तौ स्तः खौ। शम्यादिति शांतिः। भवतात् भूतिः। देवा एनं देयासुरिति देवदत्तः। देवा एनं श्रूयांसुरिति देवश्रुतः।

माङि लुङ् ॥ १६६ ॥ माङि वाचि धोर्लुङ् भवति। माकार्षीरधर्मं। मा हार्षीः परस्वं।

सस्मे लङ् च ॥ १६७ ॥ स्मेन सह माङि वाचि धोर्लङ् भवति लुङ् च। मास्म क्रुध्यत्। मास्मक्रुधत्। मास्मकरोत्। मास्मकार्षीत्।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां
लघुवृत्तौ द्वितीयाध्यायस्य
तृतीयःपादः।

---

## चतुर्थः पादः।

—:0:—

धुयोगे त्याः ॥ १ ॥ धूनां योगे अयथाकालोक्ता अपि त्याः साधवो भवंति। विश्वदृश्वाऽस्य पुत्रो जनिता। कृतपुण्यः श्वो भविता। भाविकृत्यमासीत्। सुबंतमिहामुख्यस्य मिङंतस्य कालमनुवर्तते। तथाहि—विश्वदृश्वेति भूतकालो जनितेति भविष्यत्कालेन योज्यमानः साधुर्भवति। धोरधिकारे पुनर्धुग्रहणं जन्वस्तिपरिग्रहार्थं। त्याधिकारे त्यवचनं त्यमात्रग्रहीत्यर्थं। गोमानासीत्। गोमान् भवितेति मत्वंतः संप्रतिकालोऽन्यकालेन साधुर्भवति।

* भृशाभीक्ष्ण्ये लोट् तस्य हिस्वौ वा तध्वमस्तथार्थे ॥ २ ॥ यथाविधि लोडंतस्यार्थस्तथार्थे कालाद्यसमर्थ्यैकत्वाद्यभिव्यक्तिकारे कर्तृकर्मभावयुक्ते धुयोगे वाचि भृशार्थाभीक्ष्ण्ययोरर्थयोर्वर्तमानाद्धोर्लोट् भवति सर्वलकारापवादः, तस्य लोटः हिस्वौ आदेशौ स्तः, तध्वमौ तु वा भवतः। लुनीहि लुनीहि इत्येवाहं लुनामि। आवां लुनीवः। वयं लुनीमः। लुनीहि लुनीहि इत्येवं त्वं लुनासि। युवां लुनीथः। यूयं लुनीथ। तशब्दस्य वा—लुनीत लुनीत इत्येव यूयं लुनीथ। लुनीहि लुनीहीत्येवायं लुनाति। इमौ लुनीतः। इमे लुनंति। अधीष्वाधीष्वेत्येवाहमधीये। आवामधीवहे। वयमधीमहे। अधीष्वाधीष्वेत्येव त्वमधीषे। युवामधीयाथे। यूयमधीध्वे। ध्वमस्तु वा—अधीध्वमधीध्वमित्येव यूयमधीध्वे। अधीष्वाधीष्वेत्येवायमधीते। इमौ अधीयाते। इमे अधीयते। तथार्थे इति किं? लुनीहि लुनीहि इत्यनेन सूपेन इति न भवति।

* प्रचये वा सामान्यार्थे ॥ ३ ॥ प्रचये समुच्चये गम्यमाने सामान्यार्थे धुयोगे वाचि लोट् स्यात् वा तस्य च हिस्वौ स्तः तध्वमोस्तु वा। क्रियाप्रचये—व्रीहीन् वप लुनीहि पुनीहि इत्येव यतते, चेष्टते, समीहते। पक्षे—व्रीहीन् वपति लुनाति पुनाति इत्येव यतते चेष्टते समीहते। कर्मप्रचये—ग्राममट वनमट गिरिमटेत्येवाटति, घटते, चेष्टते। पक्षे—ग्राममटति। वनमटति। गिरिमटति इत्येवायमटति। घटते। चेष्टते। कर्तृप्रचये—देवदत्ताऽद्धि, गुरुदत्ताऽद्धि, जिनदत्ताद्धि, इत्येव वयंमादनमद्मः। उभयप्रचये—ओदनं भुंक्ष्व, सक्तून् पिब, धानाः खाद इत्येवाभ्यवहरति। अभ्यवह्रियते। एवं—सूत्राण्यधीष्व वृत्तीरधीष्व भाष्याण्यधीष्व इत्येवाधीते पठति। पक्षे—सूत्राण्यधीते वृत्तीरधीते भाष्याण्यधीते इत्येवाधीते, पठति।

निषेधेऽलंखल्वोः क्त्वा ॥ ४ ॥ निषेध-वाचिनोरलंखल्वोर्वाच्योः क्त्वा वा स्यात् । अलं कृत्वा । खलु कृत्वा । अलं बाले रुदित्वा, रुदितेन, रोदनेन । निषेधे इति किं ? अलंकारः ।

* परावरे ॥५॥ धोःक्त्वा वा स्यात् परेऽवरे च गम्यमाने । पर्वतमतिक्रम्य नदी । नदीमप्राप्य पर्वतः । नदीपरावरः पर्वत इत्यर्थः । पर्वतातिक्रमेण नदी । नद्यप्राप्त्या पर्वतः ।

* माङः स्वार्थे ॥ ६ ॥ माङः क्त्वा वा स्यात् स्वार्थे । अपमित्य याचते । याचित्वाऽपमयते ।

परकालैककर्तृकात् ॥ ७ ॥ परः कालो यस्याः क्रियायाः सा परकाला तस्याः क्रियायाः एक-कर्तृकात् पूर्वकालाद्धोः क्त्वा वा स्यात् । आसित्वा भुंक्ते । भुक्त्वा व्रजति । वेत्यनुवर्तमानात् आसते भोक्तुमित्यपि । एककर्तृकादिति किं ? भुक्तवति पात्रे दाता भुंक्ते ।

* पूर्वाग्रेप्रथमाभीक्ष्ण्ये खमुञ् ॥ ८ ॥ पूर्वादौ वाचि आभीक्ष्ण्यार्थे च परकालैककर्तृकाद्धोः खमुञ् वा स्यात् । पूर्वं भोजं व्रजति । पूर्वं भुक्त्वा व्रजति । अग्रेभोजं । अग्रे भुक्त्वा । प्रथमं भोजं । प्रथमं भुक्त्वा व्रजति । आभीक्ष्ण्ये—भोजं भोजं व्रजति । भुक्त्वा भुक्त्वा व्रजति । पायं पायं, पीत्वा पीत्वा व्रजति ।

कृञोऽन्यथैवंकथमित्थंस्वनर्थात् ॥ ९ ॥ एषु वाक्षु कृञोऽनर्थात् एककर्तृकात् खमुञ् वा स्यात् । अन्यथाकारं भुंक्ते । एवंकारं, कथंकारं, इत्थंकारं भुंक्ते । अन्यथा कृत्वा । एवं कृत्वा । कथं कृत्वा । इत्थं कृत्वा । अनर्थादिति किं ? अन्यथा कृत्वा शिरो भुंक्ते ।

यथातथेऽसूयाप्रत्युक्तौ ॥१०॥ एतयो-र्वाच्योः कृञः खमुञ् वा स्यात् असूयाप्रत्युक्तौ गम्य-मानायां । कथं भोक्ष्यते भवानिति पृष्टः असूयकः तं प्रत्याह यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये किं तवानेन । असूयाप्रत्युक्ताविति किं ? यथाकृत्वाहं भोक्ष्ये तथा द्रक्ष्यसि ।

* कर्मण्याक्रोशे ॥ ११ ॥ कर्मणि वाचि कृञः खमुञ् वा भवति आक्रोशे गम्यमाने । चौरंकारमा-क्रोशति । चौरं कृत्वा आक्रोशति ।

स्वाद्वर्थेषु णम् ॥ १२ ॥ स्वाद्वर्थेषु कर्मसु वाक्षु कृञः णम् वा स्यात् । स्वादुंकारं भुंक्ते । स्वादुं कृत्वा । संपन्नंकारं । सम्पन्नं कृत्वा ।

* कार्त्स्न्ये दृशिविदः ॥ १३ ॥ कर्मणि वाचि कार्त्स्न्ये गम्यमाने दृशेर्विदश्च णम् भवति । साधुदर्शं प्रणमति । सर्वं साधुं प्रणमतीत्यर्थः । अति-थिवेदं भोजयति । यं वेत्ति, विंदति, विंत्ते वा सर्वं भोजयतीत्यर्थः । कार्त्स्न्ये इति किं ? साधुं दृष्ट्वा प्रण-मति । अतिथिं विदित्वा भोजयति ।

* यावति जीवविदः ॥ १४ ॥ यावति वाचि जीवविदिभ्यां वा णम् स्यात् कार्त्स्न्ये गम्यमाने । यावज्जीवमधीते । यावद्वेदं गृह्णाति ।

चर्मोदरे पूरेः ॥ १५ ॥ एतयोर्वाच्योः पू-रेर्वा णम् स्यात् । चर्मपूरमास्ते । उदरपूरं शेते । चर्मोदरं च पूरयित्वेत्यर्थः ।

* वर्षेयत्त्वेऽस्योत्वं वा ॥ १६ ॥ कर्मणि वाचि पूरयतेर्णम् स्यात्, अस्य पूरेरूकारस्य च खं वा वर्षेयत्त्वे वर्षप्रमाणे । गोष्पदप्रं वृष्टो देवः । गोष्पदपूरं । सीताप्रं । सीतापूरं वृष्टो देवः ।

* चेलाऽर्थे क्नोपेः ॥ १७ ॥ चेलाऽर्थे वाचि क्नोपयतेर्वा णम् स्यात् वर्षेयत्त्वे । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपं ।

* शुष्कचूर्णरूक्षे पिषस्तस्मिन् ॥ १८ ॥ एषु वाक्षु पिषेर्वा णम् स्यात् तस्मिन्नेव धौ अनुप्र-युक्ते । शुष्कपेषं पिनष्टि । शुष्कं पिनष्टीत्यर्थः । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ।

जीवाकृते ग्रहकृञः ॥ १९ ॥ जीवाकृत-योर्वाचोर्यथासंख्यं ग्रहिकृञ्भ्यां णम् स्यात् तस्मिन्ने-वानुप्रयुक्ते । जीवग्राहं गृह्णाति । अकृतकारं करोति ।

निमूले कषः ॥ २० ॥ निमूले कर्मणि वाचि कषेर्णम् स्यात् । निमूलकाषं कषयति ।

समूले ह्नश्च ॥ २१ ॥ समूले वाचि हंतेः

१ । णम्प्रत्ययविधाने मकारांतता निपात्यते ।

कषेश्च णम् भवति वा तस्मिन्ननुप्रयुक्ते । समूलघातं हंति । समूलकाषं कषति ।

**करणे ॥ २२ ॥** करणे वाचि हंतेर्णम् भवति तस्मिन्ननुप्रयोगे । पाणिघातं हंति । असिघातं ।

*** हस्ते वर्तिग्रहः ॥ २३ ॥** हस्तवाचिनि वाच्येभ्यो णम् वा भवति करणे तेष्वनुप्रयुक्तेषु । हस्तवर्तं वर्तते । करवर्तं । हस्तवर्तं वर्त्तयति । पाणिवर्तं । हस्तग्राहं गृह्णाति । बाहुग्राहं ।

*** स्वस्नेहे पुषपिषः ॥ २४ ॥** स्ववाचिनि स्नेहे वाचिनि च करणे वाचि यथासंख्यं पुषिपिषिभ्यां णम् भवति तस्मिन्ननुप्रयोगे । स्वपोषं पुष्णाति । आत्मपोषं । गोपोषं । उदपेषं पिनष्टि । घृतपेषं ।

*** बंधः स्त्रौ ॥ २५ ॥** बंधेर्वा णम् स्यात् स्त्रौ तस्मिन्ननुप्रयोगे । अट्टालिकाबंधं बद्धः । मयूरिकाबंधं बद्धः । क्रौंचबंधं बद्धः । णमंताः बंधविशेषाणां संज्ञा एताः ।

*** आधारे ॥ २६ ॥** बध्नातेराधारे वाचि णम् भवति वा तस्मिन्ननुप्रयोगे । चक्रबंधं बद्धः । कूटबंधं बद्धः ।

**कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ २७ ॥** कर्तृवाचिनोर्जीवपुरुषयोर्वाचोर्यथासंख्यं नशिवहिभ्यां णम् भवति तस्मिन्ननुप्रयोगे । जीवनाशं नश्यति । पुरुषवाहं वहति । कर्त्रोरिति किं ? जीवेन नष्टः । पुरुषं वहति ।

**ऊर्ध्वे शुष्पूरोः ॥ २८ ॥** ऊर्ध्वे कर्तृवाचिनि वाचि शुषिपूरिभ्यां णम् भवति तस्मिन्ननुप्रयोगे । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वपूरं पूर्यते ।

**कर्मणि चेवे ॥ २९ ॥** कर्मणि कर्तरि च वाचि इवाऽर्थे णम् भवति तस्मिन्नेव धात्वनुप्रयुक्ते । घृतनिधायं निहितं । घृतमिव निहितमित्यर्थः । जीवितरक्षं रक्षितः । कर्तरि—संभिन्ननाशं नश्यति । संभिन्न इव नश्यतीत्यर्थः । अक्रूरनाशं नष्टः ।

**उपदंशो भायां ॥ ३० ॥** भांते वाचि उपपूर्वाद्दंशेर्णम् स्यात् वा । मूलकोपदंशं भुंक्ते, मूलकेनोपदंशं । मूलकेनोपदश्य भुंक्ते ।

*** हिंसार्थादेकाप्यात् ॥ ३१ ॥** हिंसार्थादेकाप्यादेककर्मकाद् भांते वाचि णम् स्यात् । दंडाघातं गाः कालयति । दंडेनाघातं । दंडाताडं गाः सादयति । दंडेनाताडं । हिंसार्थादिति किं ? चंदनेनानुलिप्य देवानाराधयति । एकाप्यादिति किं ? दंडेनाहत्य गोपालं गाः सादयति चौरः ।

*** ईपि चोपे पीडरुधकषः ॥ ३२ ॥** ईपि भायां च वाचि पीडादेरुपपूर्वाद् णम् स्यात् । पार्श्वोपपीडं शेते, पार्श्वयोरुपपीडं । पार्श्वाभ्यामुपपीडं शेते, पार्श्वोपपीडं शेते । व्रजोपरोधं । व्रजे उपरोधं । व्रजोपरोधं, व्रजेनोपरोधं गाः स्थापयति । पाण्युपकर्षं, पाणौ उपकर्षं । पाण्युपकर्षं, पाणिनोपकर्षं धानाः पिनष्टि ।

**प्रमाणासत्त्योः ॥ ३३ ॥** ईपि भायां च वाचि धोर्णम् भवति प्रमाणे आसत्तौ चार्थे । द्व्यंगुलोत्कर्षं गंडिकाश्छिनत्ति, द्व्यंगुले उत्कर्षं । द्व्यंगुलेनोत्कर्षं । केशग्राहं युध्यंते । केशेषु ग्राहं । केशैर्ग्राहं ।

**त्वर्यपादाने ॥ ३४ ॥** त्वरायामुत्सुकत्वेऽर्थे धोः अपादाने वाचि णम् भवति । शय्योत्थायं धावति । शय्याया उत्थायं धावति । भ्राष्ट्रापकर्षं अपूपान् भक्षयति । भ्राष्ट्राद् अपकर्षं । त्वरेति किं ? आसनादुत्थाय गच्छति ।

**द्विपि ॥ ३५ ॥** द्विपि वाचि धोस्त्वराऽर्थे णम् भवति । यष्टिग्राहं युध्यंते । यष्टीर्ग्राहं । पटापकर्षं । पटमपकर्षं ।

**स्वांगेऽध्रुवे ॥ ३६ ॥** स्वांगे द्व्यंते वाच्यध्रुवे धोर्णम् भवति । अक्षिनिकोचं जल्पति । अक्षिणी निकोचं । भ्रूक्षेपं, भ्रुवमुत्क्षेपं कथयति । अध्रुव इति किं ? शिरः समुत्क्षिप्य व्याहरति ।

**सक्लेशे ॥ ३७ ॥** सक्लेशे स्वांगे द्व्यंते वाचि धोर्णम् भवति । उरःप्रतिपेषं युध्यंते । उरांसि प्रतिपेषं । शिरश्छेदं, शिरांसि छेदं युध्यंते ।

**विशपतपदस्कंदां व्याप्यासेव्ये ॥ ३८ ॥** एभ्यो णम् भवति व्याप्यासेव्ययोर्विवक्षितयोर्वाचोः । व्याप्ये—गेहानुप्रवेशमास्ते । गेहं गेहमनुप्रवेशं । गेहमनुप्रवेशमनुप्रवेशमास्ते । आसेव्ये—गेहानुप्रपातमास्ते । गेहंगेहमनुप्रपातं, गेहमनुप्रपातमनुप्रपातं । गेहानुप्रपा-

दमास्ते । गेहंगेहमनुप्रपादं । गेहमनुप्रपादमनुप्रपादं । गेहावस्कंदमास्ते । गेहंगेहमवस्कंदं । गेहमवस्कंदमवस्कंदं । व्याप्यासेव्य इति किं ? गेहमनुप्रविश्य भुंक्ते ।

*** तृषस्वोः कालेऽन्तरे ॥ ३९ ॥** तृषस्वोःम्यां अंतरे काले द्व्यंते वाचि णम् भवति । त्र्यहापतर्षं गाः पाययति । त्र्यहमपतर्षं । त्र्यहापतर्षं । त्र्यहमपतर्षं । द्व्यहात्यासं । द्व्यहमत्यासं । तृषस्वोरिति किं ? द्व्यहमुपोष्य भुंक्ते । काल इति किं ? योजनं तर्षित्वा गावः पिबंति । अंतर इति किं ? अहरत्यस्येनो गतः ।

*** नाम्नि ग्रहादिशः ॥ ४० ॥** नाम्नि द्व्यंते वाचि ग्रहेरादिशेश्च णम् स्यात् । नामग्राहमाचष्टे । नामानि ग्राहं । नामादेशमाकारयति । नामान्यादेशं ।

**शापनिष्टोक्तौ कृञः क्त्वाणम् ॥ ४१ ॥** शिसंज्ञके वाचि कृञः क्त्वाणमौ वा स्तोऽनिष्टोक्तौ गम्यमानायां । ब्राह्मण पुत्रस्ते जातः किं तर्हि वृषल नीचैष्कृत्याचष्टे । नीचैः कृत्वा । नीचैःकारं । उच्चैर्नाम प्रियमाख्येयं नीचैराख्यायमानमनिष्टं भवति । ब्राह्मण कन्या ते गर्भिणी जाता । किं तर्हि जाल्म उच्चैःकृत्याचष्टे । उच्चैष्कृत्वा । उच्चैःकारं । नीचैर्नामाप्रियमाख्येयं । उच्चैरुच्चार्यमाणमनिष्टं भवति ।

**तिर्यच्यपवर्गे ॥ ४२ ॥** तिर्यक्शब्दे वाचि कृञः क्त्वाणमौ वा स्तः अपवर्गे समाप्तौ गम्यमाने । तिर्यक्कृत्य । तिर्यक्कृत्वा । तिर्यक्कारं गतः । अपवर्गे इति किं ? तिर्यक्कृत्वा काष्ठं गतः ।

*** भुवोऽन्वच्यानुलोम्ये ॥ ४३ ॥** अन्वक्छब्दे वाचि आनुलोम्ये आनुकूल्ये गम्यमाने भुवः क्त्वाणमौ वा स्तः । अन्वग्भूय । अन्वग्भूत्वा । अन्वग्भावं तिष्ठति ।

*** तूष्णीमि ॥ ४४ ॥** आस्मिन् वाचि भुवः क्त्वाणमौ वा स्तः । तूष्णींभूय । तूष्णीं भूत्वा । तूष्णींभावमास्ते ।

**स्वांगे तस्त्ये कृभ्वोः ॥ ४५ ॥** तस्यांते स्वांगे वाचि कृभूभ्यां क्त्वाणमौ वा स्तः । मुखतःकृत्य । मुखतः कृत्वा । मुखतःकारं । पृष्ठतःकृत्य । पृष्ठतः कृत्वा । पृष्ठतःकारं । मुखतोभूय । मुखतो भूत्वा । मुखतोभावं । स्वांग इति किं ? सर्वतः कृत्वा ।

*** धाच्विनानानाच्वौ ॥ ४६ ॥** धाणिति धाप्यमुत्रत्रमुत्रेत्रा इत्येतेषां ग्रहणं । धाणंते च्व्यर्थे शिसंज्ञके विनानानाशब्दयोश्च वाचोस्ताभ्यां क्त्वाणमौ वा स्तः । अद्विधा द्विधा कृत्वा द्विधाकृत्य, द्विधा कृत्वा । द्विधाकारं । द्विधाभूय । द्विधा भूत्वा । द्विधाभावं । ऐकध्यं कृत्य । ऐकध्यंभूय । द्वैधंकृत्य । द्वैधंभूय । द्वैधाकृत्य । द्वैधाभूय । विनाकृत्य । विनाभूय । नानाकृत्य । नानाभूय ।

*** समर्थास्त्यर्थशकधृषज्ञाग्लाघटरभलभक्रमसहार्हे तुम् ॥ ४७ ॥** समर्थाऽर्थेषु अस्त्यर्थेषु शकादिषु च वाक्षु धोस्तुम् स्यात् । समर्थो भोक्तुं । प्रभुर्भोक्तुं । पर्याप्तो भोक्तुं । अलंभोक्तुं । अस्ति भोक्तुं । भवति विद्यते च भोक्तुं । शक्नोति भोक्तुं । धृष्णोति भोक्तुं । जानाति भोक्तुं । ग्लायति भोक्तुं । घटते भोक्तुं । आरभते भोक्तुं । लभते भोक्तुं । प्रक्रमते भोक्तुं । सहते भोक्तुं । अर्हति भोक्तुं ।

*** कृत्कर्तर्यशिः ॥ ४८ ॥** शिवर्जिताः कृतः कर्तरि कारके भवंति । कर्ता । कारकः । अशिरिति किं ? कर्तुं गच्छति ।

*** संगतेऽजर्यं ॥ ४९ ॥** संगतेऽर्थे कर्तरि अजर्यमिति निपात्यते । न जीर्यतीत्यजर्यमार्यसंगतं । अजरोऽन्यत्र ।

*** रुच्याव्यथ्यौ ॥ ५० ॥** एतौ निपात्यौ । रोचतेर्नञ्पूर्वाच्च व्यथः क्यप् । रोचतेऽसौ रुच्यो मोदकः । न व्यथत इत्यव्यथ्यो यतिः ।

*** जन्भुगो यो वा ॥ ५१ ॥** एभ्यः कर्तरि यो वा स्यात् । जायतेऽसौ जन्यः । जन्यमनेन । भव्योऽयं । भव्यमनेन । गेयो माणवको गाथानां । गेयो माणवकेन षड्जः ।

१ । क्त्वाधिकारे क्त्वाग्रहणं "क्त्वा" इति वृत्तिनिष्पत्यर्थं । आधिकाराभावात्पूर्वत्र न वृत्तिः । क्त्वा चेति चकारेण णमुल्ग्रहणमुत्तरत्रानुवृत्यर्थं ।

* प्रोपाद् प्रस्थोऽनीयः ॥ ५२ ॥ प्रोपपूर्वाभ्यां प्रस्थाभ्यामनीयः कर्तरि वा स्यात् । प्रवचनीयो गुरुः शास्त्रस्य । प्रवचनीयं गुरुणा शास्त्रं । उपस्थानीयः शिष्यो गुरोः । उपस्थानीयः शिष्येण गुरुः ।

* आपत्स्वोर्ण्यः ॥ ५३ ॥ आङ्पूर्वाभ्यां पतिप्लुभ्यां ण्यः कर्तरि वा स्यात् । आपात्योऽयं । आपात्यमनेन । आप्लाव्योऽयं । आप्लाव्यमनेन ।

* श्लिषशीङ्स्थासवसजनरुहजृभार्यभाक्तः ॥ ५४ ॥ श्लिषादेः आरम्भादिकर्मार्थाच्च यः क्तः स कर्तरि वा स्यात् । आश्लिष्टः कन्यां भवान् । आश्लिष्टा कन्या भवता । आश्लिष्टं भवता । अतिशयितो गुरुं भवान् । अतिशयितो गुरुर्भवता । अतिशयितं च । उपस्थितो गुरुं भवान् । उपस्थितो गुरुस्त्वया । उपस्थितं च । उपासितो गुरुं भवान् । उपासितो गुरुर्भवता । उपासितं च । अनूषितो गुरुं भवान् । अनूषितो गुरुर्भवता । अनूषितं च । अनुजातो माणविकां माणवकः । अनुजाता माणविका माणविकेन । अनुजातं च । आरूढो वृक्षं भवान् । आरूढो वृक्षो भवता । आरूढं च । अनुजीर्णा वृषली भवान् । अनुजीर्णा वृषली भवता । अनुजीर्णं च । प्रकृतः कटं भवान् । प्रकृतः कटो भवता । प्रकृतं च । प्रभुक्तो भवानोदनं । प्रभुक्तः ओदनो भवता । प्रभुक्तं च । प्रामितो भवान् । आमितं भवता । प्रमुक्तो भवान् । प्रमुक्तं भवता ।

गिगत्यर्थाच्च ॥ ५५ ॥ थिमिङ्गकात् गत्यर्थाच्च क्तः कर्तरि वा भवति यथाप्राप्तं च । आसितो भवान् । आसितं भवता । गतो ग्रामं भवान् । गतो ग्रामो भवता । गतं च । यातो ग्रामं भवान् । यातो ग्रामो भवता । यातं च ।

* आधारे चाद्यर्थाच्च ॥ ५६ ॥ अद्यर्थादिगत्यर्थाच्चाधारे च, क्तः स्यात् । यथा प्राप्तं च । अस्मिन्निमे अदंति स्म—इदमेषां जग्धं । इदमेषां भुक्तं । इह एभिर्जग्ध ओदनः । इह एभिः पीतं मधु । भावे—इह जग्धमेभिः । धेः—इदमेषामासितं । इदमेषां शयितं । इह भवानासितः । आसितं भवता । इदमेषां गतं । इदमेषां यातं । गतो ग्रामं भवान् । गतो ग्रामो भवता । गतं भवता ।

लः कर्मणि च भावे च धेः ॥ ५७ ॥ सकर्मकाद्वो: लकाराः कर्मणि कर्तरि च भवंति धेर्भावे कर्तरि च । क्रियते कटः । करोति कटं । धेः—सुप्यते भवता । स्वपिति भवान् ।

तयोर्व्यक्तखलर्थाः ॥ ५८ ॥ तयोः कर्मभावयोः व्यक्तखलर्था भवंति । कर्तव्यः कटः । शयितव्यं भवता । कृतः कटः । शयितं भवता । सुकरः कटो भवता । ईषत्करः । सुपानं पयो भवता स्वाप्यं भवता ।

+ णिगम्यर्थबहुनीहीकृषजिदंडेः कर्मणि लादिः ॥ ५९ ॥ मुख्यं कर्मणि णिप्रभृतीनां लादयः स्युः । शाय्यते माणवको मासं । आस्यते माणवको गोदोहं । गम्यते माणवको ग्रामं । उह्यते भारो ग्रामं । नीयते अजा ग्रामं । ह्रियते भारो ग्रामं । कृष्यते शाखा ग्रामं । जीयते दत्तः शतं । दंड्यते ग्रामः शतं । शयितव्यो माणवको मासं । इति मल्लादयोऽपि योज्याः ।

+ दुहादीनां गौणे ॥ ६० ॥ एषां गौणे कर्मणि लादयो भवंति । दुह्यते पयो गौः । याच्यते गां देवदत्तः । पृच्छ्यते धर्ममाचार्यः । दोग्धव्या, दोहनीया, दोह्या पयो गौः ।

+ ज्ञाद्यर्थानयोः ॥ ६१ ॥ ज्ञार्थानामद्यर्थानां च भूनां नयोः प्रधानाप्रधानकर्मणोर्लादयः स्युः । ज्ञाप्यते माणवको धर्मं । ज्ञाप्यते माणवकं धर्मः । बोध्यते माणवको ग्रंथं । माणवकं ग्रंथो वा । भोज्यते माणवकः ओदनं । माणवकमोदनो वा ।

* घुरकेलिमास्वङ्कृष्टपच्याः कर्मकर्तरि ॥ ६२ ॥ घुरादयः कर्मकर्तरि भवंति । भंगुरं । भिदुरं काष्ठं । पचेलिमा माषाः । भिदेलिमानि काष्ठानि । पर्याप्सिता कुंडं स्वयमेव । कृष्टं पच्यते कृष्टपच्याः शालयः स्वयमेव । पचेर्यत्यो निपात्यः ।

भीमादयोऽपादाने ॥ ६३ ॥ एते अपादाने कारके भवंति । बिभेत्यस्मात् भीमः । भीष्मः । भयानकः । चरः । प्रपतनं । समुद्रः ।

* उणादयः संप्रदानापादानान्यत्र ॥ ६४ ॥ उणादयः स्युः संप्रदानापादानाभ्यामन्यत्र कारकेषु भवंति । करोतीति कारुः । वृश्चति तं वृक्षः । ऋच्यंति तया ऋक् । वृत्तं तत्र वर्म ।

* ला ॥ ६५ ॥ लामिति नव लकाराः । लट् । लिट् । लुट् । लृट् । लोट् । लङ् । लिङ् । लुङ् । लृङ् । इति यदग्रे वक्ष्यामि तदेतेषामुत्सृष्टविशेषणानां भवतीत्यधिकृतं वेदितव्यं ।

मिब्वस्मस्सिप्थस्थतिप्तस्झीड्वहिमहिथासाथांध्वम्ताताम्झाः ॥ ६६ ॥ मिबादयो लस्यादेशाः भवंति । पचामि । पचावः । पचामः । पचसि । पचथः । पचथ । पचति । पचतः । पचंति । टितां दविषये रूपांतराणि वक्ष्यति । लिटो मानां णशादीश्च । लुट्—पक्तास्मि । पक्तास्वः । पक्तास्मः । लृट्—वक्ष्यामि । वक्ष्यावः । वक्ष्यामः । लोटमग्रे वक्ष्यति ङितां मविषये च । लङ्—अपचे । अपचावहि । अपचामहि । अपचथाः । अपचेथां । अपचध्वं । अपचत । अपचेतां । अपचंत । लिङमग्रे वक्ष्यति । लुङ्—अपक्षि । अपक्ष्वहि । अपक्ष्महि । अपक्थाः । अपक्षाथां । अपग्ध्वं । अपक्त । अपक्षातां । अपक्षत । लृङ्—अपक्ष्ये । अपक्ष्यावहि । अपक्ष्यामहि ।

टिष्टेरे: ॥ ६७ ॥ टितां लकाराणां दस्य टेरेत्वं स्यात् । पचे । पचावहे । पचामहे । लिट्—पेचे । पेचिवहे । पेचिमहे । लुट्—पक्ताहे । पक्तास्वहे । पक्तास्महे । लृट्—पक्ष्ये । पक्ष्यावहे । पक्ष्यामहे । लोट् वक्ष्यते ।

थासः से: ॥ ६८ ॥ टितो लकारस्य थासः से इत्ययमादेशो भवति । पचसे । पेचिषे । पक्तासे । पक्ष्यसे ।

* लेस्तझयोरेशिरे ॥ ६९ ॥ टितो लेस्तझयोः एश् इरे इत्येतावादेशौ भवतः । पेचे । पेचिरे ।

* मानां णलथवमथाणुसणलअतुसुस: ॥ ७० ॥ टितो लेर्मानां णशादयो भवंति । पपाच । पेचिव । पेचिम । पेचिथ । पेचथुः । पेच । पपाच । पेचतुः । पेचुः ।

विदो लटो वा ॥ ७१ ॥ वेत्तेः परस्य लटो मानां णशादयो वा स्युः । वेद । विद्व । विद्म । वेत्थ । विदथुः । विद । वेद । विदतुः । विदुः । पक्षे—वेद्मि । विद्वः । विद्मः । वेत्सि । वित्थः । वित्थ । वेत्ति । वित्तः । विदंति ।

ब्रुव आहश्च ॥ ७२ ॥ ब्रुवः परस्य लटो मानां ते वा स्युः ब्रुवश्चाहादेशः तत्सन्निधाने । आत्थ । आहथुः । आह । आहतुः । आहुः । पक्षे—ब्रवीषि । ब्रूथः । ब्रवीति । ब्रूतः । ब्रुवंति ।

न वास्मदः ॥ ७३ ॥ ब्रुवः परस्य लटो मानां थस्यास्मदश्च ते न भवंति तत्संनियोगादाहश्च । ब्रूथ । ब्रवीमि । ब्रूवः । ब्रूमः ।

लोटो लङ्वत् ॥ ७४ ॥ लोटो लङ इव कार्यं स्यात् । पचाव । पचाम । पचत । पचंत । पचतां । ङितः सत्वं, मिप्थस्थतसोऽतंततामिति च सिद्धं ।

एरु: ॥ ७५ ॥ लोटो मानां इकारस्योर्भवति । पचतु । नमंतु चंद्रप्रभेशं ।

* सेर्हिर्ङित् ॥ ७६ ॥ लोटः सेर्हिर्भवति ङिच्च । लुनीहि । आप्नुहि ।

मेर्निः ॥ ७७ ॥ लोटो मेर्निरादेशो भवति । पचानि । करवाणि ।

आमेतः ॥ ७८ ॥ लोट एकारस्य आम् भवति । पचेथां । पचतां । पचेतां । पचंतां ।

स्वो वाऽम् ॥ ७९ ॥ सकारवकाराभ्यां परस्य लोट एकारस्य व अम् इत्येतावादेशौ भवतः । पचस्व । पचध्वं ।

* टावस्मदः ॥ ८० ॥ लोटोऽस्मदः टाड् भवति । करवाणि । करवाव । करवाम । चिनवानि । चिनवाव । चिनवाम ।

एत ऐ ॥ ८१ ॥ लोटोऽस्मदः एकारस्य ऐत्वं भवति । करवै । करवावहै । करवामहै ।

ङितः सत्वं ॥ ८२ ॥ ङितां लकाराणामस्मदः सकारस्य लं स्यात् । अपचाव । अपचाम । अपक्ष्व । अपक्ष्म । अपाक्ष्व । अपाक्ष्म । अपक्ष्याव । अपक्ष्याम ।

पूर्वे ॥ ८३ ॥ ङितां लकाराणां इकारस्य लं भवति मांविषये । अपचः । अपचत् । अपचन् । पचेः । पचेत् । अपाक्षीः । अपाक्षीत् । अपक्ष्यः । अपक्ष्यत् । अपक्ष्यन् ।

* मिवसवतसोऽमृतंततां ॥८४॥ ङितां लां मिवादीनां अमादय आदेशाः भवंति । अपचं । अपचतं । अपचत । अपचतां । एवं सर्वत्र ।

लेस्सीयुट् ॥ ८५ ॥ लिङादेशानां लः सीयुट् भवति । पचेय । पचेवहि । पचेमहि । पक्षीय । पक्षीवहि । पक्षीमहि ।

* क्यासुड्मे ॥ ८६ ॥ लिङः क्यासुट् स्यात् मविषये । पचेयं । पचेव । पचेम । वच्याव । वच्याम । कुर्यां । कुर्याव । कुर्याम ।

किदाशिषि ॥ ८७ ॥ लिङो क्यासुट् किद् भवति आशिषि । उच्यासं । उच्यास्व । उच्यास्म । इज्यासं । इज्यास्व । इज्यास्म । जागर्यासं । जागर्यास्व । जागर्यास्म ।

रन्झोटः ॥८८॥ लिङो झस्य इटश्च रन् अत् इत्येतावादेशौ भवतः । पचेरन् । पचेय । पक्षीरन् । पक्षीय ।

सुट् तथोः ॥ ८९ ॥ लिङस्तकारथकारयोः सुट् स्यात् । पक्षीष्टाः । पक्षीयास्थाः । पक्षीष्ट । पक्षीयास्तां ।

झेर्जुस ॥ ९० ॥ लिङो झेर्जुस भवति । कुर्युः । क्रियासुः ।

सविल्से: ॥ ९१ ॥ सचः परस्य झेर्जुस स्यात् । अबीभयुः । अददुः । अजागरुः । अविदुः । अकार्षुः ।

आतः ॥ ९२ ॥ आकारांतात्सेः परस्य झेर्जुस स्यात् । अदुः । अधुः । अस्थुः । अगुः । नियमोऽयं—आत एव स्युबंतात झेर्जुस नान्यस्मात् । अभूवन् ।

लङो वा ॥ ९३ ॥ आतः परस्य लङो झेर्जुस भवति वा । अयुः । अयान् । अवुः । अवान् ।

द्विषः ॥ ९४ ॥ द्विषः परस्य लङो झेर्जुस वा स्यात् । अद्विषुः । अद्विषन् ।



मिङ्शिद्गः ॥ ९५ ॥ धोर्विहिता मिङः शितश्च त्या गसंज्ञका भवंति । मिङ्--भूयते । तरति । शित्—गच्छन् । यजमानः ।

शेषोऽग एव ॥ ९६ ॥ मिङ्शिद्भ्यामन्यः शेषः अगसंज्ञक एव भवति । भविता । भवितुं । भवितव्यं ।

लिट् ॥ ९७ ॥ लिट् अगसंज्ञो भवति । पेचिथ । शेकिथ ।

लिङाशिषि ॥ ९८ ॥ आशिषि लिङ् अगसंज्ञो भवति । भावे-जागरिषीष्ट । कर्मणि—पविषीष्ट । आशिषीति किं ? जागृयात् । जागृयातां ।

* तुह्योस्ताङ्वा ॥ ९९ ॥ तुह्योराशिषि त्ताङ्वा स्यात् । जीवतात् भवान् । जीवतु भवान् । जीवतात् त्वं । जीव त्वं । कुरुतात् । पृच्छतात् ।

लुटोऽगस्य डारौरसः ॥ १०० ॥ लुटोऽगसंज्ञकस्य डारौरसो भवंति । श्रोता । श्रोतारौ । श्रोतारः । अध्येता । अध्येतारौ । अध्येतारः ।

इति जैनेंद्रव्याकरणे शब्दार्णवापरनामधेये शब्दार्णवचंद्रिकानाम्नि लघुवृत्तौ द्वितीयोऽध्यायः समाप्तः



# अथ तृतीयोऽध्यायः

## प्रथमःपादः ।

**ङ्याम्मृदः ॥ १ ॥** ङ्यंतादाबंतान्मृदश्च वक्ष्यमाणास्या भवंतीत्ययमधिकारो वेदितव्यः आ इञ्त्रिपेः । ङी इति स्वरूपग्रहणं । आबिति टाप्-डापोः सामान्यग्रहणं । मृदिति संज्ञानिर्देशः ।

**स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्-ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप् ॥ २ ॥** ङ्याम्मृदः स्वादयो भवंति । गौरी । गौर्यौ । गौर्यः । गौरीं । गौर्यौ । गौरीः । गौर्या । गौरीभ्यां । गौरीभिः । गौर्यै । गौरीभ्यां । गौरीभ्यः । गौर्याः । गौरीभ्यां । गौरीभ्यः । गौर्याः । गौर्योः । गौरीणां । गौर्यां । गौर्योः । गौरीषु ॥ माला । माले । मालाः । मालां । माले । मालाः । मालया । मालाभ्यां । मालाभिः । मालायै । मालाभ्यां । मालाभ्यः । मालायाः । मालाभ्यां । मालाभ्यः । मालायाः । मालयोः । मालानां । मालायां । मालयोः । मालासु । एवं– दामा । दामे । दामाः । दृषद् । दृषदौ । दृषदः । दृषदं । दृषदौ । दृषदः । दृषदा । दृषद्भ्यां । दृषद्भिः । दृषदे । दृषद्भ्यां । दृषद्भ्यः । दृषदः । दृषद्भ्यां । दृषद्भ्यः । दृषदः । दृषदोः । दृषदां । दृषदि । दृषदोः । दृषत्सु ।

**स्त्रियां ॥ ३ ॥** यदित ऊर्ध्वमनुक्रामिष्यामः तत्स्त्रियां वर्तमानान्मृदो भवतीत्यधिकारो वेदितव्यः । तत्रैवोदाहिष्यते ।

*** अजाद्यतां टाप् ॥ ४ ॥** अजादीनामकारांतानां च स्त्रियां टाप् स्यात् । अजा । एलका । चटका । कोकिला । अतः–देवदत्ता । खट्वा । कारीषगंध्या । स्त्रियामिति किं? अजः । देवदत्तः ।

*** ङ्युगिदन्नचोः ॥ ५ ॥** उगितः ऋकारांतान्नकारांतादंचत्यंताच्च ङी भवति । श्रेयसी । विदुषी । तत्रभवती । पचंती । कर्त्री । हर्त्री । राज्ञी । दंडिनी । प्राची । प्रतीची । उदीची । अपाची । कुब्धंचतेरेव उगितो नान्यस्मादिति । पर्णध्वत्कन्या ।

**वनोऽहशो रश्च ॥ ६ ॥** अहशंताद्यो वन् तदंतात् ङी भवति रेफश्चांतादेशः । धीवरी । पीवरी । मेरुदृश्वरी । शर्वरी । अहश इति किं? सहयुद्ध्वा स्त्री ।

**नेल्स्वस्रादेः ॥ ७ ॥** इल्संज्ञकात् स्वस्रादेश्च यदुक्तं तन्न स्यात् । पंच कुमार्यः । सप्त रोहिण्यः । स्वसा । दुहिता । ननांदा । याता ।

**मनो डाप् च ॥ ८ ॥** मन्नंतान्मृदः स्त्रियां डाप् स्यात् ङीनिषेधश्च । पामे । पामाः । पामानौ । पामानः । दामे । दामानौ ।

**अनश्च बात् ॥ ९ ॥** अन्नंताद् बसान्मृदः स्त्रियां डाप् स्यात् न ङी च । सुधर्मे । सुधर्माणौ । सुपर्वे । सुपर्वाणौ । बादिति किं? अतिपर्वणी यष्टिः ।

**वोङ्खे ॥ १० ॥** अन्नंताद् बसात् उङ्खवतः वा डाप् भवति न ङी च । बहुराजे । बहुराजानौ । बहुराज्ञ्यौ । बहुधीवे । बहुधीवानौ । बहुधीवर्यौ । उङ्ख इति किं? सुधर्मे । सुधर्माणौ । अन इति किं? सुमत्स्या नदी ।

**ङी खौ ॥ ११ ॥** अन्नंताद्बसात् ङी भवति खौ । अधिराज्ञी । सुराज्ञी ग्रामः ।

**ऊधनः ॥ १२ ॥** ऊधन्नंताद् बसात् ङी भवति । कुंडमिवोधो अस्याः कुंडोध्नी । घटोध्नी ।

*** दाम्नः स्येः ॥ १३ ॥** दामांताद् बसात् स्यिसंज्ञादेः ङी स्यात् । द्विदाम्नी । त्रिदाम्नी । स्येरिति किं? उद्दामा वडवा । उद्दाम्नी वडवा ।

*** हायनाद् वयसि ॥ १४ ॥** हायनांताद् बसात् स्यिसंज्ञादेर्ङी स्यात् वयसि गम्यमाने । द्विहायनी । त्रिहायणी वत्सा । वयसीति किं? चतुर्हायना शाला ।

**पादो वा ॥ १५ ॥** पादंताद् बसात् स्त्रियां वा ङी स्यात् । द्विपदी । द्विपात् । त्रिपदी । त्रिपात् ।

**टाबृचि ॥ १६ ॥** पादंतात्स्युसंज्ञकात् टाप्

स्यात् अदृष्यभिधेयायां । द्विपदा, त्रिपदा ऋक् । ऋचीति किं ? द्विपदी स्त्री ।

अनीचः ॥ १७ ॥ यदितोऽग्रे वक्ष्यामः तदनीचो वेदितव्यं । वक्ष्यति—दृग्टिड्ढादि । कुरुचरी । अनीच इति किं ? बहुकुरुचरा ।

* दृग्टिड्ढाजमठञ्ठञः ॥ १८ ॥ एभ्यः स्त्रियां ङी स्यात् । सौतंगमी नगरी । मद्रचरी । सौपर्णेयी । कुंभकारी । औत्सी । लाक्षिकी । पारायणिकी ।

* यञोऽयावटात् ॥ १९ ॥ यञंतान्मृदः स्त्रियां ङी स्यात् यकारांतादवटाच्च परं यञं विहाय । गार्गी । वात्सी । अयावटादिति किं ? गोकक्ष्या । आवट्या ।

फट् ॥ २० ॥ यञंताद् फट् स्यात् । गार्ग्यायणी । पौतिमाष्यायणी । आवट्यायनी ।

लोहितादिशकलांतात् ॥ २१ ॥ लोहितादिभ्यः शकलपर्यंतेभ्यः फट् स्यात् । लौहित्यायनी । शांशित्यायनी । शाकल्यायनी । लोहितादिः गर्गाद्यंतर्गणः ।

कौरव्यासुरिमांडूकात् ॥ २२ ॥ एभ्यः फट् भवति । कौरव्यायणी । आसुरायणी । मांडूकायनी ।

गौरादिभ्यः ॥ २३ ॥ एभ्यः स्त्रियां ङी स्यात् । गौरी । मत्सी । मानुषी ।

वयस्यनंत्ये ॥ २४ ॥ वयसि अनंत्ये वर्तमानान्मृदः स्त्रियां ङी स्यात् । कुमारी । किशोरी । बर्करी । अनंत्य इति किं ? स्थविरा ।

रात् ॥ २५ ॥ रसंज्ञकान्मृदः स्त्रियां ङी भवति । पंचपूली । पंचतक्षी । दशरथ्यट्वी ।

परिमाणादृदुपि ॥ २६ ॥ परिमाणांतात् राद् दृदुपि सति ङी स्यात् । द्वाभ्यां कुडवाभ्यां क्रीता द्विकुडवी । त्रिकुडवी । द्व्याढकी । परिमाणादिति किं ? पंचाश्वा ।

न बिस्ताचितकंबल्यात् ॥ २७ ॥ बिस्तापंताद् दृदुपि सति ङी न स्यात् । द्विबिस्ता । त्रिबिस्ता । द्व्याचिता । द्विकंबल्या ।

कांडात् क्षेत्रे ॥ २८ ॥ कांडात् रात् दृदुपि ङी न स्यात् क्षेत्रे । द्वे कांडे प्रमाणमस्याः द्विकांडा, त्रिकांडा क्षेत्रभक्तिः । क्षेत्र इति किं ? द्विकांडी रज्जुः ।

पुरुषात् प्रमाणे वा ॥ २९ ॥ पुरुषांतात् रात् प्रमाणे वा ङी स्यात् दृदुपि । द्वौ पुरुषौ प्रमाणमस्याः द्विपुरुषी । द्विपुरुषा । त्रिपुरुषी । त्रिपुरुषा खाना । प्रमाण इति किं ? द्विपुरुषा ।

गुणोक्तेरुतोऽखरुस्फोडः ॥ ३० ॥ गुणवचनान्मृदः खरुरुस्फोडवर्जितात् उकारांतात् वा ङी स्यात् । पटुः । पट्वी । मृदुः । मृद्वी । पृथुः । पृथ्वी । तनुः । तन्वी । गुणोक्तेरिति किं ? आखुरियं । उत इति किं ? शुचि स्त्री । अखरुस्फोडः इति किं ? खरुरियं । पांडुरियं ।

बह्वादेः ॥ ३१ ॥ बह्वादिभ्यो वा ङी स्यात् स्त्रियां । बहुः । बह्वी । पद्धतिः । पद्धती । अंचतिः । अंचती ।

+ इतोऽक्तेः ॥ ३२ ॥ अक्त्यंतादिकारांताद् मृदः स्त्रियां वा ङी स्यात् । भूमिः । भूमी । अशनिः । अशनी । आत्मंभरिः । आत्मंभरी । अक्तेरिति किं ? कृतिः ।

+ चंद्रभागान्नद्यां ॥ ३३ ॥ चंद्रभागाद्वा ङी भवति नद्यां । चंद्रभागी, चंद्रभागा नदी । चंद्रभागान्या ।

* शोणश्येतैतहरितभरतलोहिताद्वर्णाच्चो नश्च ॥ ३४ ॥ शोणादेर्वर्णवाचकात् वा ङी स्यात् तत्संनिधाने तकारस्य च नकारः । शोणी । शोणा । श्येनी, श्येता । एनी, एता । हरिणी, हरिता । भरणी, भरता । लोहिनी, लोहिता । शोणादेरिति किं ? पीता ।

* क्नोऽसितपलितात् ॥ ३५ ॥ वर्णवाचिभ्यामसितपलिताभ्यां वा ङी स्यात् तकारस्य च क्नादेशः । असिक्नी, असिता । पलिक्नी, पलिता

* काकशवलसारंगपिंगलकल्माषाद्

॥ ३६ ॥ कालादेर्वर्णवाचिनो मृदः स्त्रियां ङी भवति। काली। शबली। सारंगी। पिशंगी। पिंगली। कल्माषी। वर्णादिति किं? काला। शबला।

* रोहिणरेवताद्भे ॥ ३७ ॥ आभ्यां भे नक्षत्रे ङी स्यात्। रोहिणी। रेवती नक्षत्रं।

+ नीलात् प्राण्योषध्योः ॥ ३८ ॥ नीलात् ङी भवति प्राणिनि ओषधौ च। नीली गौः ओषधिश्च। नीला शाटी अन्यत्र।

+ खौ क्ताच्च ॥ ३९ ॥ क्तान्तान्नीलाच्च स्त्रियां ङी वा स्यात् खौ। प्रवृद्धा च सा विलूना च प्रवृद्धविलूनी। प्रवृद्धविलूना। नीली। नीला।

केवलमामकभागधेयपापापरसमानार्यकृतसुमंगलभेषजात् ॥ ४० ॥ एभ्यो ङी भवति खौ। केवली। मामकी। भागधेयी। पापी। अपरी। समानी। आर्यकृती। सुमंगली। भेषजी।

* कुण्डगोणस्थलभाजनागकुशकामुककबरकटात् पात्रावपनाकृत्रिमाश्राणास्थूलायसरिंसुकेशवेशश्रोणौ ॥ ४१ ॥ कुण्डादिभ्यः पात्रादिष्वर्थेषु यथासंख्यं स्त्रियां ङी भवति। कुंडी पात्रं। गोणी-आवपनं। स्थली-अकृत्रिमा। भाजी श्राणा। नागी-स्थूला। कुशी--अयोविकारः। कामुकी-रिंसुः। कबरी-केशवेशः। कटी-श्रोणी। अन्यत्र--कुंडा। गोणा। स्थला। भाजा। नागा। कुशा। कामुका। कबरा। कटा।

* क्षत्रियार्याद् वान् ॥ ४२ ॥ आभ्यां स्त्रियां आन् ङी वा स्यात्। क्षत्रियाणी। क्षत्रिया। आर्याणी। आर्या।

* पुंयोगादज्येष्ठादिभ्यः ॥ ४३ ॥ पुंयोगात् यः शब्दः स्त्रियां वर्तते तस्मात् ज्येष्ठादिवर्जितात् ङी भवति। उपाध्यायस्य भार्या उपाध्यायी। प्रष्ठी। महामात्री। पुंयोगादिति किं? यज्ञदत्ता। अज्येष्ठादिभ्य इति किं? ज्येष्ठा। कनिष्ठा। गोपालिका।

पूतक्रतुवृषाकप्यग्निकुसितकुसीदादै च ॥४४॥ एभ्यः पुंयोगात् ङी भवति ऐकारश्चान्तादेशः। पूतक्रतायी। वृषाकपायी। अग्नायी। कुसितायी। कुसीदायी।

मनोरौ च ॥ ४५ ॥ पुंयोगान्मनोः स्त्रियां ङी भवति ऐजंतादेशश्च। मनायी। मनावी।

* मातुलाचार्योपाध्यायाद्वानुक् च ॥४६॥ मातुलादेः पुंयोगात् स्त्रियां ङी भवत्यानुगागमोऽपि वा तत्संनिधाने। मातुली, मातुलानी, मातुला। आचार्यी, आचार्यानी, आचार्या। उपाध्यायी, उपाध्यायानी, उपाध्याया।

* वरुणभवशर्वरुद्रेन्द्रमृडात् ॥ ४७ ॥ एभ्यः पुंयोगात् ङी भवत्यानुक् च। वरुणानी। भवानी। शर्वाणी। रुद्राणी। इंद्राणी। मृडानी।

* सूर्याद्देव्यां ॥ ४८ ॥ सूर्यात् पुंयोगात् ङी भवत्यानुक् च देव्यां। सूर्याणी। सूरीत्यन्या।

+ टाप् ॥ ४९ ॥ सूर्याद् पुंयोगाद् टाप् स्यात् देव्यां। सूर्या देवी।

* यवयवनाद् दुष्टलिप्यो ॥५०॥ आभ्यां ङी भवत्यानुक् च दुष्टे लिपौ चार्थे। दुष्टो यवो यवानी। यवनानां लिपिर्यवनानी। अन्यत्र। यवा। यवना।

* हिमारण्यादुरौ ॥ ५१ ॥ आभ्यां ङी भवत्यानुक् च उरौ महत्यर्थे। उरु हिमं हिमानी। उर्वरण्यमरण्यानी। हिमा, अरण्यान्यत्र।

* पतिवत्न्यंतर्वत्न्यविधवागर्भिणी ॥५२॥ पतिवत्नी अंतर्वत्नी च निपात्यते अविधवा गर्भिणी चेत्। पतिरस्याः अस्तीति पतिवत्नी जीवत्पतिः। मतोर्वत्वं नुक् च ङ्यां। पतिमती पृथ्वीत्यन्यत्र। अंतरस्यामस्तीति अंतर्वत्नी गर्भिणी। मतोर्वत्वं नुक् च।

* वा नः पत्यंतस्य ॥ ५३ ॥ पतिशब्दांतस्य नादेशो भवति वा। दृढः पतिरस्याः दृढपत्नी। दृढपतिः। एवं-वृद्धपत्नी। स्थिरपत्नी। स्थूलपत्नी। दासपत्नी। ग्रामपत्नी।

सपत्न्यादौ ॥ ५४ ॥ सपत्न्यादिषु प-

१। नास्य स्थाने सूत्रं वार्तिकं वा।

विकल्पस्य आदेशो भवति । समानः पतिरस्याः सपत्नी । एकपत्नी । वीरपत्नी ।

* करणात् क्रीतात् ॥ ५५ ॥ करणपूर्वात् क्रीतान्तात् ङी स्यात् । वस्त्रेण क्रीयते स्म वस्त्रक्रीती । वसनक्रीती । करणादिति किं ? सुक्रीता ।

क्तादल्पे ॥ ५६ ॥ करणपूर्वात् क्तान्तात् ङी भवत्यल्पेऽर्थे । अभ्रैर्विलिप्यते स्म अभ्रविलिप्ती द्यौः । सूपविलिप्ती पात्री । अल्पे इति किं ? चंदनानुलिप्ता स्त्री ।

* जातेर्वाऽप्रतिपज्जन्मात्क्तः ॥ ५७ ॥ जातिपूर्वात् क्तान्तात् प्रतिपदादिवर्जितात् बसात् ङी स्यात् । शंखो भिन्नो अस्याः शंखभिन्नी । ऊरुभिन्नी । केशलूनी । जानुभग्नी । जातेरिति किं ? मासयाता । बादिति किं ? पादपातिता । अप्रतिपदादेरिति किं ? दंतप्रतिपन्ना । दंतमिता । दंतजाता । दंतकृता ।

* पाणिगृहीत्यादिः पत्नी ॥ ५८ ॥ पाणिगृहीत्यादिङ्यन्तो बसः साधुः स्यात् पत्नी चेद्वाच्या चेत् । पाणिर्गृहीतो यस्याः सा पाणिगृहीती । करगृहीती । पाण्यात्ती । पाणिगृहीताऽन्या ।

* बाऽस्वस्त्राऽस्वांगात् ॥ ५९ ॥ अस्वांगजातिवाचिनः परात् क्तान्तात् प्रतिपदादिवर्जिताद् बसात् वा ङी स्यात् । सांगरं जग्धमनया सांगरजग्धी । सांगरजग्धा । पलांडुभक्षिती । पलांडुभक्षिता । सुरापीती । सुरापीता । अवस्त्रास्वांगादिति किं ? वस्त्रं छन्नमस्याः वस्त्रछन्ना । शार्ङ्गजग्धा ।

स्वांगाद्वाऽस्फोडः ॥ ६० ॥ स्वांगादीचः स्फोडवर्जितात् स्त्रियां ङी वा स्यात् । स्निग्धमुखी । स्निग्धमुखा । पृथुस्तनी । पृथुस्तना । दीर्घकेशी । दीर्घकेशा । स्वांगादिति किं ? बहुयवा । बाधिकारे पुनर्व्यग्रहणं पार्थं । प्रामकेशी, प्रामकेशा शिखा । निष्केशी, निष्केशा यूका । अस्फोड इति किं ? सुगुल्फा । कल्याणगुल्फा । चारुपार्श्वा ।

* नासिकोदरौष्ठजंघादंतकर्णशृंगांगजंगात्रकंठात् ॥ ६१ ॥ न्यग्भूतनासिकाद्यंतात् स्त्रियां ङी वा स्यात् । दीर्घनासिकी । दीर्घनासिका । तनूदरी । तनूदरा । बिम्बोष्ठी । बिम्बोष्ठा । समजंघी । समजंघा । समदंती । समदंता । चारुकर्णी । चारुकर्णा । तीक्ष्णशृंगी । तीक्ष्णशृंगा । मृद्वंगी । मृद्वंगा । तनुगात्री । तनुगात्रा । कलकंठी । कलकंठा ।

+ दीर्घजिह्वात् ॥ ६२ ॥ अस्मात् स्वांगवाचकाद् वा ङी स्यात् । दीर्घजिह्वा । दीर्घजिह्वी ।

+ पुच्छात् ॥ ६३ ॥ पुच्छात् स्वांगाद् ईचः स्त्रियां वा ङी स्यात् । कल्याणपुच्छी । कल्याणपुच्छा ।

+ मणिशरकबरविषात् ॥ ६४ ॥ मण्यादिपूर्वात् पुच्छान्तादीचः ङी स्यात् । मणिः पुच्छे अस्याः मणिपुच्छी । शरपुच्छी । कबरं पुच्छमस्याः—कबरपुच्छी । विषपुच्छी ।

पक्षाच्चेवात् ॥ ६५ ॥ इवार्थात् पक्षान्तात्पुच्छान्ताच्च नीचः स्त्रियां ङी स्यात् । उलूक इव पक्षौ यस्याः सा उलूकपक्षी शाला । उलूकपुच्छी सेना ।

न क्रोडादिबह्वचः ॥ ६६ ॥ क्रोडाद्यंतात् बह्वजंताच्च मृदः स्त्रियां ङी न स्यात् । कल्याणी क्रोडाऽस्याः कल्याणक्रोडा । कल्याणखुरा । कल्याणबाला । बह्वचः—पृथुजघना । दृढहृदया । महाललाटा ।

सहनञ्विद्यमानात् ॥ ६७ ॥ सहादिभ्यः परात् स्वांगात् ङी न स्यात् । सकेशा । सनासिका । अकेशा । अनासिका । विद्यमानकेशा । विद्यमाननासिका ।

नखमुखात् खौ ॥ ६८ ॥ नखमुखान्तात् ङी न स्यात् खौ । शूर्पणखा । व्याघ्रणखा । गौरमुखा । कालमुखा । खाविति किं ? शूर्पमिव नखा यस्याः सा शूर्पनखी । शूर्पनखा । चन्द्रमुखी । चन्द्रमुखा ।

* सख्यशिश्वीनार्यः ॥ ६९ ॥ एते शब्दा निपात्यंते । सखीयं । सखिशब्दाद्वा ङी स्यात् सखायमपि च नित्यं ङील्यः । नास्याः शिशुरस्ति अशिश्वी । नारी स्त्री । नृनरयोः ङी नारादेशश्च ।

* जातेरयोङ्युपधात् ॥ ७० ॥ योपधवर्जितादतः जातिवाचिनः स्त्रियां ङी स्यात् । कुक्कुटी । कठी । मयूरी । शूकरी । जातेरिति किं ?

च्छूद्रा। अयोऽशूद्रादिति किं ? इभ्या। आर्या। क्षत्रिया। शूद्रा।

*पाककर्णपर्णवालयोः ॥ ७१ ॥ पाकादिपूर्वाज्जातिवाचिनः स्त्रियां ङी स्यात्। ओदनस्य पाक इव पाको यस्याः सा ओदनपाकी। मूषिककर्णी। शालिपर्णी। अश्ववाली। नियमोऽयं वै नित्यं स्त्रीविषया जातिवाचिनः शब्दास्तेषु ऐभ्य एव स्त्रियां ङी नान्यस्मात्। बलाका। मक्षिका।

+पुष्पादसत्कांडप्रांतशतैकाचः ॥ ७२ ॥ सदादिवर्जितात् पुष्पांतात् ङी भवति। शंखपुष्पी। सुवर्णपुष्पी। असदादेरिति किं ? सत्पुष्पा। कांडपुष्पा। प्रांतपुष्पा। शतपुष्पा। एकपुष्पा, प्राक्पुष्पा।

+फलादसंभस्त्राजिनशणपिंडात् ॥ ७३ ॥ समादिवर्जितात् फलांतात् ङी भवति। दासीफली। पूगफली। असमादेरिति किं ? संफला। भस्त्राफला। एकफला। अजिनफला। शणफला। पिंडफला।

+मूलादनञः ॥ ७४ ॥ अनञ्पूर्वात् मूलांतात् ङी भवति। दर्भमूली। शीर्षमूली। अनञ इति किं ? अमूला।

*नुरितः ॥ ७५ ॥ इकारांतात् नुर्मनुष्यस्य जातिवाचकात् ङी भवति। कुंती। अवंती। दाक्षी। औदमेयी। नुरिति किं ? तित्तिरिः। इत इति किं ? दरदा।

*ऊङुतोऽयोः ॥ ७६ ॥ युशब्दांतवर्जितात् उकारांतात् नृजातिवाचिनः स्त्रियां ऊङ् भवति। इक्ष्वाकूः। कुरूः। पशूः। उत इति किं ? चित्। अयोरिति किं ? अध्वर्युः।

पंगोः ॥७७॥ पंगुशब्दाद् ऊङ्भवति। पंगूः।

+श्वश्रूः ॥ ७८ ॥ श्वशुरशब्दस्योकाराकारयोः खं ऊङ्चास्यो निपात्यः। श्वश्रूः।

ऊरूत्तरपदादौपम्ये ॥ ७९ ॥ ऊरूत्तरपदादिवार्थे ऊङ्भवति। करभस्य ऊरुरिव ऊरू यस्याः सा करभोरूः। कदलीस्तंभोरूः। करिकरवृत्तोरूः। इव इति किं ? वृत्तोरू पुत्री।

*सहसाहितसंहितशफलक्ष्मणवामादेः ॥८० सहादिपूर्वात् ऊरुयोः ऊङ्भवति। सहोरूः। संहितोरूः। संहितोरूः। शफोरूः। लक्ष्मणोरूः। वामोरूः।

बाह्वंतकद्रुकमंडलोः खौ ॥ ८१ ॥ बाहुशब्दांतात् कद्रुकमंडलुभ्यां च ऊङ्भवति खौ। भद्रबाहूः। भद्रबाहूः। कद्रूः। कमंडलूः। खाविति किं ? वृत्तबाहुः। कद्रुः। कमंडलुः।

इतः ॥ ८२ ॥ इत इत्ययमधिकारो वेदितव्यः आ इचः। तत्रैवोदाहरिष्यामः।

यूनस्तिः ॥ ८३ ॥ युवन्शब्दात्तिर्भवति स्त्रियां। युवतिः।

ष्योऽणिञो रूपांत्ययोर्गोत्रेऽनार्षेऽणिञोः ॥८४ अणिञौ यौ गोत्रेऽनार्षे विहितौ अणु मध्ये रूपांत्यौ तयोः ष्यो भवति। करीषगंधेरपत्यं स्त्री कारीषगंध्या। कौमुदगंध्या। देवदत्त्या। रूपांत्ययोरिति किं ? औपगवी। गोत्र इति किं ? अहिच्छत्रे जाता आहिच्छत्री। अनार्ष इति किं ? वाशिष्ठी। अणिञोरिति किं ? आर्तभागी।

*गोत्रांशाद् वृद्धे ॥ ८५ ॥ गोत्रांशात् गोत्रावयवात् वृद्धे अनार्षे विहितयोः अणिञोः ष्यो भवति। पुणिकस्यापत्यं वृद्धं स्त्री पौणिक्या। भौणिक्या।

क्रौडादिभ्यः ॥ ८६ ॥ एभ्योऽणिञोः ष्यो भवति। क्रोडस्यापत्यं स्त्री क्रौड्या। व्याड्या, चोपयतोऽपत्यं स्त्री चोपयत्या। चैटयत्या।

+सूत्याभोज्ये युवतिक्षत्रिये ॥ ८७ ॥ सूत्याभोज्य इति सूतभोजशब्दौ स्त्रियां ष्यांतौ निपात्यौ युवतौ क्षत्रियायां च। सूत्या युवतिः। भोज्या क्षत्रिया। अन्यत्र-सूता। भोजा।

*देवयज्ञिशौचिवृक्षिसात्यमुग्रिकांठेविद्धाद्वा ॥८८ एभ्यः परस्येञः स्त्रियां ष्यो वा स्यात्। देवयज्ञस्यापत्यं स्त्री देवयज्ञ्या। देवयज्ञी। शौचिवृक्ष्या। शौचिवृक्षी। सात्यमुग्र्या। सात्यमुग्री। कांठेविध्या, कांठेविद्धी।

*वाधात् समर्थात् ॥ ८९ ॥ वेति च आ-धादिति समर्थादिति च एतत्त्रयं अधिकृतं वेदि-

त्यम् । वक्ष्यति—तस्यापत्यमिति । उपगोरपत्यं औपगवः । वाग्रहणाद् वाक्यमपि साधुः । आद्यादिति किं ? अपत्यशब्दास्येत्पत्तिर्मा भूत् । समर्थादिति किं ? कंबल उपगोरपत्यं देवदत्तस्य ।

+ गोत्रयोर्गोत्रादिवाजिह्वाहरितकात्यात् ९०
जिह्वाकात्यहरितकात्यवर्जितात् गोत्रयोः गोत्रादिव वक्ष्यमाणस्त्यो भवति । कंबलचारायणस्येमे कंबलचारायणीयाः । वृद्धकाश्यपीयाः । अजिह्वाहरितकात्यादिति किं ? जिह्वाचपलः कात्यः जिह्वाकात्यः । तस्येमे जैह्वाकाताः । हरितभक्षः कात्यः हरितकात्यः तस्येमे हारितकाताः—अणेवात्र न तु छः ।

+ गोर्योऽचि ॥ ९१ ॥ गोशब्दात् अजादित्यप्रसंगे यत्यो भवति । गोरपत्यं गव्यः । गौर्देवताऽस्य गव्यः । गवि भवं गव्यं । अचीति किं ? गोमयं ।

प्राग्द्रोरण् ॥ ९२ ॥ प्राग् द्रुशब्दात् येऽर्था वक्ष्यन्ते तेष्वण् अधिकृतो वेदितव्यः । वक्ष्यति—तेन रक्तं रागात् । कषायेण रक्तं वस्त्रं काषायं ।

अश्वपत्यादेः ॥ ९३ ॥ अश्वपत्यादिभ्यो वाऽण् भवति प्राग् द्रोरर्थेषु । आश्वपतः । गाणपतः । धानपतः ।

* यमादित्यदित्यादित्यपतियोर्ण्योऽणपवादे चाऽस्वे ॥ ९४ ॥ यमादेः पतियोश्च प्राग्द्रीये स्ववर्जितेऽर्थेऽपत्यादौ अणपवादविषये च ण्यः स्यात् । यमस्यापत्यं यमो देवता वाऽस्य-याम्यः । दितेरपत्यं दैत्यः । अदितेरपत्यं आदित्यः । आदित्यस्यापत्यं आदित्यः । वानस्पत्यः । बार्हस्पत्यः । सैनापत्यः । प्राजापत्यः । अणपवादे च—याम्यः । आदित्यः । अत इञ् प्राप्तः । अस्व इति किं ? उष्ट्रपतिर्नाम वाहनं तस्य स्वं—औष्ट्रपतं । पत्यादित्यण् ।

+ बहिषष्टीकण् च ॥ ९५ ॥ बहिःशब्दात् टीकण् स्यात् ण्यश्च । बहिर्जातो बाहीकः । ब.ढः । बाहीकी ।

+ ञः पृथिव्याः ॥ ९६ ॥ पृथिवीशब्दात् प्राग्द्रीयेऽर्थे ञो भवति । पृथिव्याः अपत्यं तत्र भवो वा पार्थिवः । पार्थिवा ।

उत्सादेश्चाञ् ॥ ९७ ॥ एभ्यः पृथिव्याश्च प्राग्द्रीयेऽञ् भवति । औत्सः । औदपानः । तरुणी—तारुणः । पार्थिवः । पार्थिवी ।

+ ग्रीष्मादच्छंदसि ॥ ९८ ॥ ग्रीष्मादञ् भवत्यच्छंदसि । ग्रीष्मे भवः ग्रैष्मः घर्मः । अछंदसीति किं ? ग्रैष्मो देवताऽस्याः ग्रैष्मी त्रिष्टुप् ।

+ बष्कयादसे ॥ ९९ ॥ बष्कयशब्दात् प्राग्द्रीयेऽर्थे अञ् भवत्यसे । बष्कयस्यापत्यं बाष्कयः । अस इति किं ? सौबष्कयिः ।

+ देवाद्यञ् च ॥१००॥ देवात् यञ् भवति अञ् च । दैव्यं । दैवं ।

* कल्यग्नेर्ढण् ॥ १०१ ॥ आभ्यां ढण् स्यात् प्राग्द्रीयेऽर्थे । कलिर्देवताऽस्य तत्र भवं तस्मादागतं वा कालेयं । आग्नेयं ।

स्थाम्नोऽत् ॥ १०२ ॥ स्थामन्शब्दांतात् प्राग्द्रीयेऽर्थे अद्भवति । अश्वत्थाम्नोऽपत्यं अश्वत्थामः ।

+ लोम्नोऽपत्येषु ॥१०३॥ लोमन्शब्दांतात् अपत्येषु बहुषु अद्भवति । उडुलोम्नोऽपत्यानि बहूनि उडुलोमाः । शरलोमाः । अपत्येष्विति किं ? औडुलोमिः ।

गोत्रेऽञ्यनुप् ॥१०४॥ यस्कादेर्गोत्रे इत्यादिना य उक्तः तस्य प्राग्द्रीयेऽर्थे अजादित्यविषये अनुप् भवति । यस्कानां छात्राः यास्कीयाः । शिवादण उप् प्राप्तः । गार्गीयाः । आत्रेयीयाः । गर्गादियञः । अचीति किं ? गर्गेभ्य आगतं गर्गरूप्यं । गर्गमयं । प्राग्द्रोरिति किं ? गर्गेभ्यो हितं गर्गीयं ।

+ गर्गभार्गविका ॥१०५॥ अणोऽनुप् निपात्यते विवाहे वुन्यचि । गर्गाणां भृगूणां च यूनां विवाहो गर्गभार्गविका ।

रादुबनपत्ये ॥१०६॥ रादनुबंतात् परो योऽजादिह्त् तस्योप् भवत्यपत्यवर्जिते प्राग्द्रीयेऽर्थे । पंचसु गुरुषु भवः पंचगुरुर्नमस्कारः । दशधर्मो मोक्षः । द्वावनुयोगा अधीते द्व्यनुयोगः । त्र्यनुयोगः । अनुप इति किं ? पंचसु कपालेषु संस्कृतं पंचकपालं । तस्येदं पांचकपालं । अनपत्य इति किं ? द्वयोर्देवदत्तयोरपत्यं द्वैदेवदत्तिः । त्रैदेवदत्तिः ।

यूनि ॥ १०७ ॥ यूनि यत्यस्तस्योप् भवति अजादित्यविषये । फांटाहृतस्यापत्यं युवा फांटाहृतिः ।

तस्यापत्यं युवा फांटाहृतः। तस्य यूनः छात्राः फांटाहृताः। णस्येऽपि सति इञंतं शब्दरूपमिति इञः इत्यञ् भवति। भागवित्तेरपत्यं युवा भागवित्तिकः। तस्य छात्राः भागवित्ताः ठण उपि कृतेऽप्राप्यऽञ्।

फणफिणोर्वा ॥ १०८ ॥ फणः फिञश्च युवत्यस्य वोप् भवति प्राग्दवीयेऽजादौ त्ये विवक्षिते। गार्ग्यायणस्य यूनश्छात्राः गार्गीयाः। गार्ग्यायणीयाः। यास्कायनेः छात्राः यास्कीयाः। यास्कायनीयाः।

*स्त्रीपुंसान्नण्स्नणौ वतः ॥ १०९ ॥ प्रागवतो येऽर्थाः वक्ष्यंते तेषु स्त्रीपुंसशब्दाभ्यां नण्स्नणौ स्तः। स्त्रियाः अपत्यं, स्त्रीषु भवं, स्त्रीणां समूहः, स्त्रीभ्य आगतं, स्त्रीभ्यो हितं वा स्त्रैणं। पौंस्नं। स्त्रैणी। पौंस्नी। प्रागवत इति किं? स्त्रीवत्। पुंवत्।

+त्वे वा ॥ ११० ॥ स्त्रीपुंसाभ्यां तौ वा स्तः त्वत्ये विषये। स्त्रियाः भावः स्त्रैणं, स्त्रीत्वं। पौंस्नं। पुंस्त्वं।

तस्यापत्यं ॥ १११ ॥ तस्येति तासमर्थात् अपत्यमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति। उपगोरपत्यं औपगवः। आश्वपतः। सैनापत्यः। औत्सः।

पौत्रादि वृद्धं ॥ ११२ ॥ प्रथमस्यापत्यवतो यदपत्यं पौत्रादि तत् वृद्धसंज्ञं भवति। गर्गस्य पौत्राद्यपत्यं गार्ग्यः। पौत्रादीति किं? गार्गिः।

एकः ॥ ११३ ॥ वृद्धेऽपत्ये विवक्षिते आद्यप्रकृतेरेक एव त्यो भवति। गर्गस्यापत्यं गार्ग्यः तस्यापि गार्ग्यः।

ततो यूनि ॥ ११४ ॥ ततो वृद्धत्यांतात् यून्यपत्ये एक एव त्यो भवति। गर्गस्यापत्यं युवा गार्ग्यायणः। औपगवस्यापत्यं युवा औपगविः,

*सति वंश्ये युवाऽस्त्री ॥ ११५ ॥ वंश्ये पित्रादौ सति जीवति पौत्रादेर्यदपत्यं चतुर्थादिकं स्त्रीवर्जितं तद् युवसंज्ञं स्यात्। गर्गे सति गार्ग्यायणः। मृते—गार्ग्यः। अस्त्रीति किं? गार्ग्यस्यापत्यं स्त्री गार्गी।

*भ्रातरि ज्यायसि ॥ ११६ ॥ भ्रातरि च ज्यायसि जीवति कनीयान् युवसंज्ञो भवति। गार्ग्यायणो लघुभ्राता।

+ सदृ। सपिंडेऽधिकवयःस्थाने ॥ ११७ ॥ प्रथमप्रकृतेः पौत्रादेरपत्यं स्त्रीवर्जितं वयःस्थानाभ्यां अधिके सपिंडे जीवति सति सज्जीवदेव युवसंज्ञं वा स्यात्। गार्ग्यायणो गार्ग्यः। दाक्षायणः। दाक्षिः।

*आर्योऽर्चाकुत्सयोः॥११८॥ वृद्धस्यार्चायां यूनश्च कुत्सायां आर्थः संज्ञाव्यतिहारः स्याद् वा। गर्गस्यापत्यं वृद्धं अर्चितं तत्रभवान् गार्ग्यायणः। तत्रभवान् गार्ग्यः। गर्गस्यापत्यं युवा कुत्सितः गार्ग्यः, गार्ग्यायणो वा जाल्मः।

*इञतः ॥११९॥ अकारान्मृदः तासमर्थादपत्ये अनंतरे वृद्धे यूनि च इञ् भवति। अस्यापत्यं इः। आकंपनिः। आश्वग्रीविः।

*बाह्वादिभ्यो गोत्रे ॥१२०॥ एभ्यस्तासमर्थेभ्योऽपत्ये गोत्रेऽर्थे इञ्स्यात्। बाहविः। औपचाकविः। औदंचिः।

*वर्मणोऽचक्रात् ॥ १२१ ॥ चक्रवर्जितात् परात् वर्मन् शब्दाद् अपत्येऽर्थे इञ् भवति। जैनवर्मिः। अचक्रादिति किं? चाक्रवर्मणः।

+अजादिभ्यो धेनोः ॥१२२॥ एभ्यःपरात् धेनुशब्दादपत्येऽर्थे इञ् भवति। आजधेनविः। आजधेनविः। बाष्कधेनविः। बाष्कधेनविः।

+ब्राह्मणाद्वा ॥१२३॥ ब्राह्मणात् परो यो धेनुशब्दस्तदंतादपत्येऽर्थे वा इञ् स्याद्। ब्राह्मणधेनविः। ब्राह्मणधेनवः।

पाडिवाड्वलिसांभूव्यांभ्यामितौज्यौदिः॥ १२४॥ एते अपत्यार्थे इञंताः निपात्याः। षण्णामपत्यं षाडिः। डत्वं निपात्यं। वाग्वादस्यापत्यं वाड्वलिः। वाचो डत्वं योश्च वलभावः। संभूयसः सांभूयिः। अंभसः—आंभिः। अमितौजसः—आमितौजिः। सलमत्र। उदकस्य—औदिः। कलमत्र।

१ मृतेऽपि वंश्ये प्राप्त्यर्थमिदं। २ वयोः पूर्वः सप्तमः एकस्मादन्योऽन्यस्य सपिंडौ। ३ जनापत्यं संतानस्य समवायदेशनिमित्तं कपेरनुदेशोऽऽस्थः पुरुषो बलम्नूनं गोत्रं।

* व्यासादेरकङ् च ॥१२५॥ अपत्यार्थे इञ् भवति तत्संनियोगे अकङ् चांतादेशः । व्यासस्यापत्यं वैयासकिः । सुधातुरपत्यं सौधातकिः ।

+ शुभ्रपुनर्भूदुहितृननांदृभ्यो ऽनंतरेऽञ् ॥१२६॥ एभ्योऽनंतरेऽपत्ये अञ् स्यात् । पौत्रः । पौनर्भवः । दौहित्रः । नानांद्रः ।

+ पाराशवः ॥१२७॥ परस्त्रीशब्दस्यानंतरेऽपत्ये अञ् निपात्यः परशुभावश्च । परा स्त्री परस्त्री । तस्यापत्यं पाराशवः ।

* विदादेर्वृद्धेऽनृष्यानंतर्ये ॥१२८॥ विदादिभ्यो वृद्धेऽपत्ये अञ् स्यात् ऋषीणामानंतर्यं विहाय । बैदः । और्वः ।अनृष्यानंतर्ये इति किं ? इंद्रभूः सप्तमः काश्यपानां ।

* कुंजादेर्ञ्यः ॥१२९॥ कुंजादिभ्यो वृद्धेऽपत्ये ञ्यो भवति । कुंजस्यापत्यं कौंजायन्यः । ब्राध्नायन्यः । शालायन्यः ।

* नडादिभ्यः फण् ॥१३०॥ एभ्यः फण् स्यात् वृद्धेऽपत्ये । नाडायनः । चारायणः । मौंजायनः ।

हरितायनः ॥ १३१ ॥ हरितादेरंतात् वृद्धे वर्तमानात् अपत्ये यूनि फण् भवति । हारितस्यापत्यं युवा हारितायनः । कैंदासायनः ।

यञिञः ॥ १३२ ॥ यञंतादिञंताच्च वृद्धे वर्तमानादपत्ये यूनि फण् स्यात् । गार्ग्यायणः । वात्स्यायनः । दाक्षायणः ।

+ क्रोष्टुसलंकोः लं ॥१३३॥ आभ्यां वृद्धेऽपत्ये फण् स्यात् अंते अलश्च लं । क्रोष्टुरपत्यं क्रोष्टायनः । सालंकायनः ।

* शरद्वच्छुनकदर्भाग्निशर्मकृष्णरणात् भृगुवत्साग्रायणवृषगणब्राह्मणवासिष्ठे ॥ १३४ ॥ शरद्वदादिभ्यो भार्गवादिषु वृद्धापत्येषु गम्येषु फण् भवति । शारद्वतायनो भार्गवः । शौनकायनो वात्स्यः । दार्भायणः-आग्रायणः । आग्निशर्मायणो वार्षगण्यः । कार्ष्णायनो ब्राह्मणः । राणायनो वासिष्ठः । अन्यत्र—शारद्वतः । शौनकः । दार्भिः । आग्निशर्मिः । कार्ष्णिः । राणिः ।

द्रोणपर्वतजीवंताद्वा ॥ १३५ ॥ एभ्यो वृद्धेऽपत्ये फण् स्याद् वा । द्रोणायनः, द्रौणिः । पार्वतायनः, पार्वतिः । जैवंतायनः, जैवंतिः ।

गर्गादेर्यञ् ॥१३६॥ गर्गादिभ्यो यञ् स्यात् वृद्धेऽपत्ये । गार्ग्यः । वात्स्यः । वाज्यः ।

मधुबभ्रोर्ब्राह्मणकौशिके ॥१३७॥ मधुबभ्रुभ्यां वृद्धेऽपत्ये यथासंख्यं ब्राह्मणे कौशिके चार्थे यञ् स्यात् । माधव्यो ब्राह्मणः । बाभ्रव्यः कौशिकः । माधवः, बाभ्रवोऽन्यत्र ।

कपिबोधादांगिरसे ॥ १३८ ॥ आभ्यां यञ् स्यात् आंगिरसे वृद्धे अपत्ये । काप्यः, बौध्यः । कापेयः, बौधिरन्यः ।

वतंडात् ॥१३९॥ अस्माद् यञ् स्यादांगिरसे वृद्धे । वातंड्यः ।

स्त्रियामुप् ॥ १४० ॥ वतंडादांगिरसेऽपत्ये वृद्धे यञ उप् स्यात् स्त्रियां । वतंडी ।

अश्वादेः फञ् ॥ १४१ ॥ अश्वादिभ्यः अपत्ये वृद्धे फञ् स्यात् । आश्वायनः । शालायनः । जानायनः ।

+ शफभरद्वाजादात्रेये ॥ १४२ ॥ आभ्यां फञ् भवत्यात्रेयेऽपत्ये वृद्धे । शाफायनः । भारद्वाजायनः - आत्रेयः । अन्यत्र--शाफिः । भारद्वाजः ।

भर्गात्रेयात् त्रैगर्तभारद्वाजे ॥ १४३ ॥ भर्गात्रेयाभ्यां यथासंख्यं फञ् स्यात् त्रैगर्ते भारद्वाजे च । भार्गायणः । आत्रेयायणः । अन्यत्र भार्गिः । आत्रेयिः ।

* शिवादेरण् ॥१४४॥ शिवादिभ्योऽण् भवत्यपत्ये । शैवः । प्रौष्ठः । जांबः ।

* नदीमानुषीनाम्नोऽद्वोः ॥१४५॥ नदी-

नाम्नो मानुषीनाम्नश्च अदुसंज्ञादपत्ये अण् भवति। यमुनायाः अपत्यं—यामुनः प्रणेताः। ईरावत्याः ऐरावतः। औघ्यः। दैवदत्तः। सौदर्शनः। सौतारः। स्वायंप्रभः। नदीमानुषीग्रहणं किं? सौपर्णेयः। वैनतेयः। अदोरिति किं? चान्द्रभागेयः।

कुर्वृष्यंधकवृष्णिभ्यः॥१४६॥ एभ्योऽण् भवति। कुरुभ्यः—नाकुलः। दौर्योधनः। ऋषिभ्यः—वाशिष्ठः। गौतमः। अंधकेभ्यः-श्वाफल्कः। चैत्रकः। वृष्णिभ्यः-औदारः। वासुदेवः।

* स्यिसंभद्रान्मातुरुच्च॥१४७॥ स्यिसंज्ञात् सम्भद्राभ्यां च परो यो मातृशब्दः तदंतादपत्येऽण् स्यात्। उकारश्चांतादेशः। द्वयोर्मात्रोरपत्यं द्वैमातुरः। शातमातुरः भरतः। साम्मातुरः। भद्रमातुरपत्यं भाद्रमातुरः। स्योदरिति किं? वैमात्रेयः।

* कन्यात्रिवेण्योः कनीनत्रिवणौ॥१४८॥ कन्यात्रिवेणीभ्यां अपत्येऽर्थेऽण् भवति कनीनत्रिवणौ चादेशौ स्तः। कानीनः कर्णः। त्रिवेणी-त्रैवणः।

+ विश्रवसो नड्रवणौ॥१४९॥ विश्रवस्-शब्दादपत्येऽर्थे अण् भवति नड्रवणौ चादेशौ स्तः। विश्रवसोऽपत्यं—वैश्रवणः। रावणः।

* विकर्णछागलाद् वात्स्यात्रेये॥१५०॥ आभ्यां यथासंख्यमण् स्यात् वात्स्ये आत्रेये चापत्ये। वैकर्णः। छागलः। अन्यत्र-वैकर्णिः। छागलिः।

* शुंगाभ्यां भारद्वाजे॥१५१॥ शुंगात् पुलिंगात् स्त्रीलिंगाच्चाण् स्यात् भारद्वाजेऽपत्ये। शुंगस्य शुंगाया वापत्यं-शौंगः भारद्वाजः। शौंगिः, शौंगेयश्चान्यः।

* पीलामंडूकाद्वा॥१५२॥ आभ्यामण् वा स्यात् अपत्ये। पैलः। पैलेयः। मांडूकः। मांडूकिः।

* ढण् दितेश्च॥१५३॥ दितेर्मंडूकाच्चापत्ये ढण् वा स्यात्। दैतेयः। दैत्यः। मांडूकेयः। मांडूकिः।

* स्त्रीस्यात्॥१५४॥ स्त्रीत्यांतादपत्ये ढण् स्यात्। वायुवेगेयः। वासवदत्तेयः।

* द्व्यचोऽनद्याः॥१५५॥ द्व्यचः स्त्रीत्वात् अनदीवाचकाद् अपत्ये ढण् स्यात्। दात्तेयः। गौप्तेयः। अनद्या इति किं? शीतायाः-शैतः। सैप्रः।

इतोऽनिञः॥१५६॥ इकारांताद् अनिञो द्व्यच्कात् अपत्ये ढण् स्यात्। नाभेयः। दाक्षेयः। बालेयः। शांतेयः। अनिञ इति किं? दाक्षायणः द्व्यच इति किं? मारीचः।

शुभ्रादिभ्यः॥१५७॥ एभ्योऽपत्ये ढण् स्यात्। शौभ्रेयः। वैष्टपुरेयः। कार्पूरेयः।

+ श्यामलक्ष्मणाद् वाशिष्ठे॥१५८॥ आभ्यामपत्ये वाशिष्ठे ढण् स्यात्। श्यामेयः, लाक्ष्मणेयः—वाशिष्ठः। श्यामायनो लाक्ष्मणिरन्यत्र।

विकर्णकुषितकात् काश्यपे॥१५९॥ आभ्यां ढण् स्यात् अपत्ये काश्यपे। वैकर्णेयः। कौषितकेयः। काश्यप इति किं? वैकर्णिः। कौषितकिः।

भ्रुवो वुक्॥१६०॥ भ्रुवोऽपत्ये ढण् स्यात् वुक् चागमः। भ्रौवेयः।

* कल्याण्यादेर्डिन्॥१६१॥ कल्याणीप्रभृतीनामपत्ये ढण् स्यात् डिनादेशश्च। कल्याण्याः अपत्यं-काल्याणिनेयः। सौभागिनेयः। दौर्भागिनेयः।

कुलटाया वा॥१६२॥ कुलटाशब्दादपत्ये ढण् भवति डिन् च वा। कौलटिनेयः। कौलटेयः।

चटकाण्णैरः॥१६३॥ चटकशब्दादपत्ये णैरो भवति। चाटकैरः।

+ उप् स्त्रियां॥१६४॥ चटकात् स्त्रियामुप् स्यात्। चटकस्यापत्यं स्त्री चटका।

+ पंडजंडपंकाण्णारः॥१६५॥ एभ्योऽपत्ये

आरः स्यात् । चांडारः । जांडारः । पांडारः ।

* गोधायाःदुष्टे ॥१६६॥ गोधाशब्दाण्णारः स्यात् दुष्टेऽपत्ये गोधारः दुष्टः । गौधेयोऽन्यः ।

ढृञ् ॥ १६७ ॥ गोधाया ढृञ् स्याद् दुष्टेऽपत्ये । गौधेरः ।

क्षुद्राभ्यो वा ॥ १६८ ॥ आभ्योऽपत्ये ढृञ् वा स्यात् । दासी—दासेरः । दासेयः । नटी-नाटेरः । नाटेयः ।

स्वसुश्छणुः ॥ १६९ ॥ स्वसृशब्दात् ऋकारांतपूर्वात् अपत्ये छण् स्यात् । मातृष्वस्रीयः । पैतृष्वस्रीयः । षत्वनिर्देशः किं ? भ्रातृस्वस्रः । उरिति किं ? मातुःष्वस्रः ।

ढणि सं ॥ १७० ॥ स्वसुः ऋकारांतपूर्वस्य ढणि परे सं स्यात् । मातृष्वसेयः । पैतृष्वसेयः । ढणनेनैव निपात्यते ।

* चतुष्पाद्गृष्ट्यादिभ्यो ढञ् ॥ १७१ ॥ चतुष्पाद्भ्यो गृष्ट्यादेश्चापत्ये ढञ् स्यात् । कमंडल्वा अपत्यं-कामंडलेयः। शैतिवाहेयः।माद्रबाहेयः । जांबेयः । गार्ष्टेयः । हार्ष्टेयः । हालेयः । बालेयः ।

+ वाडवेयो वृषे ॥१७२॥ वडवाशब्दात् वृषे गर्भबीजनिक्षेपे ढञ् निपात्यः । वडवायाः वृषः वाडवेयः । वाडवोऽन्यः ।

स्वसुश्छः ॥ १७३ ॥ स्वसृशब्दादपत्ये छो भवति । स्वस्रीयः ।

भ्रातुर्व्यश्च ॥ १७४ ॥ भ्रातृशब्दादपत्ये व्यो भवति छश्च । भ्रातृव्यः । भ्रात्रीयः ।

रेवत्यादेष्ठण् ॥ १७५ ॥ रेवतीप्रभृतिभ्यः ठण् स्यात् । रैवतिकः । आश्वपालिकः । माणिपालिकः । दौवारपालिकः ।

स्त्रीवृद्धात् क्षेपे णश्च ॥१७६॥ स्त्रीलिंगात् वृद्धापत्यवाचकादपत्ये णो भवति ठण् च क्षेपे गम्यमाने । गार्ग्या अपत्यं युवा—गार्गो जाल्मः गार्गिको वा । ग्लुचुकायन्याः—ग्लौचुकायनो जाल्मः, ग्लौचुकायनिको वा । क्षेपे इति किं ? गार्गेयो माणवकः ।

+ सुयाम्नः फिञ् सौवीरेषु ॥ १७७ ॥ सौवीरेषु वर्तमानात् सुयामन्शब्दात् अपत्ये फिञ् भवति । सौयामायनिः । अन्यत्र सौयामः ।

+ मिमतफांटाहृतेर्णश्च ॥१७८॥ आभ्यां सौवीरेषु योऽर्थस्तत्र वर्तमानाभ्यां णो भवति फिञ् च।मिमतस्यापत्यं मैमतः। मैमतायनिः। फांटाहृतः। फांटाहृतायनिः।

÷ भागवित्तितार्णबिंदवाकशापेयात् क्षेपे ठण् वा ॥१७९॥ एभ्यः सौवीरेषु वृद्धे वर्तमानेभ्योऽपत्ये यूनि ठण् वा स्यात् क्षेपे गम्यमाने । भागवित्तेरपत्यं युवा भागवित्तिको जाल्मः । भागवित्तायनो वा । तार्णबिंदविकः। तार्णबिंदविः। आकशापेयिकः। आकशापेयिः।

÷ वृषसुयामयमुंदात् फिञश्छश्च ॥१८०॥ एभ्यः फिञंतेभ्यः सौवीरेषु वर्तमानेभ्योऽपत्ये यूनि छो भवति ठण् च वा क्षेपे गम्यमाने । वृषस्यापत्यं वार्ष्यायणिः । तस्यापत्यं युवा क्षेपी वार्ष्यायणीयः । वार्ष्यायणिकः । पक्षे-अण् । वार्ष्यायणिः । सौयामायनेः—सौयामायनीयः । सौयामायनिकः । सौयामायनिः । यामुंदायनेः-यामुंदायनीयः। यामुंदायनिकः । यामुंदायनिः ।

कुर्वादेर्ण्यः ॥ १८१ ॥ एभ्योऽपत्ये ण्यो भवति । कौरव्यः । शाकधल्यः । गार्ग्यः ।

÷ सम्राजः क्षत्रिये॥१८२॥सम्राज्शब्दाण्ण्यो भवति क्षत्रियेऽपत्ये । सम्राजोऽपत्यं साम्राज्यः । साम्राजोऽन्यः ।

सेनांतकारिलक्ष्मणादिञ् च ॥ १९३ ॥ सेनांतेभ्यः कारिभ्यः लक्ष्मणाच्च अपत्ये इञ् स्यात् ण्यश्च । हारिषेणिः। हारिषेण्यः। कारिषेणिः। कारिषेण्यः। कौंभकारिः। कौंभकार्यः। तान्तुवायिः।

तांतुवाय्यः। काक्मणिः। काक्मण्यः।

तिकादेः फिञ् ॥ १८४ ॥ तिकादिभ्योऽपत्ये फिञ् स्यात्। तैकायनिः। कैतवायनिः। बालायनिः।

+दगुकौसलकर्मारच्छागवृषाद्युट् च ॥१८५॥ एभ्योऽपत्ये फिञ् स्याद् युड् चागमः। दागव्यायनिः। कौशल्यायनिः। कार्मार्यायणिः। छाग्यायनिः। वार्ष्यायणिः।

द्व्यचोऽणः ॥ १८६ ॥ अणंतात् द्व्यचः फिञ् स्यादपत्ये। कर्तुरपत्यं कार्त्रः। तस्यापत्यं कार्त्रायणिः। पैत्रायणिः।

वाऽवृद्धाद्दोः ॥ १८७ ॥ दुसंज्ञकाद् अवृद्धवाचिनोऽपत्ये वा फिञ् स्यात्। वायुरथायनिः। वायुरथिः। आदित्यगतायनिः। आदित्यगतिः। अवृद्धादिति किं? प्लाक्षायणः। दोरिति किं? आकंपनिः।

पुत्रांतात् ॥१८८॥ दोः पुत्रांतादपत्येऽर्थे वा फिञ् स्यात्। गार्गीपुत्रायणिः। गार्गीपुत्रिः। वासवदत्तापुत्रायणिः। वासवदत्तापुत्रिः।

+ लंकादेश्च किम् ॥ १८९ ॥ लंकादिभ्यः पुत्रांताच्च दोरपत्ये फिञ् वा स्यात्। तत्संनियोगे किमागमश्च। लांकाकायनिः। लांकयः। वाकिनकायनिः। वाकिनिः। पुत्रांताद्दोः—गार्गीपुत्रकायणिः। गार्गीपुत्रिः।

फिर्वाऽदोः ॥ १९० ॥ अदुसंज्ञकादपत्ये फिर्वा स्यात्। त्रिपृष्टायनिः। त्रैपृष्टिः। औविजयायनिः। औविजयिः। ग्लुचुकायनिः। ग्लौचुकिः।

* कुलात्खः ॥ १९१ ॥ कुलात् खो भवति अपत्ये। कुलीनः। क्षत्रियकुलीनः।

* ढकञ्यौ वाऽसे ॥ १९२ ॥ कुलादपत्ये ढकञ्यौ स्तः असे वा। कौलेयकः। कुल्यः। कुलीनः। असे इति किं? आढ्यकुलीनः।

दुःकुलाड्ढण् ॥ १९३ ॥ दुःकुलादपत्ये ढण् वा स्यात्। दौःकुलेयः। दुःकुलीनः।

* महाकुलादञ्खञ् ॥१९४॥ अस्मादपत्येऽञ्खञौ वा स्तः। माहाकुलः। माहाकुलीनः। महाकुलीनः।

श्वशुराद्यः ॥ १९५ ॥ श्वशुरादपत्ये यो भवति। श्वशुर्यः।

+ जातौ राज्ञः ॥ १९६ ॥ राजन्शब्दादपत्ये यो भवति जातौ गम्यमानायां। राजन्यः। राजनोऽन्यः।

क्षत्राद्घः ॥ १९७ ॥ क्षत्राद् जातौ घो भवति अपत्ये। क्षत्रियः।

* मनोऽषुक् चाञ्यौ ॥१९८॥ मनुशब्दादपत्ये जातौ अञ्यौ स्तः षुग् चागमः। मानुषः। मनुष्यः।

द्रिः ॥ १९९ ॥ द्रिरित्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः। तत्रैवोदाहरिष्यामः।

* राष्ट्रराज्ञः सनाम्नोऽञ् राजापत्ये॥२००॥ राष्ट्राज्जनपदात् क्षत्रियसनाम्नः क्षत्रियाच्च राजसमानशब्दात् यथासंख्यं राजन्यपत्ये चार्थेऽञ् स्यात्। पंचालानामपत्यं राजा वा पांचालः। पांचालौ। पंचालाः। ऐक्ष्वाकः। ऐक्ष्वाकौ। इक्ष्वाकवः। वैदेहः। वैदेहौ। विदेहाः। सनाम्न इति किं? सुराष्ट्राणां राजा—सौराष्ट्रः।

गांधारिसाल्वेयाभ्यां ॥ २०१ ॥ आभ्यां राष्ट्रराजवाचिभ्यां राजन्यपत्ये च अञ् स्यात्। गांधारः। साल्वेयः।

* पुरुद्व्यचमगधकलिंगसूरमसादण् ॥२०२॥ पुरुशब्दाद् द्व्यचः मगधादेश्च राजन्यपत्ये चार्थेऽण् स्यात्। पुरोरपत्यं पौरवः। अंगानां राजापत्यं वा आंगः। वांगः। सौह्मः। पौंड्रः। मागधः। कालिंगः। सौरमसः।

* द्विनायजाद्कुरुकोसलाञ्ञ्यः ॥२०३॥ दुसंज्ञकात् इकारांताद् नकारादेः अजादादिभ्यश्च राष्ट्रवाचिभ्यो राजवाचिभ्यश्च सनामभ्यो यथाक्रमं राजन्यपत्ये चार्थे ञ्यो भवति। आवन्त्यः। सौवीर्यः। दार्व्यः। इत्—आवंत्यः। कौंत्यः। बालव्यत्यः। नादि—नैषध्यः। नैषध्यः। आबाधः। कौरव्यः। कौसल्यः।

साल्वांशमत्स्यप्रथकलकूटाश्मकादिञ्।२०४ साल्वांशेभ्यः प्रत्यग्रथादेश्च इञ् स्यात्। उदुंबराणां राजापत्यं वा औदुंबरिः। तैलखलिः। आजमीढिः। यौगंधरिः। प्रात्यग्रथिः। कालकूटिः। आश्मकिः।

\+ पांडोर्ड्यण् ॥ २०५ ॥ पांडुशब्दात् राजन्यपत्ये ड्यण् स्यात्। पांडूनां राजा पांडोरपत्यं वा पांड्यः। पांड्यौ। पांडवः।

उप् चोलादिभ्यः ॥२०५॥ चोलप्रभृतिभ्यः राष्ट्रेत्यादिना विहितस्य ञ्यस्योप् भवति। चोलानां राजापत्यं वा चोलः। केरलः। कंबोजः।

* कुंत्यवंतेःस्त्रियां॥२०७॥कुंत्यवंतिभ्यां परस्य ञ्यस्योप् भवति स्त्रियां। कुंतानां राज्ञी अपत्यं वा स्त्री—कुंती। अवंती।

* कुरोर्वा ॥२०८॥ कुरोःपरस्य ञ्यस्य स्त्रियां उप् वा भवति। कुरूः। कौरव्यायणी।

* द्रेरतोऽप्राग्भर्गादेः ॥२०९॥ प्राग्भर्गादिवर्जितात् अन्यस्मात् परस्य द्रेरकारस्य स्त्रियामुप् भवति। अपाच्यानां राज्ञी अपत्यं वा स्त्री-अपाच्या। सूरसेनी। मद्री। द्रेरिति किं? औपगवी। अप्राग्भर्गादेरिति किं? पांचाली। वैदेही। आंगी। वांगी। भर्गादेः—भार्गी। कारूषी। कैकेयी। यौधेयी।

इति शब्दार्णवाचरणाशि जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ तृतीयस्याध्यायस्य प्रथमः पादः



## द्वितीयः पादः।

तेन रक्तं रागात् ॥ १ ॥ तेनेति भासमर्थात् रागवचिनो मृदः रक्तमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति। कुसुंभेन रक्तं वस्त्रं कौसुंभं। कौंकुमं। काषायं। हारिद्रं। माञ्जिष्ठं। रागादिति किं? पुत्रेण रक्तं वस्त्रं।

\+ लाक्षारोचनाट्ठण् ॥२॥ आभ्यां भासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे ठञ् भवति। लाक्षया रक्तं लाक्षिकं वस्त्रं। रौचनिकं।

* शकलकर्दमाद् वा ॥ ३ ॥ आभ्यां भासमर्थाभ्यां रक्तमित्येतस्मिन्नर्थे ठण् वा स्यात्। सकलेन रक्तं-शाकलिकं, शाकलं।कार्दमिकं,कार्दमं।

नीलपीतकौ ॥ ४ ॥ एतौ रक्तमित्येतस्मिन्नर्थे निपात्यौ। नीलेन नील्या वा रक्तं नीलं। पीतेन पीतकेन वा रक्तं पीतकं। नीलनीलीपीतकेभ्योऽणः। पीतात् कश्च।

* गुरुद्वाद् भाद् युक्तेऽब्दः ॥ ५ ॥ गुरु-

बृहस्पतिः तस्योदयो यस्मिन् नक्षत्रे तद्वाचिनो मृदः भासमर्थाद्व युक्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति, यो युक्तार्थः स चेदब्दः स्यात्। गुरूदयेन पुष्येण युक्तोऽब्दः पौषः संवत्सरः। फाल्गुनं वर्षं। गुरूदयादिति किं? शनैश्चरोदयेन पुष्येण युक्तं वर्षं। भादिति किं? गुरूदयेन पूर्वरात्रेण युक्तं वर्षं।

* चंद्रोपेतात् कालः॥ ६॥ चंद्रोपेतात् भात् युक्तेऽर्थे यथाविहितं त्यो भवति यो युक्तः स कालश्चेत्। चंद्रोपेतेन पुष्येण युक्तमहः पौषमहः। पौषी रात्रिः। पौषोऽहोरात्रः। पौषः कालः। माघमहः। चंद्रोपेतादिति किं? शुक्रोपेतेन पुष्येण युक्तः कालः। काल इति किं? चंद्रोपेतेन पुष्येण युक्तो ग्रहः।

उशभेदे॥ ७॥ चंद्रोपेतात् काल इत्यनेन विहितस्य त्यस्योशा भवति अभेदे न चेत् कालस्य भेदोऽहरादिविशेषः प्रयुज्यते। पुष्ये पायसमश्नीयात् मघासु पललौदनं। अद्य पुष्यः। अद्य कृतिका। अद्य रोहिण्यः। अभेदे इति किं? माघी रात्रिः।

द्वंद्वाच्छः॥ ८॥ चंद्रोपेतात् भाद्वः द्वंद्वाद्व युक्तः काल इत्येतस्मिन्नर्थे छो भवति। राधानुराधाभिर्युक्तमहः राधानुराधीयमहः। अद्य राधानुराधीयं। तिष्यपुनर्वसवीया रात्रिः।

* श्रवणाश्वत्थौ स्वौ॥ ९॥ एतौ चंद्रोपेतभवाचिनो अकारांतौ निपात्यौ युक्तः काल इत्यस्मिन्नर्थे स्वौ। श्रवणेन युक्ता रात्रिः श्रवणा रात्रि। श्रवणा पौर्णमासी। श्रवणो मुहूर्तः। अश्वत्था रात्रिः। त्यस्योप्। स्वाविति किं? श्रावणी रात्रिः।

+ दृष्टं साम॥ १०॥ तेनेति भासमर्थात् दृष्टमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति यद्व दृष्टं तत् साम चेत् स्वौ। क्रुंचेन दृष्टं साम क्रौंचं। वासिष्ठं। कालेयं। आग्नेयं।

+ गोत्रादंकवत्॥ ११॥ गोत्रवाचिनो भांतात् दृष्टं सामेत्येतस्मिन्नर्थे अंकवत् त्यो भवति। यथा औपगवस्यायमंकः-इत्यौपगवकः। तथा-औपगवेन दृष्टं साम-औपगवकं। कापटवकं।

÷ वामदेवाद् यः॥ १२॥ वामदेवशब्दात् भासमर्थाद्व दृष्टं सामेत्येतस्मिन्नर्थे यः स्यात्। वामदेवेन दृष्टं साम वामदेव्यं।

+ जाते चान्योऽण् डित्वा॥ १३॥ दृष्टे सामनि जाते चार्थे यः औत्सर्गिकः अण् अपवादेन बाधितः पुनरन्योण् विधीयते स डित् वा स्याद्व। उशनसा दृष्टं-साम औशनं, औशनसं। शतभिषजि जातः-शातभिषः, शातभिषजः। प्राग्दीरण् कालाट्ठणा बाधितः। पुनर्भसंध्यादिनाऽण्।

* छन्नो रथः॥ १४॥ भांतात् छन्न इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति। यश्छन्नः स रथश्चेत्। वस्त्रेण छन्नः वास्त्रो रथः। कांबलः। चार्मणः।

÷ पांडुकंबली॥ १५॥ पांडुकंबलशब्दात् छन्नो रथ इत्यस्मिन्नर्थे इन् निपात्यः। पांडुकंबलेन छन्नो रथः पांडुकंबली।

तत्रोद्धृतं पात्रेभ्यः॥ १६॥ तत्रेति ईप्समर्थेभ्यः पात्रवाचिभ्यः उद्धृत इत्यस्मिन्नर्थे यथाविहितं त्यो भवति। शरावेषु उद्धृत ओदनः शारावः। माल्लवः। कार्परः। कांसपात्रः।

* स्थंडिले शेते व्रती॥ १७॥ स्थंडिलादीप्समर्थात् शेते इत्यस्मिन्नर्थे अण् स्यात् योऽसौ शेते स व्रती चेत्। स्थंडिले शेते स्थांडिलो भिक्षुः। वाक्यमेवान्यत्र।

संस्कृतं भक्ष्यः॥ १८॥ तत्रेतीप्समर्थात् संस्कृतमित्यस्मिन्नर्थे यथाविहितं त्यो भवति यद्व संस्कृतं तत्भक्ष्यश्चेत्। भ्राष्ट्रेषु संस्कृताः भ्राष्ट्रा अपूपाः। कालशाः। घार्ताः। पात्राः।

+ शूलोखाद्यः॥ १९॥ आभ्यामीप्समर्था

न्यां संस्कृतं भक्ष्य इत्येतस्मिन्नर्थे यो भवति । शूले संस्कृतं शूल्यं मांसं । उखायां स्थाल्यां संस्कृतं उख्यं ।

दध्नष्ठण् ॥ २० ॥ दध्नः ठण् स्यात् । दध्नि संस्कृतं दाधिकं ।

वोदश्वितः ॥ २१ ॥ अस्माद्वा ठण् स्यात् । उदश्विति संस्कृतः-औदश्वित्कः । औदश्वितः ।

क्षीराड्ढण् ॥ २२ ॥ अस्मात् ढण् स्यात् । क्षीरे संस्कृतं क्षैरेयं ।

सास्य पौर्णमासीति स्तौ ॥ २३ ॥ सेति वासमर्थात् अस्येति तार्थे यथाविहितं त्यो भवति यद्वांतं सा चेत् पौर्णमासी स्तौ संज्ञाविषये । इति करणो विवक्षार्थः।तेन मासेऽर्द्धमासे संवत्सरे वा त्यः । पौषी पौर्णमासी अस्य मासस्य-पौषो मासः, अर्द्धमासः, संवत्सरो वा ।माघो मासः । स्ताविति किं ? पौषी पौर्णमासी अस्य पंचरात्रस्य ।

* अश्वत्थाग्रहायण्याष्ठण् ॥ २४ ॥ आभ्यां ठण् स्यात् स्तौ । अश्वत्था पौर्णमासी अस्याश्वत्थिको मासः । आग्रहायणिको मासार्द्धः ।

फाल्गुनीश्रवणाकार्त्तिकीचैत्र्या वा ॥२५॥ एभ्यः ठण् वा स्यात् स्तौ । फाल्गुनी पौर्णमासी अस्य-फाल्गुनिको मासः, फाल्गुनो वा । श्रावणिकः, श्रावणः । कार्त्तिकिकः, कार्त्तिकः । चैत्रिकः, चैत्रः ।

देवता ॥ २६ ॥ सेति वासमर्थादस्येति तार्थे यथाविहितं त्यो भवति यद्वांतं सा देवता चेत् । अर्हन् देवता अस्य-आर्हतः । जैनः । शैवः । वैष्णवः । बौद्धः । भागवतः ।

+ शुक्राद् घः ॥ २७ ॥ शुक्रशब्दाद् घो भवति । शुक्रो देवतास्येति शुक्रियः ।

* इ वातोऽपोनपादपांनपाच्छतरुद्रात्॥२८॥ एभ्यो घो भवति तत्संनियोगे चातः तृभावः । अपोनपाद्देवतास्येति अपोनप्त्रियः । अपांनप्त्रियः । शतरुद्रियः ।

छः ॥ २९ ॥ तेभ्यः छो भवति तृभावश्चातः । अपोनप्त्रीयः।अपांनप्त्रीयः।शतरुद्रीयः।

+ पैंगाक्षीपुत्रादिभ्यः ॥ ३० ॥ एभ्यः छो भवति देवतार्थे । पैंगाक्षीपुत्रीयं । तार्णबिंदवीयं ।

महेंद्राद् घाणौ च ॥ ३१ ॥ महेंद्रशब्दात् सास्य देवतार्थे घाणौ स्तः छश्च । महेंद्रियः, माहेंद्रः, महेंद्रीयः ।

कसोमाट्ट्यण् ॥ ३२ ॥ आभ्यां ट्यण् स्यात् देवतार्थे । कः प्रजापतिर्देवताऽस्य-कायः । कायी । सौम्यः । सौमी ।

* वाय्वृतुपितुर्यः ॥३३॥ एभ्यो यो भवति देवतार्थे । वायव्यं । ऋतव्यं । उषस्यं । पित्र्यं ।

* द्यावापृथिवीशुनासीराग्नीषोममरुत्वद्वास्तोष्पतिगृहमेधाच्छश्च ॥ ३४ ॥ एभ्यश्छो भवति यश्च देवतार्थे । द्यावापृथिवीयः । द्यावापृथिव्यः । शुनासीरीयः । शुनासीर्यः । अग्नीषोमीयः । अग्नीषोम्यः । मरुत्वतीयः । मरुत्वत्यः । वास्तोष्पतीयः । वास्तोष्पत्यः । गृहमेधीयः । गृहमेध्यः ।

महाराजप्रोष्ठपदाट्ठण् ॥ ३५ ॥ आभ्यां ठण् स्यात् देवतार्थे । माहाराजिकः । प्रौष्ठपदिकः ।

कालाद् भववत् ॥ ३६ ॥ कालवाचिभ्यो देवतार्थे भव इव त्यविधिर्भवति । यथा-मासे भवं मासिकं । आर्द्धमासिकं । तथा-मासो देवतास्य मासिकं । आर्द्धमासिकं । सांवत्सरिकं । वासंतं ।

+ आदेश्छंदसः प्रगाथः ॥३७॥ वासमर्थादादिभूताच्छंदसः तार्थे यथाविहितं त्यो भवति । यस्त्यांतः स प्रगाथश्चेत् । पंक्तिरादिरस्य प्रगाथस्य पांक्तः । आनुष्टुभः । आदेरिति किं ? अनुष्टुब्मध्यमस्य प्रगाथस्य ।

तस्य समूहः ॥ ३८ ॥ तस्येति वासम-

र्थाद् समूह इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । काकानां-समूहः काकं । बार्कं । वानस्त्यं ।

भिक्षादेः ॥ ३९ ॥ भिक्षादिभ्यो यथाविहितं त्यो भवति समूहेऽर्थे भिक्षाणां समूहः-भैक्षं । क्षैत्रं । कारीषं । गार्भिणं । यौवनं ।

+ क्षुद्रकमालवात् सेनाख्यौ ॥ ४० ॥ अस्मादञ् स्यात् सेनाख्यौ । क्षुद्रकाश्च मालवाश्च क्षुद्रकमालवाः—तेषां समूहः क्षौद्रकमालवी सेना । साविति किं ? क्षौद्रकमालवकं ।

गोत्रवृद्धोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्सवमनुष्याजाद् वुञ् ॥ ४१ ॥ गोत्रवाचिभ्यो वृद्धादिभ्यश्च वुञ् भवति समूहे । औपगवकं । गार्गकं । वार्द्धकं । औक्षकं । औष्ट्रकं । औरभ्रकं राजकं । राजन्यकं । राजपुत्रकं । वात्सकं । मानुष्यकं । आजकं ।

केदाराद् यञ् च ॥ ४२ ॥ अस्मात् समूहे यञ् भवति वुञ् च । कैदार्यं । कैदारकं ।

* हस्तिकवचयचिताच्च ठण्॥४३॥ हस्तिन् कवचिन्शब्दाभ्यां आचितवाचिभ्यः केदाराच्च समूहेऽर्थे ठण् स्यात् । हस्तिनां समूहः हास्तिकं । कावचिकं । आपूपिकं । शाष्कुलिकं । मौदकिकं । कैदारिकं ।

+ धेनोरनञः ॥४४॥ अनञ्पूर्वाद् धेनोष्ठण् स्यात् समूहे । धैनुकं । अनञ इति किं ? अधेनूनां समूहः आधेनवं ।

* छोऽश्वाद्वा ॥४५॥ अश्वात् समूहे छो वा स्यात् । अश्वीयं । आश्वं ।

* केशाण्ण्यः ॥ ४६ ॥ केशात् समूहे ण्यो वा स्यात् । कैश्यं । कैशिकं ।

गणिकायाः ॥ ४७ ॥ गणिकाशब्दात् ण्यो भवति । गाणिक्यं ।

+ श्वोकादिभ्योऽञिनी॥४८॥ श्वन्शब्दादेः ठकादिभ्यश्च यथासंख्यं अञ् इनौ स्तः । शुनां समूहः-शौवं । अन्हां-आह्नं । दंडिनां-दांडं । ठकिनी । लकिनी । कुटुंबिनी ।

+ णश् पर्श्वाः॥४९॥ पर्शुशब्दात् णश् स्यात्। पर्शूनां समूहः-पार्श्वं ।

गजग्रामजनबंधुसहायात्तल् ॥५०॥गजादेः-स्तल् स्यात् । गजानां समूहः गजता । ग्रामता । जनता । बंधुता । सहायता ।

÷ पृष्ठ्याहीनौ क्रतू॥५१॥पृष्ठ अहन् शब्दाभ्यां यथासंख्यं यखत्यौ निपात्यौ क्रतू चेत् । पृष्ठानां समूहः पृष्ठ्यः । अहीनः । आह्नमन्यत् ।

चरणाद्धर्मवत् ॥ ५२ ॥ चरणं कठादिस्तद्वाचकाद् समूहे धर्म इव त्यविधिः स्यात् । यथा-कठानां धर्मः काठकः । कालापकः । तथा—तेषां समूहः काठकं । कालापकं । छांदोग्यं ।

+ वातादूलः ॥ ५३ ॥ वातात्समूहेऽर्थे ऊलः स्यात् । वातूलः ।

+ यः ॥ ५४ ॥ वातात् यो भवति । वातानां समूहो वात्या ।

पाशादेः ॥ ५५ ॥ पाशादिभ्यो यो भवति। पाशानां समूहः पाश्या । तृण्या । खल्या ।

÷ ब्राह्मणमाडववाडवात् ॥ ५६ ॥ एभ्यः समूहे यः स्यात् । ब्राह्मण्यं । माडव्यं । वाडव्यं ।

गोरथात् ॥ ५७॥ आभ्यां समूहे यो भवति। गव्या । रथ्या ।

* त्रकट्यं ॥ ५८ ॥ ताभ्यां समूहे त्रकट्यौ स्तः । गोत्रा । रथकट्या ।

÷ पुरुषात् कृताहितवधविकारे च ढञ् ॥५९॥ पुरुषात् ढञ् स्यात् समूहे कृताद्यर्थे च । पुरुषाणां समूहः पौरुषेयं । पुरुषैः । कृतः पौरुषेयः ग्रंथः । पुरुषाय हितः पौरुषेयः शीतकमाषः । पुरुषस्य

विकारो वधो वा पौलेयः ।

● पितृमातुर्व्योडुल् भ्रातरि ॥ ६० ॥ आभ्यां यथासंख्यं व्य डुल् इत्येतौ स्तः भ्रातरि वाच्ये । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः ।

● डामहट् पित्रोः ॥ ६१ ॥ ताभ्यां पित्रोर्वाच्ययोर्डामहट् स्यात् । पितुः पिता पितामहः । पितुर्माता पितामही । मातुः पिता मातामहः । मातुर्माता मातामही ।

क्षीरेऽवेः सोढदूसमरीसाः ॥ ६२ ॥ अविशब्दात्तासमर्थात् क्षीरेऽर्थे सोढादयः स्युः । अवेः क्षीरं अविसोढं । अविदूसं । अविमरीसं ।

+ वीरात्तेजोविरोधे योऽञ् ॥ ६३ ॥ वीरात् तेजसि विरोधे चार्थे योऽञ् च स्यात् । वीरस्य तेजो वीर्यं । वीरस्य विरोधः—वैरं ।

● राष्ट्रेऽनंगादिभ्यः ॥ ६४ ॥ तासमर्थाद् अंगादिवर्जिताद् राष्ट्रेऽर्थे अण् स्यात् । शिवीनां राष्ट्रं शैवं । गांधारीणां गांधारं । उत्पुष्टानां—औत्पुष्टं । आभिसारं । अनंगादिभ्य इति किं ? अंगानां राष्ट्रं । वंगानां राष्ट्रमिति वाक्यमेव ।

मौरिक्यैषुकार्यादेर्विधभक्तं ॥ ६५ ॥ मौरिक्यादेः ऐषुकार्यादेश्च राष्ट्रे यथासंख्यं विधभक्तौ स्तः । मौरिकीणां राष्ट्रं मौरिकिविधं । मौकिकिविधं । ऐषुकारिभक्तं । सारस्यायनभक्तं ।

राजन्यादिभ्यो वुञ् ॥ ६६ ॥ एभ्यः राष्ट्रेऽर्थे वुञ् भवति । राजन्यानां राष्ट्रं राजन्यकं । दैवयातकं । शालंकायनकं ।

+ वसातेर्वा ॥ ६७ ॥ वसातिशब्दात् वुञ् वा स्यात् । वसातीनां राष्ट्रं वासातकं । वासातं ।

तदस्मिन् युद्धे योद्धृप्रयोजनात् ॥ ६८ ॥ तदिति तासमर्थात् योद्धृवाचिनोऽर्थवाचिनश्चास्मिन्नितीवर्थे यथाविहितं त्यो भवति युद्धे गम्यमाने । विद्याधराः योद्धारोऽस्मिन् युद्धे—वैद्याधरं । कौरवं । भारतं युद्धं । सुकोपनार्थः प्रयोजनमस्मिन् युद्धे सौकोपनं । स्वायंप्रभं । सौतारं ।

प्रहरणात् क्रीडायां णः ॥ ६९ ॥ तासमर्थात् प्रहरणवाचिनः ईवर्थे णो भवति क्रीडायां । दंडाः प्रहरणमस्यां क्रीडायां दांडा । मौष्टा । पादा । क्रीडायामिति किं ? खड्गः प्रहरणमस्मिन् युद्धे ।

+ भावघञोऽस्यां ॥ ७० ॥ भावे यो घञ् तदंताद् तासमर्थात् अस्यामितीवर्थे णत्यः स्यात् । दंडाघातोऽस्यां तिथौ दांडाघाता तिथिः । मौशलाघाता भूमिः । भावग्रहणं किं ? प्राकारोऽस्यां ।

श्यैनंपातातैलंपाता ॥ ७१ ॥ एतौ शब्दौ निपात्यौ । श्येनानामिव पातोऽस्यां क्रीडायां वर्तते-श्यैनंपाता । तिलानामिव पातोऽस्यां-तैलंपाता । श्येनतिलयोः पाते णपरे मुम् निपात्यः ।

तद्वेत्त्यधीते ॥ ७२ ॥ तदिति इप्समर्थात् वेत्त्यधीते इत्येतयोरर्थयोर्यथाविहितं त्यो भवति । व्याकरणं वेत्त्यधीते वा वैयाकरणः । सैद्धांतः । छांदसः ।

पदकल्पलक्षणांतात्ख्यानाख्यायिकाक्रतूक्थादेष्ठण् ॥ ७३ ॥ पदकल्पलक्षणांतेभ्यः आख्यानाख्यायिकाक्रतुवाचिभ्यः उक्थादिभ्यश्चेप्समर्थेभ्यः ठण् भवति । पूर्वपदं वेत्त्यधीते वा पौर्वपदिकः । औत्तरपदिकः । मातृकल्पिकः । पाराशरकल्पिकः । गौलक्षणिकः । आश्वलक्षणिकः । यवक्रीतमाख्यानं वेत्त्यधीते वा यावक्रीतिकः । आविमारकिकः । वासवदत्तां आख्यायिकां वेत्त्यधीते वा वासवदत्तिकः । सौमनोहरिकः । क्रतुः—आग्निष्टोमिकः । वाजपेयिकः । उक्थं वेत्त्यधीते वा औक्थिकः । याज्ञिकः । नैयायिकः । नैयासिकः । पौराणिकः । लाक्षणिकः ।

+ अकल्पात् सूत्रात् ॥ ७४ ॥ कल्पवर्जितात् सूत्रांतात् ठण् स्यात् । वार्तिसूत्रं वेत्त्यधीते वा वार्तिसूत्रिकः । तात्त्वार्थसूत्रिकः । अकल्पादिति

किं ? काल्पसूत्रः ।

× अंग्रिक्षत्रांगधर्मसंसर्गाद् विद्यायाः॥७५॥ ङ्यादिवर्जितात् विद्यांतात् ठण् स्यात् । वायसविद्यां वेत्त्यधीते वा वायसाविधिकः । सार्पविधिकः । अङ्यादेरिति किं ? ङ्यवयवा विद्या त्रिविद्या तां वेत्त्यधीते वा त्रैविद्यः । छात्रविद्यः। आंगविद्यः । धार्मविद्यः । सांसर्गविद्यः ।

याज्ञिकौक्थिकलौकायितिकानुब्राह्मणि ॥ ७६ ॥ याज्ञिकादयो निपात्यंते । याज्ञिक्यं वेत्त्यधीते वा याज्ञिकः । ठण् इकयत्वं च निपात्यते । औक्थिक्यं—औक्थिकः । लोकायतं—लौकयितिकः । ठणि यकाराकारस्येत्वं । अनुब्राह्मणी । अनुब्राह्मणिनो । इन् ।

× शतषष्टेः पथष्ठट्॥७७॥ आभ्यां परो यः पथिन्शब्दः तदंतात् वेत्त्यधीते चार्थे ठट् भवति । शतपथं वेत्त्यधीते वा शतपथिकः । षष्टिपथिकः।

+ पदोत्तरपदेभ्यष्ठः ॥ ७८ ॥ पदशब्दः उत्तरपदं यस्य तस्मात् पदात् उत्तरपदात् पदोत्तरपदाच्च ठो भवति । पूर्वपदं वेत्त्यधीते वा पूर्वपदिकः। पादिकः । उत्तरपादिकः।पदोत्तरपादिकः ।

क्रमादेर्वुन् ॥ ७९ ॥ क्रमादेर्वुन् स्यात् । क्रमं वेत्त्यधीते वा क्रमकः । शिक्षकः । पदकः ।

+ ससर्वादेरुप् ॥ ८० ॥ सादेः सर्वादेश्च वेत्ति अधीते चार्थे त्यस्योप् भवति । सवार्त्तिकः। ससंग्रहः । अण उप् । सर्वविद्यः । सर्वतंत्रः । ठण उप् ।

* स्यिकात् सूत्रात् ॥ ८१ ॥ स्यिसंज्ञकात् यः को विहितः तदंतात् सूत्रे वर्तमानात् वेत्त्यधीते चार्थे त्यस्योप् भवति।पंचाध्यायाः परिमाणमस्येति पंचकं सूत्रं तं विदंत्यधीयते वा पंचकाः जैनेंद्राः । अष्टकाः पाणिनीयाः । द्वादशकाः आर्हताः । स्यिग्रहणं किं ? तात्त्वार्थवार्त्तिकाः ।

प्रोक्तात् ॥ ८२ ॥ प्रोक्तत्वांतात् विहितस्य वेदित्रध्येतृत्यस्योप् भवति । गोतमेन प्रोक्तं गौतमं । तद्वेत्त्यधीते वा गौतमः । सुधर्मणा प्रोक्तं सौधर्मं । तद्वेत्त्यधीते वा सौधर्मः । भाद्रबाहवः।

* वेदेन्ब्राह्मणं ॥ ८३ ॥ वेदवाचिप्रोक्तत्यांतं इन्नंतं च ब्राह्मणवाचि वेदित्रध्येत्रोरेव प्रयुज्यते नान्यत्र । कठेन प्रोक्तं वेदं छंदो वेत्त्यधीते वा कठः । मोदेन—मौदः । इन्-ब्राह्मणं-तांडेन प्रोक्तं ब्राह्मणं विदंति अधीयते वा तांडिनः । भाल्लविनः । ऐतरेयिणः । इन्ग्रहणं किं ? याज्ञवल्क्येन प्रोक्तानि याज्ञवल्कानि ब्राह्मणानि ।

* सोऽत्रास्तीति देशः स्वौ ॥ ८४ ॥ स इति वासमर्थात् अत्रेत्यर्थे यथाविहितं त्यो भवति यो वांतार्थः स चेदस्तीति भवति यत्तदत्रेतीप्निर्दिष्टं स चेद्देशः स्वुविषये । इतिकरणो भूमादिविषये विवक्षार्थः । उदुंबरा अस्मिन् देशे संति औदुंबरः । बाल्वजः । पार्वतः ।

तेन निर्वृत्तः ॥ ८५ ॥ तेनेति भासमर्थात् निर्वृत्त इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति देशः स्वौ । कुशांबेन निर्वृत्ता कौशांबी नगरी । काकंदी । माकंदी । सागरः ।

तस्य निवासादूरभवौ ॥ ८६ ॥ तस्येति तासमर्थात् निवासादूरभव इत्येतयोरर्थयोः यथाविहितं त्यो भवति । ऋजुनावो निवासः आर्जुनावं । सकलायाः-साकलं नगरं । वराणसाया अदूरभवा—वाराणसी।विदिशायाः—वैदिशं।

वुञ्छण्कठेलसेयढण्ण्ययफक्फिञिञ्कण्ठणोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमवराहकुमुदादिभ्यः ॥ ८७ ॥ अरीहणादिभ्यः षोडशगणेभ्यो यथासंख्यं वुञादयः षोडश त्याश्चातुरर्थिका भवंति । अरीहणेन निर्वृत्तं

आरीहणकं । खांडवकं । द्रौघणकं । कृशाश्वादेः छण् । कृशाश्वेन निर्वृत्तं कार्शाश्वीयं । आरीष्टीयं । वैशालीयं । ऋश्यादेः कः । ऋश्याः अस्मिन् देशे संति ऋश्यकः । न्यग्रोधकः। सरकः । कुमुदादेष्ठः । कुमुदान्यस्मिन् देशे संति कुमुदिकः । इकटिकः । संकटिकः। काशादेरिलः। काशा अस्मिन् संति—काशिलः । वासिलः।अश्वत्थिलः । तृणादेः सः । तृणान्यस्यां संति तृणसा । नडसा । पर्णसा । प्रेक्षादेरिन् । प्रेक्षया निर्वृत्तः प्रेक्षी । फलका । बंधुकी ॥ अश्मादेरः।अश्मानोऽस्मिन् संति अश्मरः । यूषरः । ऊषरः । सख्यादेढञ्--सख्या निर्वृत्तः साखेयः । साग्निदत्तेयः । वायुदत्तेयः । संकाशादेर्ण्यः—संकाशेन निर्वृत्तं सांकाश्यं । कांपिल्यं । सौपथ्यं ॥ बलादेर्यः—बलेन निर्वृत्तं बल्यं । मूल्यं । कुल्यं ॥ पक्षादेः फक्—पक्षेण निर्वृत्तः पाक्षायणः । पाथायनः । तौषायणः ॥ कर्णादेः फिञ्--कर्णेन निर्वृत्तः कार्णायनिः । वाशिष्ठायनिः । आर्कायणिः सुतंगमादेरिञ्—सुतंगमेन निर्वृत्तः सौतंगमिः । मौनिचित्तिः । माहापुत्रिः । वराहादेः कक् वराहा अस्मिन् देशे संति वाराहकं । पालाशकं । वैदग्धकं ॥ कुमुदादेष्ठञ्—कुमुदान्यस्मिन् संति कौमुदिकं । आश्वत्थिकं । गौमठिकं ॥

जनपदे लुप् ॥ ८८ ॥ चतुर्ष्वर्थेषु यः स्थः तस्योप् भवति जनपदेऽभिधेये । पंचालस्यापत्यानि पंचालास्तेषां निवासो जनपदः पंचालाः । अंगाः । वंगाः । कलिंगाः । कुरवः।

वरणादिभ्यः ॥ ८९॥ एभ्यः परस्य चातुरर्थिकस्य लस्योप् भवति । वरणानामदूरभवं वरणाः नगरं । गोदौ ह्रदौ तयोरदूरभवः गोदौ ग्रामः मथुरा ।

+ शिरीषादुक्कणठाः ॥९०॥ शिरीषशब्दादुशादयश्चातुरर्थिका भवंति । शिरीषाणामदूरभवो ग्रामः शिरीषाः । शैरीषकः।शिरीषिकः ।

शर्करायाश्चुणछण् च ॥ ९१ ॥ शर्कराशब्दात् ठणादयः उशादयश्च चातुरर्थिकाः स्युः। शर्करा अस्मिन् ग्रामे संति शार्करिकः । शार्करीयः। शार्कराः । शर्कराः । शार्करकः । शर्करिकः ॥

नद्यां मतुः ॥ ९२ ॥ नद्यां देशे लौकिको मतुः स्यात् चातुरर्थिकः । उदुम्बरा अस्यां संति उदुंबरावती । मशकावती । पुष्करावती ।

मध्वादेः ॥ ९३ ॥ मध्वादिभ्यो मतुश्चातुरर्थिकः स्यात् । मध्वस्मिन् देशेऽस्ति मधुमान् । बिशवान् । स्थाणुमान् ।

कुमुदनडवेतसमहिषाड्डित् ॥९४॥ कुमुदादेर्मतुश्चातुरर्थिकः स्यात् स च डित् । कुमुदान्यस्मिन् देशे संति कुमुद्वान् । नड्वान् । वेतस्वान् । महिष्मान् ॥

* नडशादाड्वलः ॥९५॥आभ्यां वलो भवति चातुरर्थिकः स च डित्। नड्वलः । शाड्वलः ।

शिखायाः ॥९६॥ शिखाशब्दाद्वलः स्यात् चातुरर्थिकः । शिखया निर्वृत्तं शिखावलं नगरं ॥

उत्करादेश्छः ॥ ९७ ॥ उत्करादिभ्यश्चतुर्ष्वर्थेषु छो भवति । उत्करोऽस्मिन् देशेऽस्ति उत्करीयः । संकरीयः । शूलीयः ।

*नडादेः कछः ॥९८॥नडादिभ्यश्चतुर्ष्वर्थेषु कछो भवति । नडा अस्मिन् देशे संति नडकीयः । प्लक्षकीयः । बिल्वकीयः ॥

शेषे ॥ ९९ ॥ शेषे अर्थविशेषे यथाविहितं त्यो भवति । चक्षुषा गृह्यते चाक्षुषं रूपं । श्रावणः शब्दः । दृषदि पिष्टाः दार्षदाः सक्तवः। अश्वैरुह्यते आश्वो रथः । चतुर्भिरुह्यते चातुरं शकटं।

राष्ट्रदूरापराद्घेत्याद्ये ॥१०० ॥ राष्ट्रादेर्यथासंख्यं घादयो भवंति शेषे । राष्ट्रे जा-

तो भवो वा राष्ट्रियः। दूरेत्यः। औत्तराहः।

पारावारपारावारावारपारेभ्यः खः ॥ १०१ ॥ पार अवार पारावार अवार पार इत्येतेभ्यः खो भवति। पारीणः। अवारीणः। पारावारीणः। अवारपारीणः।

ग्रामाद्य यखञ् ॥ १०२ ॥ ग्रामाद् शेषेऽर्थे यखञौ स्तः। ग्रामे जातो भवो वा ग्राम्यः, ग्रामीणः।

+ढकञ् ॥१०३॥ ग्रामशब्दाच्छेषेऽर्थे ढकञ् स्यात्। ग्रामेयकः।

कत्र्यादेः ॥ १०४ ॥ कत्रि प्रभृतिभ्यो ढकञ् स्यात् शेषे। कत्रौ जातो भवो वा कात्रेयकः। पौष्करेयकः। पौष्कलेयकः।

* कुंड्यादिभ्यो यलं ॥ १०५ ॥ एभ्यो ढकञ् स्यात् शेषेऽर्थे यलं च तत्संनियोगे। कुंड्यायां जातः कौंडेयकः। कुण्यायां जातः कौणेयकः।

+ कुलकुक्षिग्रीवाच्छ्वास्यलंकारे॥१०६॥ कुलादेर्ढकञ् स्यात् श्वाद्यर्थे। कुले जातो भवो वा कौलेयकः श्वा। कौक्षेयकोऽसिः। ग्रैवेयकोऽलंकारः। अन्यत्र—कौलः। कौक्षः। ग्रैवः।

नद्यादेर्ढण् ॥ १०७ ॥ नद्यादिभ्यः शेषेऽर्थे ढण् स्यात्। नद्यां जातो भवो वा नादेयः। माहेयः। वाराणसेयः।

* पुरःपश्चाद्दक्षिणात्त्यण् ॥१०८॥ एभ्यः शेषेऽर्थे त्यण् स्यात्। पुरो भवः पौरस्त्यः। पाश्चात्त्यः। दाक्षिणात्यः।

+वाह्ल्युर्दिपर्दिकापिश्याष्ट्युण् ॥१०९॥ एभ्यः शेषे ष्टुण् स्यात्। वाह्लिषु जनपदे जातः वाह्लायनः। और्दायनः। पार्दायनः। कापिशायनी द्राक्षा।

रंकोर्गोमिनि॥११०॥रंकुशब्दाद् ष्टुण् स्याद्वा गिनि। रांकवायणो गौः। रांकवो गौः। अंगिनीति किं? रांकवः कंबलः।

* द्युप्रागपागुदक्प्रतीचो यः॥ १११॥ दिवः प्रादिपूर्वात् अंचतेश्च यो भवति, शेषेऽर्थे। दिवि जातो भवो वा दिव्यः। प्राच्यः। उदीच्यः। प्रतीच्यः। अपाच्यः।

+कामेहाविस्तस्त्रात्यच् ॥११२॥ काद्भ्यः तसन्तात्रान्तेभ्यश्च शेषेऽर्थे त्यच् भवति। क जातो भवो वा कत्यः। अमात्यः। इहत्यः। आविष्ट्यः। ततस्त्यः। यतस्त्यः। कुतस्त्यः। कुत्रत्यः। तत्रत्यः। यत्रत्यः।

+ निसो गते॥११३॥निसःगतेऽर्थे त्यच् स्यात्। निर्गतो वर्णाश्रमेभ्यः इति निष्ट्यः।

ऐषमोह्यःश्वसः ॥ ११४ ॥ एभ्यः शेषेऽर्थे त्यच् वा स्यात्। एषमो जातः ऐषमस्त्यः। ऐषमस्तनः। ह्यस्त्यः। ह्यस्तनः। श्वस्त्यः। श्वस्तनः।

* वृकरूप्यरण्याण्णः ॥११५॥ रूप्ययोररण्यशब्दाच्च शेषे णो भवति। वृकरूप्ये जातः वार्करूप्यः। शैविरूप्यः। आरण्याः पशवः।

* दिक्प्राचोऽस्वौ ॥११६॥ दिक्पूर्वात् प्रदः शेषे णो भवति अस्वौ। पूर्वस्यां शालायां भवः पौर्वशालः। दाक्षिणशालः। औत्तरशालः। अस्वाविति किं? पूर्वेषुकामशम्यां जातः पूर्वेषुकामशमः।

* मद्रादञ्॥११७॥दिक्प्राचो मद्रशब्दाच्छेषेऽञ् स्यात्। पूर्वेषु मद्रेषु जातो भवो वा पौर्वमद्रः। आपरमद्रः।

÷ उदग्ग्रामाद्यकृल्लोम्नः॥११८॥ उदीच्यग्रामवाचकात् यकृल्लोमन् शब्दात् शेषेऽञ् स्यात्। याकृल्लोमः। उदग्ग्रामादिति किं? याकृल्लोमनः।

× गोष्ठ्यादेः ॥११९॥ गोष्ठीप्रभृतिभ्योऽञ्

स्यात् । गोहयां जातः-गौहः । तैकी । तैकः । गौमती । गौमतः ।

॥ सकलादेर्गोत्रे ॥१२०॥ सकलादेर्गोत्र-वस्त्वो विहितः तद्वताच्छेषेऽर्थेऽञ् स्यात् । सकल-स्यापत्यं साकल्यस्तस्येमे छात्राः साकलाः । काठाः । गौकक्षाः । गोत्र इति किं ? सकलो देवताऽस्येति साकलस्तस्येमे साकलीयाः ।

इञः ॥ १२१ ॥ गोत्रे च इञ् तद्वतादञ् स्यात् शेषेऽर्थे । दाक्षेः छात्राः दाक्षाः । माहाकाः ।

न द्व्यचः प्राग्भरतेषु ॥ १२२ ॥ द्व्यचकं इञंतं यत् प्राग्गोत्रे भरतगोत्रे च वर्तते तस्मादञ् न स्यात् । चैकेरिमे छात्राः चैकीयाः । पौष्पी-याः । भरतेषु—कासेरिमे कासीयाः । वासीयाः । द्व्यच इति किं ? पान्नागारेः छात्राः पान्नागाराः । प्राग्भरतेष्विति किं ? दाक्षाः ।

भवतष्ठण्छसौ ॥ १२३ ॥ अस्मात् शेषेऽर्थे ठण्छसौ स्तौ स्तः । भवतो भवत्या वाऽयं भाव-त्कः । भवदीयः ।

+ जनपरराज्ञःकः॥१२४॥एभ्यःशेषे कओ भवति । जनस्येदं जनकीयं । परकीयं । राज-कीयं । स्वदेवयोरप्यत्र ग्रहणमिति केचित् । स्वकीयं । देवकीयं ।

दोश्छः ॥१२५॥ दुसंज्ञकात् शेषे छो भवति तस्यायं तदीयः । यदीयः । गार्गीयः । स्वायं-भुवीयः । जातीयः ।

+ शीतादिभ्यः कालात् ॥ १२६ ॥ शीता-दिभ्यः परो यः कालशब्दस्तदन्ताच्छेषेऽर्थे छो भवति । शीतकालीयं । उष्णकालीयं ।

+ व्यादिभ्यष्ठञ्ञिठौ ॥ १२७ ॥ विप्रभृति भ्यः परो यः कालशब्दस्तदन्ताच्छेषे ठञ्ञिठौ स्तौ स्तः । वैकालिकः । वैकालिकी । वैकालिका । आनुकालिकः । आनुकालिकी । आनुकालिका ।

॥ काश्यादेः॥१२८॥काशिप्रभृतिभ्यो दुभ्यः शेषे ठञ्ञिठौ स्तः । काशौ जातः—काशिकः । काशिकी । काशिका । वैदिकः । वैदिकी । वैदिका ।

वाहीकग्रामेभ्यः ॥१२९॥ वाहीकदेशग्राम-वाचिभ्यो दुभ्यः शेषेऽर्थे तौ स्तः । साकले जातो भवो वा साकलिकः । साकलिकी । साकलिका । मांथविकः । मांथविकी । मांथविका । कारंत-पिकः । कारंतपिकी । कारंतपिका ।

वोशीनरेषु ॥ १३० ॥ उशीनरेषु ये ग्रामाः तद्वाचिभ्यस्तौ वा स्तः । आंकजालिषु जाता भवा वा आंकजालिकी । आंकजालिका आंकजालीयाः । सौदर्शनिका । सौदर्शनिकी । सौदर्शनीया ।

ओर्देशे ठञ् ॥ १३१ ॥ उवर्णान्ताद्देश-वाचिनष्ठञ् स्यात् । शबरजंब्वां जातो भवो वा शाबरजंबुकः । नैषादकर्षुकः । देशे इति किं ? पटोश्छात्राः पाटवाः ।

दोरेव प्राचां ॥ १३२ ॥ उवर्णान्ताद्दोःप्राच्यां देशवाचिनो दुसंज्ञादेव ठञ् स्यात् शेषे । आढक-जंब्वां जातः आढकजंबुकः । नापितवास्तुकः । नियतोयं प्राचां दोरेव—माल्लवास्तवः ।

कंथायाः ॥ १३३ ॥ कंथायाः शेषे ठञ् स्यात् । कंथायां जातो भवो वो कांथिको गौः ।

वर्णौ वुञ् ॥ १३४ ॥ वर्णौ जनपदे या कंथा तस्याः वुञ् भवति । कांथकोऽश्वः ।

धन्वयोपध्रस्थपुरवहांतात् ॥१३५॥ धन्व-वाचिनो यकारोपधः प्रस्थपुरवहइत्येवमंताश्च देश-वाचिनो दोर्वुञ् स्यात् । पारेधन्वनि जातः पारे-धन्वकः । आपारेधन्वकः । ऐरावतकः । सांकाश्ये भवः सांकाश्यकः । कांपिल्यकः । माकप्रस्थकः । नांदीपुरकः । फाल्गुनी वहकः ।

रोपधीतोः प्राचां ॥१३६॥ रोङः ईकारांताच्च दोः प्राग्देशवाचिनो वुञ् स्यात् । पाटलिपुत्रकः। ऐकचक्रकः । काकंदी-काकंदकः । माकंदकः ।

* राष्ट्रेभ्यः ॥१३७॥ राष्ट्रवाचिनो देशात् दोर्वुञ् स्यात् । आभिसारकः । आदर्शकः । औपुष्टकः ।

* बहुषु ॥१३८॥ राष्ट्रवाचिनो देशात् बहुविषयाद् वुञ् स्यात् शेषे । अंगेषु जातो भवो वा-आंगकः । वांगकः । दार्वकः । आजमीढकः।

कच्छाग्निवक्त्रवर्तयोः ॥ १३९ ॥ कच्छादिपांर्देशवाचिनो वुञ् स्यात् शेषेऽर्थे । भरुकच्छे जातो भवो वा भारुकच्छकः। पैप्पिलिकच्छकः। काण्डाग्नकः । वैतुजाग्नकः। ऐंदुवक्त्रकः।तैंदुवक्त्रकः। बाहुवर्तकः । चाक्रवर्तकः ।

धूमादेः ॥ १४० ॥ धूमादिभ्यो देशवाचिभ्यो वुञ् स्यात् शेषे । धौमकः । गार्तकः । तैर्थकः । काक्षकः ।

* कूलात् सौवीरेषु ॥१४१॥ सौवीरेषु ग्रामात् कूलात् वुञ् स्यात् शेषेऽर्थे।कौलकः। कौलोऽन्यत्र।

+ समुद्रान्नौघ्नोः ॥ १४२ ॥ समुद्रशब्दाद्देशवाचिनो वुञ् स्यात् शेषे स चेत् नौ ना वा भवति । सामुद्रिका नौः । सामुद्रको मनुष्यः । अन्यत्र-सामुद्रं लवणं ।

नगरात् कुत्सादाक्ष्ये ॥ १४३ ॥ नगराद्देशवाचकाच्छेषे वुञ् स्यात् कुत्सायां दाक्ष्ये च । केनायं पुरुषो मुषितः इह नगरे मनुष्येण संभाव्यत एतन्नागरके चोरा हि नागरका भवंति। केनेयं वीणा वादिता । इह नगरे मनुष्येण उपपद्यते एतन्नागरके निपुणा हि नागरका भवंति ॥ कुत्सादाक्ष्ये इति किं ? नागरः पुरुषः ।

+नृपथ्यध्यायन्यायविहारेभेऽरण्यात्॥१४४॥ अरण्याद्देशवाचिनो वुञ् स्यात् शेषे प्रायर्थे ।आरण्यको ना, पंथाः, अध्यायः, न्यायः, विहारः, हस्ती वा । आरण्याः औषधयोऽन्यत्र ।

+ वा गोमये ॥ १४५ ॥ अरण्यशब्दाद्देशवाचिनो वुञ् वा स्यात् शेषे गोमये । आरण्यकः । आरण्यः गोमयः ।

कुरुयुगंधरात् ॥ १४६ ॥ आभ्यां देशवाचिभ्यां वुञ् स्याद् वा । कुरुषु जातो भवो वा कौरवकः । कौरवः । यौगंधरकः, यौगंधरः ।

वृजिमद्रात् कः ॥ १४७ ॥ आभ्यां देशवाचिभ्यां शेषे को भवति । वृजिकः । मद्रकः ।

कोपोऽण् ॥ १४८ ॥ कोपो देशवाचिनोऽण् स्यात् । ऋषिकेषु जातः-आर्षिकः।माहिषिकः । आश्मकः ।

कच्छादेः ॥ १४९ ॥ कच्छादिभ्योऽण् स्यात् शेषे । काच्छः । सैंधवः । वार्णवः ।

नृतत्स्थे च वुञ् ॥ १५० ॥ नरि तत्स्थे च कच्छादेर्वुञ् स्यात् । काच्छको ना । काच्छकमस्य जल्पितं हासितं । काच्छिका चूला । एवं-सैंधको ना ।

गोयवाग्वपत्यौ शाल्वात् ॥ १५१ ॥ शाल्वाद्देशवाचिनः शेषे वुञ् स्यात् गवि यवाग्वां अपत्ये च । शाल्वको गौः । शाल्विका यवागूः शाल्वको मनुष्यः । एष्विति किं ? शाल्वाः व्रीहयः । शाल्वः पत्तिः ।

* पृथिवीमध्यान्निवासाच्चरणेऽण् मध्यमश्च ॥ १५२ ॥ पृथिवीमध्यशब्दात् निवासभूताच्चरणे कठादौ अण् स्यात् । मध्यमश्चास्यादेशः। पृथिवीमध्ये जातो भवो वा माध्यमः कठादिः । निवासादिति किं ? मध्यमीयः ।

गर्तयुगहादिभ्यः ॥ १५३ ॥ गर्तयोः गहादिभ्यश्च छो भवति । श्वाविद्गर्ते जातो भवो वा श्वाविद्गर्तीयः। वृकगर्तीयः । शृगालगर्तीयः।

महीयः।अंतस्थीयः।समीयः।विषमीयः।उत्तमीयः।
* दोः कखोत्कंथाफलदनगरग्रामह्रदयोः ॥ १५४ ॥ दोः कोखःखोकः कंथादियोश्च छो भवति । आरीहणके जातो भवो वा आरीहणकीयः । ब्राह्मणकीयः । कौटिशिलीयः । माहिशिलीयः । दाक्षिकंथीयः । माहिककंथीयः । दाक्षिफलदीयः । माहिकिनगरीयः । दाक्षिग्रामीयः । गोमयह्रदीयः । दधिह्रदीयः ।

प्राचां कटादेः ॥ १५५ ॥ प्राचां देशवाचिनः कटादेः छो भवति शेषे । कटनगरीयः। कटग्रामीयः ।

+ पर्णकृकणाद भारद्वाजे ॥१५६ ॥ आभ्यां भारद्वाजदेशवाचिभ्यां छो भवति शेषे । पर्णीयः। कृकणीयः । पार्णः । कार्कणोऽन्यत्र ।

पर्वतान्मर्त्ये ॥ १५७ ॥ पर्वताच्छो भवति मर्त्ये । पर्वते जातः पर्वतीयो मनुष्यः ।

वा ॥ १५८ ॥ पर्वताच्छेषे छो वा स्यात् शेषे । पर्वतीयमुदकं । पार्वतं फलं वा ।

+ वेणुकादिभ्यः छण ॥ १५९ ॥ एभ्यः देशवाचिभ्यः छण् स्यात् शेषे । वैणुकीयः । वैत्रकीयः ।

युष्मदस्मदोऽकञ् वाऽखञौ ॥ १६० ॥ आभ्यां अखञौ वा स्तः तत्संनियोगे तयोः अककादेशश्च । युष्माकं युवयोर्वाऽयं यौष्माकः। यौष्माकीणः । युष्मदीयः । आस्माकः । आस्माकीनः । अस्मदीयः ।

तवकममकमेकार्थे ॥ १६१ ॥ तयोस्तवकममकावादेशौ स्तः एकार्थे अखञोः परतः । तवायं तावकः।तावकीनः ।मामकः। मामकीनः ।

योऽर्द्धात् ॥ १६२ ॥ अर्द्धाद् यो भवति शेषे । अर्द्धे भवं अर्द्ध्यं ।

+ सादेष्ठण् ॥ १६३ ॥ सादेरर्द्धाट्ठण् स्यात् शेषे । पुष्करार्द्धे भवः पौष्करार्द्धिकः । वैजार्द्धिकः ।

* दिगादेस्तौ ॥१६४॥ दिगादेरर्द्धात् यठणौ तौ स्तः । पूर्वार्द्ध्यं । पौर्वार्द्धिकः । दक्षिणार्द्ध्यं । दाक्षिणार्द्धिकः ।

ग्रामराष्ट्रस्याणठणौ ॥ १६५ ॥ ग्रामस्य राष्ट्रस्य चार्द्धात् दिगादेरण्ठणौ स्तः । ग्रामस्य राष्ट्रस्य वा पूर्वार्द्धे भवः पौर्वार्द्धः । पौर्वार्द्धिकः । अपरार्द्धे जातो भवो वा पाश्चार्द्धः । पाश्चार्द्धिकः ।

परावराधमोत्तमादेर्यः ॥१६६॥ परादिपूर्वादर्द्धात् यो भवति । परार्द्ध्यं । अवरार्द्ध्यं । अधमार्द्ध्यं । उत्तमार्द्ध्यं ।

+अंतोऽवोऽधसोऽमः ॥१६७॥ एभ्य अमो भवति । अंतमः । अवमः । अधमः ।

+ लोकाध्यात्मादिभ्यष्ठण् ॥१६८॥ लोकयोरध्यात्मादिभ्यश्च ठण् स्यात् । इह लोके जातः भवो वा ऐहलौकिकः । पारलौकिकः । अध्यात्मं भवं आध्यात्मिकं । आधिदैविकं । ऐहिकं ।

+ समानादुदादेश्च ॥१६९॥ समानात् समानादेश्च ठण् स्यात् । समाने भवाः सामानिकाः। देवाः । सामानग्रामिकः ।

ऊर्ध्वाद्दमदेहात् ॥ १७० ॥ ऊर्ध्वात् पराभ्यां दमदेहाभ्यां ठण् स्यात् । ऊर्ध्वाद् दमो दमादूर्ध्वं वा ऊर्ध्वदमः। तत्र भवः और्ध्वदमिकः। और्ध्वदेहिकः ।

+वर्षाकालेभ्यः ॥१७१॥ वर्षाशब्दात् कालवाचिभ्यश्च ठण् स्यात् । वर्षासु भवो वार्षिकः । पूर्ववार्षिकः । मासिकः । आर्द्धमासिकः । सांवत्सरिकः ।

कर्मणि श्राद्धे शरदः ॥१७२॥ शरच्छब्दात् श्राद्धे कर्मणि ठण् स्यात् । शारदिकं श्राद्धं ।

आढ् इति किं ? शारदं दधि ।

वा रोगातपे ॥ १७३ ॥ शरदः ठञ् वा स्यात् रोगे आतपे च । शरदि भवः शारदिकः, शारदो रोग आतपो वा ।

निशाप्रदोषहेमंताट्ट ॥१७४॥ एभ्यष्ठण् वा स्यात् शेषे । नैशिकः । नैशः । प्रादोषिकः । प्रादोषैः । हैमंतिकः । हैमंतः ।

* लं तोऽणि ॥१७५॥ हेमंततकारस्य लं वा भवत्यणि परतः । हैमनः । हैमंतः ।

श्वसस्तुट् च ॥ १७६ ॥ श्वसूशब्दाट्ट ठण् वा स्यात् । तस्य च तुट् चागमः। शौवस्तिकः । श्वस्त्यः । श्वस्तनः ।

*पूर्वाह्णापराह्णात्तनट् ॥१७७॥ आभ्यां तनट् वा स्यात् । पूर्वाह्णे जातो भवो वा पूर्वाह्णेतनः । पौर्वाह्णिकः । अपराह्णेतनः । आपराह्णिकः ।

सायंचिरंप्राह्णेप्रगेऽद्यः ॥ १७८ ॥ सायमादेः शिभ्यश्च तनट् स्यात् । सायं जातो भवो वा सायंतनः । चिरंतनः । प्राह्णेतनः । प्रगेतनः । शेः—प्राक्तनं, प्रातस्तनं । दिवातनं । दोषातनं ।

+ चिरपरुत्परारेस्त्नः ॥१७९॥ चिरादेस्त्नो भवति । चिरात्नः । परुत्नः । परारित्नः ।

भसंध्यापृतुभ्योऽण् ॥१८०॥ भेभ्यःसंध्यादिभ्य ऋतुभ्योऽण् स्यात् । तिष्ये भवः तैषः । पौषः । माघः । सांध्यः । सांधिवेलः । आमावास्यः । ऋतोः—ग्रैष्मः । शैशिरः । वासंतः ।

+ संवत्सरात् पर्वफले ॥ १८१ ॥ संवत्सरात् पर्वणि फले चाण् स्यात् । सांवत्सरं पर्व फलं वा ।

प्रावृष एण्यः ॥ १८२ ॥ प्रावृट्शब्दात् कालवाचिनःएण्यो भवति । प्रावृषेण्यः बलाहकः ।

*द्वीपादनुसमुद्रं ञ्यः ॥१८३॥अनुसमुद्रसमीपे यो द्वीपः तस्मात् ञ्यो भवति । द्वैप्यं ।

+पश्चादग्राद्यंतादिमः ॥ १८४ ॥ एभ्य इमो भवति शेषे । पश्चिमः । अग्रिमः । आदिमः । अंतिमः ।

मध्यान्मः ॥ १८५ ॥ मध्यान्मो भवति शेषे । मध्यमः ।

संमत्वः ॥ १८६ ॥ संमत्वर्थे मध्यादत्वो भवति । नाति स्थूलो नातिकृशो मध्यः । नाति ह्रस्वो नाति दीर्घो यः सोऽपि मध्यः ।

+ वामाजिनांतात्लुप् ॥१८७॥वामांतात् अजिनांताच्च परस्य शैषिकस्य त्यस्योप् भवति । अश्वत्थाम्नि जातः अश्वत्थामा । सिंहाजिनः ।

इति जैनेंद्रापरनाम्नि शब्दार्णवव्याकरणे
शब्दार्णवचंद्रिकायां लघुवृत्तौ
तृतीयस्याध्यायस्य
द्वितीयः पादः

## तृतीयः पादः

तत्र जातः ॥ १ ॥ तत्रेतीप्समर्थात् जात इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । स्वजन्मनि अनपेक्षितपरव्यापारः कर्तृभूतो जातः । स्रुघ्ने जातः स्रौघ्नः । माथुरः । औत्सः । राष्ट्रियः । पारीणः । ग्रामेयः । ग्राम्यः । नादेयः ।

प्रावृषष्ठः ॥ २ ॥ अस्माट्ट ठः स्यात् । प्रावृषि जातः प्रावृषिकः ।

त्सौ शरदो वुञ् ॥ ३ ॥ शरदो वुञ् स्याट्ट त्सौ । शारदकाः मुद्गाः । त्साविति किं ? शारदं धान्यं ।

सिंध्वपकराट्च ॥ ४ ॥ आभ्यामण् स्यात् । सैंधवः । आपकरः ।

पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुञ्कः ॥५ एभ्यस्ताभ्यां च को भवति । पूर्वाह्णे जातः पूर्वा-

...कः । अपराह्णकः । आर्द्रकः । मूलकः । प्रदोषकः । अवस्करकः । सिंधुकाः । अपकरकः ।

* पंथकः ॥ ६ ॥ पथिन्शब्दात् को निपात्यः पंथादेशश्च । पथि जातः पंथकः ।

वाऽमावास्यायाः ॥ ७ ॥ अमावास्याशब्दात् को वा स्यात् ।अमावास्यकः।आमावास्यः।

* श्रविष्ठाषाढाभ्यां ॥ ८ ॥ आभ्यां तस्याश्च अत्यो भवति । श्रविष्ठासु जातः श्रविष्ठः । आषाढः । अमावास्यः ।

* छण् ॥ ९ ॥ ताभ्यां छण् स्यात् । श्राविष्ठीयः । आषाढीयः ।

फल्गुन्याष्टः ॥ १० ॥ फल्गुनीशब्दाट्टो भवति । फल्गुन्यां जातः—फल्गुनः । फल्गुनी ।

पुष्यार्थपुनर्वसुस्वात्यनुराधाविशाखाबहुलाहस्तादुप ॥ ११ ॥ पुष्यार्थेभ्यः पुनर्वस्वादिभ्यश्च भाणः उप् स्यात् तत्र जातेऽर्थे । पुष्ये जातः पुष्यः । तिष्यः । सिध्यः । पुनर्वसुः । स्वातिः । अनुराधः । विशाखः । बहुलः । हस्तः ।

* चित्रारेवतीरोहिण्याः स्त्रियां ॥ १२ ॥ चित्रादिभ्यो भाणः स्त्रियामुप् स्यात् स्त्री।चित्रायां जाता चित्रा । रेवती । रोहिणी स्त्री । स्त्रियामिति किं ? चैत्रः ।

*बाऽन्यतः॥१३॥ श्रविष्ठादिभ्योऽन्येभ्यो भेभ्यो भाण उप् वा भवति । अभिजिति जातः अभिजित् । आभिजितः । अश्वयुक्, आश्वयुजः । शतभिषक्, शातभिषजः । कृत्तिकः, कार्त्तिकः । मृगशीर्षः, मार्गशीर्षः ।

* वत्साच्छालात्॥ १४ ॥ वत्सपूर्वात् शालात् परस्य जातार्थे उत्पन्नस्याणः उब्वा भवति । वत्सशाले जातः—वात्सशालः । वत्सशालः ।

* गोस्वरात् ॥ १५ ॥ आभ्यां शालादुप् भवति । गोशालः । खरशालः ।

*स्थानांतात् ॥ १६ ॥ स्थानांतात् उप् भवति जाते स्त्री । गोस्थानः । अश्वस्थानः ।

कृतलब्धक्रीतसंभूताः ॥ १७ ॥ तमेतीप्समर्थात् कृताद्यर्थेषु यथाविहितं त्यो भवति । स्रुघ्ने कृतः लब्धः क्रीतः संभूतो वा स्रौघ्नः । माथुरः । औत्सः । राष्ट्रियः । पारीणः । स्वोत्पादापेक्षितव्यापारः कृतः । सामान्येन प्राप्तं लब्धं । मूल्येन प्राप्तं क्रीतं । संभूतिः संभावना । तत्कृतकर्मभूतः संभूतः ।

कुशलः ॥ १८ ॥ ईप्समर्थात् कुशल इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति।स्रुघ्ने कुशलः स्रौघ्नः । नादेयः ।

पथो वुन ॥ १९ ॥ पथिन्शब्दात् वुन् स्यात् । पथि कुशलः पथकः ।

*कोऽश्मादेः ॥ २० ॥ अश्मन्प्रभृतिभ्यः को भवति।अश्मनि कुशलः अश्मकः।स्नरुकः।आकर्षकः।

कालात्साधुपुष्प्यत्पच्यमाने ॥ २१ ॥ कालवाचकादीप्समर्थात् यथाविहितं त्यो भवति साध्वाद्यर्थेषु । हेमन्ते साधुः हैमनः प्रावारः । वसंते पुष्प्यंति वासंत्यो लताः । शरदि पच्यंते शारदाः शालयः ।

उप्ते ॥ २२ ॥ कालवाचकादीप्समर्थात् उप्तेऽर्थे यथाविहितं त्यो भवति । शरदुप्ताः शारदाः यवाः । ग्रैष्माः शालयः ।

आश्वयुज्या वुञ् ॥ २३ ॥ आश्वयुजीशब्दात् वुञ् स्यात् । आश्वयुज्यामुप्ताः आश्वयुजकाः माषाः ।

ग्रीष्मवसंताद्वा ॥ २४ ॥ आभ्यां वुञ् वा भवति उप्ते।ग्रैष्मकं । ग्रैष्मं।वासंतकं, वासंतं सस्यं।

देयमृणे ॥ २५ ॥ कालवाचकादीप्समर्थात् देयमृण इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । मासे देयं ऋणं मासिकं । सांवत्सरिकं ।

कलापिश्वत्थयवबुसोमाव्यासैषमसो वुन् ॥ २६ ॥ एभ्यो वुन् स्यात् । यस्मिन् काले मयूराः केदारा इक्षवः कलापिनो भवंति स कालस्तत्साहचर्यात् कलापी । यस्मिन्नश्वत्थाः फलंति सोऽश्वत्थः । यस्मिन् यवानां बुसं स यवबुसः । उमाव्यस्यंते विक्षिप्यंते यस्मिन् काले स उमाव्यासः । कलापिनि काले देयमृणं कलापकं।अश्वत्थकं।यवबुसकं।उमाव्यासकं।ऐषमकं।

ग्रीष्मावरसमाद् वुञ् ॥२७॥ आभ्यां वुञ् भवति देये ऋणे । ग्रैष्मकं । आवरसमकं ।

संवत्सराग्रहायण्याष्ठण् च ॥ २८ ॥ आभ्यां ठण् स्यात् वुञ् च । संवत्सरे देयमृणं सांवत्सरिकं । सांवत्सरकं।आग्रहायणिकं । आग्रहायणकं।

रौति मृगः ॥ २९ ॥ कालवाचकादीप्समर्थात् रौति मृग इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । निशायां रौति मृगः—नैशिकः, नैशः । प्रादोषिकः । प्रादोषः ।

* जयी च ॥ ३० ॥ जयी इत्येतस्मिन्नर्थे कालवाचिनो यथाविहितं त्यो भवति । निशायां जयी नैशिकः, नैशः । वासंतः । चकारः काकानुकर्षणार्थः ।

भवः ॥३१॥ तत्रेतीप्समर्थाद् भव इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । स्रुघ्ने भवः स्रौघ्नः । राष्ट्रीयः । ग्रामीणः ।

दिगादेर्यः ॥३२॥ दिगादिभ्यो यो भवति। दिशि भवो दिश्यः । वर्ग्यः । वंश्यः ।

देहांशात् ॥३३॥ शरीरावयवात् यो भवति। दंतेषु भवः दंत्यः । ओष्ठ्यः । कर्ण्यः । मुख्यः ।

दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ॥ ३४ ॥ एभ्यो ढञ् स्यात् । दृतौ भवं दार्तेयं जलं । कौक्षेयः व्याधिः । कालशेयं तक्रं । वास्तेयं मूत्रं । आस्तेयं तेजः । अस्तुजः त्वसंनिधाने अस्तिभावो विवक्ष्यते । आहेयं विषं ।

ग्रीवाभ्योऽण् च ॥३५॥ग्रीवाशब्दादण् स्यात् ढण् च । ग्रीवासु भवं ग्रैवं, ग्रैवेयं ।

+ चतुर्मासात् लौ ॥३६॥ चतुर्मासात् अण् भवति लौ । चतुर्षु मासेषु भवा चातुर्मासी । लाविति किं ? चतुर्मासः ।

ञ्यो यज्ञे ॥ ३७ ॥ चतुर्मासात् ञ्यो भवति यज्ञेऽर्थे । चातुर्मास्यानि यज्ञकर्माणि ।

*दैवबाहिर्गंभीरपंचजनात् ॥३८॥एभ्यो ञ्यो भवति।दैवे भवः दैव्यः।बाह्यः।गांभीर्यः।पांचजन्यः ।

* हात् परिमुखादेः ॥३९॥ हसंज्ञात् परिमुखादेर्ञ्यो भवति । मुखात् परि—परिमुखं । तत्र भवः—पारिमुख्यः । पारिहंतव्यः । पार्योष्ठ्यं ।

अंतःपूर्वाट्ठञ्॥४०॥हादंतःशब्दपूर्वात् ठञ् स्यात् । अगारस्यांतः—अंतरगारं । तत्र भवः आंतरगारिकः । आंतर्गेहिकः । आंतःपुरिकः ।

उपाज्जानुनीविकर्णात् प्राये॥४१॥ उपपूर्वेभ्यो जान्वादिभ्यो हसंज्ञकेभ्यः ठञ् स्यात् तत्र प्राये भवे । जानुनः समीपं-उपजानु । तत्र प्रायः भवः औपजानुकः सेवकः । औपनीविकं कार्षापणकं । औपकर्णिकः सूचकः ।

पर्यनोर्ग्रामात् ॥४२॥ आभ्यां ग्रामात् ठञ् स्यात् । ग्रामात् परि-परिग्रामं तत्र भवः-पारिग्रामिकः । आनुग्रामिकः ।

+मध्याच्छणादिना मुक् च ॥ ४३ ॥ मध्यशब्दात् तत्र भवे छादयो भवंति मुक् चागमः । मध्ये भवः मध्यमीयः । माध्यमः । माध्यमा । मध्यंदिनः ।

जिह्वामूलांगुलेश्च छः । ४४ । आभ्यां मध्याच्च छो भवति । जिह्वामूलीयः।अंगुलीयः । मध्यीयः ।

वर्गांतात् ॥ ४५ ॥ वर्गांतात् भवे छो भव-

ति । कवर्गीयः । चवर्गीयः ।

यखौ चाशब्दे । ४६ । वर्गांताद् यखौ स्तः अशब्दे । भरतवर्ग्यः । भरतवर्गीणः । भरतवर्गीयः । एवं-बाहुबलिवर्ग्यः, बाहुबलिवर्गीणः, बाहुबलिवर्गीयः । अशब्द इति किं ? टवर्गीयः ॥

+ रूढेऽन्तःपुराट्ठः । ४७ । रूढे विषये अंतःपुरात् ठो भवति । अंतःपुरे भवा अंतःपुरिका स्त्री । रूढ इति किं ? आंतःपुरः ।

* कर्णललाटात् कः ॥४८॥ आभ्यां को भवति रूढे । कर्णिका । ललाटिका भूषणविशेषः ।

* तस्य व्याख्याने च ग्रंथात् ॥४९॥ तस्येति तासमर्थात् व्याख्यानेऽर्थे तत्र भवे च ग्रंथवाचकात् यथाविहितं त्यो भवति । सुपां व्याख्यानं सुप्सु भवं वा सौपं । तैङं । कार्त्तं । ग्रंथादिति किं ? पाटलिपुत्रस्य व्याख्यानी सुकोशला ।

* बहचष्ठञ् प्रायः ॥ ५० ॥ बह्वचो ग्रंथात् ठञ् भवति प्रायः । षत्वणत्वस्य व्याख्यानं तत्र भवं वा षात्वणत्विकं । पांचहोतृकं । ब्राह्मणिकं । प्राथमिकं । नामाख्यातिकं । आग्निष्टोमिकं । क्वचिन्न—संहितायाः व्याख्यानं सांहितं । बह्वच इत्येव—हार्द ।

द्व्यजृचः ॥ ५१ ॥ द्व्यचो मृदः ऋक्शब्दाच्च ठञ् स्यात् । अंगस्य व्याख्यानं तत्र भवं वा आंगिकं । पौर्विकं । तार्किकं । वार्षिकं । नामिकं । ऋक्—आर्चिकं ।

+ ऋषिभ्योऽध्याये ॥ ५२ ॥ ऋषिशब्देभ्यो ग्रंथवाचिभ्यष्ठञ् स्यात् अध्याये । वशिष्ठस्य व्याख्यानं तत्र भवं वा वाशिष्ठिकोऽध्यायः । वैश्वामित्रिकः ।

* पौरोडाशपुरोडाशाट्ठष्ठौ ॥ ५३ ॥ आभ्यां ट्ठष्ठौ त्यौ स्तः । पौरोडाशिकः । पौरोडाशिकी । पौरोडाशिका । पुरोडाशिकः । पुरोडाशिकी । पुरोडाशिका ।

छंदसो यः ॥ ५४ ॥ छंदसो यो भवति छंदस्यः ।

* शिक्षादेश्चाण् ॥ ५५ ॥ शिक्षादिभ्यः छंदसश्च अण् स्यात् । शिक्षायाः व्याख्यानं तत्र भवो वा शैक्षः । आर्गयनः । पादव्याख्यानः । छांदसः ।

तत आगतः ॥ ५६ ॥ तत इति कासमर्थात् आगत इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । स्रुघ्नादागतः-स्रौघ्नः । राष्ट्रियः । आहिच्छत्रः ।

यौनमौखात् वुञ् ॥ ५७ ॥ योनेभ्यो मौखेभ्यश्च वुञ् भवति तत आगतेऽर्थे । मातुलादागतं मातुलकं । मातामहकं । औपाध्यायकं । आचार्यकं । ऋत्विज आगतं आर्त्विजकं ।

* वा पित्र्यं ॥ ५८ ॥ पितृशब्दात् यो वा निपात्यः । पितुरागतं पित्र्यं, पैतृकं ।

* ऋष्ठण् ॥ ५९ ॥ ऋकारांतात् यौनमौखात् ठण् स्यात् । मातुरागतं मातृकं । भ्रातृकं । होतृकं । पैतृकं ।

* आयस्थानात् ॥ ६० ॥ आयस्थानवाचकात् ठण् स्यात् । शुल्कशालाया आगतः शौल्कशालिकः । गौल्मिकः । आपणिकं ।

* शुंडिकादेरण् । ६१ ॥ शुंडिकादिभ्योऽण् स्यात् आगते । शौंडिकः । कार्कणः । तैर्थः ॥

गोत्रादंकवत् ॥ ६२ ॥ गोत्रादंक इव त्यविधिर्भवति तत आगतेऽर्थे । यथा--विदानां अंकः वैदः । तथा विदेभ्य आगतं वैदं । गार्ग । औपगवकं ।

* नृहेतोर्वा रूप्यः ॥ ६३ ॥ नृवाचिभ्यो हेतुवाचिभ्यश्च रूप्यो वा भवति आगते । जिनदत्तादागतं जिनदत्तरूप्यं । जैनदत्तं । समाद्धेतोरागतं समरूप्यं, समीयं । पापरूप्यं, पापीयं ।

मयट् ॥ ६४ ॥ नृहेतुभ्यो मयट् स्यात् आगते । जिनदत्तमयं । सममयं पापमयं ।

प्रभवति ॥ ६५ ॥ तत इति कांतात् प्रभवतीत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । हिमवतः प्रभवति हैमवती गंगा । दारदी सिंधुः । स्रौघ्नः । राष्ट्रियः । अवारीणः ।

+ त्यदादेर्मयट् ॥ ६६ ॥ त्यदादिभ्यो मयट् स्यात् । त्यस्मात् प्रभवति-त्यन्मयं । तन्मयं । भवन्मयं ।

* वैडूर्यः ॥६७॥ विडूरशब्दाड्ड्यो निपात्यः । विडूरात्नगरात्प्रभवति वैडूर्यो मणिः ।

* तद्गच्छत्यध्वदूते ॥ ६८ ॥ तदितीप्स-मर्थात् गच्छत्यर्थे यथाविहितं त्यो भवति अध्वनि दूते च । स्रुघ्नं गच्छति स्रौघ्नः । राष्ट्रियः । ग्रामीणः अध्वा दूतो वा । अध्वदूत इति किं ? स्रुघ्नं गच्छति सार्थः ।

अभिनिष्कामति द्वारं ॥ ६९ ॥ ईप्समर्थाद् अभिनिष्कामति द्वारमित्येतस्मिन्नर्थे यथाविहितं त्यो भवति । स्रुघ्नमभिनिष्कामति द्वारं स्रौघ्नं । आहिच्छत्रं । राष्ट्रियं ।

प्रस्तुत्य कृते ग्रंथे ॥ ७० ॥ तदितीप्सम-र्थात् प्रस्तुत्य कृतेऽर्थे ग्रंथे यथाविहितं त्यो भवति । सुलोचनां प्रस्तुत्य कृतो ग्रंथः सौलोचनः । सौ-भद्रः । सौकुमारः । ग्रंथ इति किं ? सुतारां प्रस्तुत्य कृत प्रासादः ।

+ ज्योतिषं ॥ ७१ ॥ ज्योतिःशब्दादण् ऐव-भावश्च निपात्यः । ज्योतींषि प्रस्तुत्य कृतो ग्रंथः ज्योतिषं ।

+ आख्यायिकासूप्प्रायः ॥ ७२ ॥ आ-ख्यायिकासु उत्पन्नस्य त्यस्य उप् भवति प्रायः । वासवदत्तां प्रस्तुत्य कृताख्यायिका वासवदत्ता । दोषकल्पोप्त्र । उर्वशी । सुमनोहरा । क्वच उप् । न च भवति । भीमरथं—भैमरथी ।

* द्वंद्वेंद्रजननादिभ्यश्छः ॥ ७३ ॥ द्वंद्वात् इंद्र-जननादिभ्यश्च प्रायश्छो भवति । श्रीमतीवज्र-जंघौ च प्रस्तुत्य कृतो ग्रंथः श्रीमतीवज्रजंघीयः । भरतबाहुबलीयः । श्रीपालवसुपालीयः । इंद्रज-ननीयः । प्रद्युम्नोदयनीयं । सीतान्वेषणीयं ।

सोऽस्य निवासः ॥ ७४ ॥ स इति वासमर्थात् निवासवाचिनोऽस्येति तार्थे यथाविहितं त्यो भवति । स्रुघ्नो निवासोऽस्य स्रौघ्नः । राष्ट्रि-यः । नादेयं ।

* अभिजनः ॥ ७५ ॥ वांतात् अभिजन इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । स्रुघ्नोऽभि-जनोऽस्य स्रौघ्नः । राष्ट्रियः ।

छोऽस्त्राजीवेऽद्रेः ॥ ७६ ॥ स इति वांता-दद्रिवाचिनश्छो भवति अस्त्राजीवेऽर्थे । हृद्गोलोऽ द्रिरभिजनोऽस्य हृद्गोलीयः । खलीयः । भोज-कटीयः । अस्त्राजीव इति किं ? ऋक्षोदोऽद्रिर-भिजनोऽस्य आर्क्षोदो ब्राह्मणः । अद्रेरिति किं ? सांकाश्यकोऽस्त्राजीवी ।

शंडिकासिंध्वादेर्ञ्याणू ॥ ७७ ॥ शंडिकादेः सिंध्वादेश्च ञ्याणौ त्यौ स्तः यथासंख्यं । शंडि-कोऽभिजनोऽस्य शांडिक्यः । कौचवार्यः । सार्व-सैन्यः । सैंधवः । वार्णवः । माधुमतः ।

तूदीवर्मत्या ढण् ॥ ७८ ॥ आभ्यां ढण् स्यात् । तूदी अभिजनोऽस्य । तौदेयः । वार्मतेयः ।

शलातुराच्छण् ॥ ७९ ॥ अस्मात् छण् स्यात् । शलातुरोऽभिजनोऽस्य—शालातुरीयः ।

भक्तिः ॥ ८० ॥ वांताद् भक्तिरित्यस्मिन्नर्थे यथाविहितं त्यो भवति । स्रुघ्नं भक्तिरस्य स्रौघ्नः । माथुरः । राष्ट्रियः ।

* महाराजादेकत्कालाचिचाट्ठञ् ॥ ८१ ॥ महाराजशब्दाद् देशकालवर्जितादचित्ताच्च ठञ् स्यात् । महाराजो भक्तिरस्य माहाराजिकः । आपूपिकः । शाष्कुलिकः । मौदकिकः । अदेश-कालग्रहणं किं ? स्रौघ्नः । पूर्वाह्णतनः ।

* वासुदेवार्जुनाद् वुन् ॥ ८१ ॥ आभ्यां वुन् स्यात् । वासुदेवो भक्तिरस्य वासुदेवकः । अर्जुनकः ।

गोत्रराजाख्याद् वुञ् प्रायः ॥ ८३ ॥ गोत्राख्येभ्यो राजाख्येभ्यश्च वुञ् स्यात् प्रायः । औपगवो भक्तिरस्य औपगवकः । गार्ग्यकः । गार्ग्यायणकः । नाकुलकः । साहदेवकः । दौर्यो-धनकः । प्राय इति किं ? पाणिनो भक्तिरस्य पाणिनीयः । पौरवीयः ।

राष्ट्रवत्सर्वं सरूपाद् द्रेः ॥ ८४ ॥ "राष्ट्राद्रः सनाम्नोऽञ् राजापत्ये" इत्यधिकृत्य सरूपात् सनाम्नो यो द्रिरुक्तः तदतस्य भक्तियुक्तस्य राष्ट्रवत्सर्वं स्यात् प्रकृतिः त्यश्च । वृजेरपत्यं वार्ज्यः, वार्ज्यौ वृजयो वा भक्तिरस्य वृजिकः । मद्रकः । पांडवकः । आंगकः । वांगकः । सरूपादिति किं ? अनुषंडो जनपदः तस्य पौरवो राजा स भक्तिरस्य पौरवीयः । द्रेरिति किं ? पंचाला ब्राह्मणा भक्तिरस्य पांचालः ।

तेन प्रोक्तं ॥ ८५ ॥ तेनेति भासमर्थात् प्रोक्तमित्यस्मिन्नर्थे यथाविहितं त्यो भवति । गौतमेन प्रोक्तः गौतमः आचारः । श्रीदत्तीयं । सामंतभद्रं ।

* मौदादिभ्योऽण् ॥ ८६ ॥ एभ्योऽण् स्यात् । मौदेन प्रोक्तं विदंत्यधीयते वा मौदाः । पैप्पलादाः । जाजलाः ।

* कठादिभ्यश्छंदस्युप् ॥ ८७ ॥ एभ्यश्छंदसि प्रोक्तार्थे त्यस्योप् भवति तच्चेत्प्रोक्तं छंदो वेद्यो भवति । कठेन प्रोक्तं छंदो विदंत्यधीयते वा कठाः । चरकाः । कर्कराः ।

* तित्तिरिवरतंतुखंडिकोखाच्छण् ॥ ८८ ॥ एभ्यः छण् भवति छंदसि । तित्तिरिणा प्रोक्तं विदंत्यधीयते वा तैत्तिरीयाः । वारतंतवीयाः । खांडिकीयाः । औखीयाः ।

छगलिनो ष्फिन् ॥ ८९ ॥ अस्मात् प्रोक्ते ष्फिन् स्यात् । छागलेयी । छागलेयिनो ।

शौनकादिभ्यो णिन् ॥ ९० ॥ एभ्यो णिन् स्यात् । शौनकेन प्रोक्तं छंदो विदंति शौनकिनः । हारिद्राविणः । सांगरविणः । छापेयिनः ।

पुराणे कल्पे ॥ ९१ ॥ तेन प्रोक्ते पुराणे कल्पे णिन् स्यात् । पिंगेन प्रोक्तः कल्पः पुराणश्चेत् पैंगी कल्पः । तार्णपैंगी । आरुणपराजी । पुराण इति किं? आश्मरथ्येन प्रोक्तः आश्मरथः कल्पः ।

+ काश्यपकौशिकाच्छंदोवत् ॥ ९२ ॥ आभ्यां तेन प्रोक्ते पुराणे कल्पे छंदसीव कार्यं स्यात् । काश्यपेन प्रोक्तं पुराणं कल्पं विदंति काश्यपिनः । कौशिकिनः ।

* शिलालिपाराशर्यान्नटाभिक्षुसूत्रे ॥ ९३ ॥ आभ्यां नटसूत्रे भिक्षुसूत्रे चार्थे छंदोवत् कार्यं स्यात् । नटानामध्ययनं नटसूत्रं । शिलालिना प्रोक्तं नटसूत्रं विदंत्यधीयते वा शैलालिनो नटाः । भिक्षूणामध्ययनं भिक्षुसूत्रं । पाराशरिणो भिक्षवः ।

* कृशाश्वकापिलेयकर्मंदादिन् ॥ ९४ ॥ कृशाश्वकापिलेयाभ्यां नटसूत्रे कर्मंदात् भिक्षुसूत्रे च इन् स्यात् छंदोवच्च । कृशाश्विनः कापि-लेयिनो नटाः । कर्मंदिनो भिक्षवः ।

एकदिक् ॥ ९५ ॥ भांतात् एकदिगि-त्येतस्मिन्नर्थे यथाविहितं त्यो भवति । सुदाम्ना पर्वतेनैकदिक् सौदामनी विद्युत् । हैमवती ।

तस् ॥ ९६ ॥ तेनेतिभासमर्थात् एकदिगर्थे तस् भवति । सुदामतः । हिमवत्तः । पीलुमूलतः ।

यश्चोरसः ॥ ९७ ॥ उरःशब्दाद् यो भवति तस् च । उरसा एकदिग् उरस्यः । उरस्तः ।

उपज्ञाते ॥ ९८ ॥ भांतादुपज्ञातेऽर्थे यथाविहितं त्यो भवति । स्वायंभुवेनोपज्ञातं स्वा-यंभुवीयं आकालिकाचाराध्ययनं । पौज्यपादमेक-

न्द्रव्याकरणं ।

कृते ग्रंथे ॥९९॥ भासमर्थात् कृते ग्रंथे यथाविहितं त्यो भवति । समंतभद्रेण कृतं सामंतभद्रं वार्तिकं । सिद्धसेनीयः स्तवः । ग्रंथ इति किं ? तक्ष्णा कृतः प्रासादः ।

स्वौ ॥ १०० ॥ तेनेति भासमर्थात् कृतेऽर्थे यथाविहितं त्यो भवति स्वुविषये। मक्षिकाभिः कृतं माक्षिकं मधु। क्षौद्रं । वारटैरं । भ्रामरं। गर्मुद्भिः कृतं गार्मुतं ।

कुलालादेर्वुञ् ॥ १०१ ॥ एभ्यो वुञ् स्यात् स्वौ । कुलालेन कृतं कौलालकं । कौमारकं । वारुडकं ।

*तस्य स्वं ॥ १०२ ॥ तस्येति तासमर्थात् स्वमिति संबंधिनि द्वितीयं यथाविहितं त्यो भवति । उपगोरिदं औपगवं । वार्क्षी शाखा।राष्ट्रियं।

हलसीराट्ठण् ॥ १०३ ॥ आभ्यां ठण् स्यात् । हलस्येदं हालिकं । सैरिकं ॥

+ सामिधेन्यणाधाने ॥ १०४ ॥ सामित्शब्दाद् टेन्यण् भवति आधाने । सामिधामाधानो मंत्रः सामिधेन्यः । सामिधेनी ऋक् ।

+आग्नीध्रं गृहे ॥ १०५ ॥ अग्नीधृशब्दाद् गृहेऽर्थेऽण् अस्वाभावश्च निपात्यः । अग्नीधुः ऋत्विग्विशेषस्य गृहं—आग्नीध्रं ।

* रथाद् वोढ्रंगे ॥१०६॥ रथाद् स्वेऽर्थे यस्त्यः स रथस्य वोढरि रथांगे एव च स्यात् । रथस्यायं वोढा रथ्यः । रथ्यं चक्रं । वोढ्रंग इति किं ? रथस्येदं स्थानं ।

* सादेश्च यः ॥ १०७॥ रथात् केवलात् सादेश्च स्वेऽर्थे यो भवति । रथ्यः । द्वयोरथयोर्वोढा द्विरथ्यः । परमरथ्यं ।

पत्राद्वह ॥१०८॥ पत्रं वाहनं तद्वाचिनोऽञ् स्यात् स्वेऽर्थे । आश्वरथं । औष्ट्रकं ।रासभरथं ॥

पत्रात् ॥ १०९ ॥ पत्रवाचिनोऽञ् स्यात् । उष्ट्रस्यायं औष्ट्रः । आश्वः । रासभः।हास्तो रथः।

+ वाह्याध्वोपकरणे ॥११०॥ पत्राद् यस्य उक्तः स वाह्याध्वोपकरणेष्वेव भवेत् । अश्वानामयं वाहः आश्वो रथः । आश्वोऽध्वा । आश्वं पाल्यायनं । वाह्याध्वोपकरण इति किं ? अश्वानामयं घासः ।

+ वहेस्तुरिट् च ॥१११॥ वहेर्योस्तृत्यांतस्य अञ् स्यात् । तस्य तुरिडागमश्च । वोढुः सारथेः स्वं वाहित्रं । सांवहित्रं ।

* द्वंद्वात् वुन् विवाहे ॥ ११२ ॥ द्वंद्वात् विवाहेऽर्थे वुन् स्यात् । कुरवश्च वृष्णयश्च तेषां विवाहः कुरुवृष्णिका । कुरुकाशिका ।

* वैरेऽदेवासुरादिभ्यः ॥ ११३ ॥ द्वंद्वाद् देवसुरादिवर्जितात् वुन् स्यात् वैरे । अहिनकुलस्येदं वैरं—अहिनकुलिका । श्वावराहिका । काकालूकिका । अदेवासुरादिभ्य इति किं ? देवासुरस्य वैरं दैवासुरं । राक्षोसुरं ।

* चरणात् वुञ् ॥११४॥ चरणवाचकाद् वुञ् स्यात् । कठेन प्रोक्तं विदंत्यधीयते वा विद्वांसोऽध्येतारो वा कठाः । तेषां स्वं काठकं । कालापकं । चारकं ।

धर्माम्नाये ॥ ११५ ॥ चरणाद् यो वुञ् विहितः स धर्माम्नाययोरेव स्यात् । कठानां धर्मः, आम्नायो वा काठकः । कालापकः । पैप्पलादकः । धर्माम्नाय इति किं ? कठानां क्षेत्रं ।

छंदोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ॥ ११६ ॥ छंदोगादेश्चरणात् नटाच ञ्यो भवति धर्माम्नाये । छांदोग्यं । औक्थिक्यं । याज्ञिक्यं । बाह्वृच्यं । नाट्यं ।

आथर्वणोऽञ् ॥११७॥ आथर्वणिकशब्दात् नहेकः आणित्यणंतः आथर्वणो निपात्यते चरणे ।

अथर्वणा प्रोक्तं छंदो विदंत्यधीयते वा आथर्वणिकाः । तेषां धर्मः आम्नायो वा आथर्वणः ।

* साकलात् संघांकलक्षणघोषे वा ॥११८॥ साकलशब्दाचरणात् संघे अंके लक्षणे घोषे चाण् वा स्यात् । साकल्येन प्रोक्तं विदंत्यधीयते वा साकलाः । तेषामयं संघोऽको लक्षणं घोषो वा साकलः । साकलकः ।

* गोत्रादञ्याबित्रः॥११९॥ गोत्रवाचकात् अञाद्यंतात् अण् स्यात् स्वेर्थे संघादौ । विदानां संघादिः वैदः । और्वः । गार्गः । वात्सः । दाक्षः । प्लाक्षः । गोत्रादिति किं ? सौतंगमेरिदं सौतंगमीयं ।

* वुञाशिष्यदंडमाणवे ॥ १२० ॥ गोत्रात् शिष्यदंडमाणववर्जितात् वुञ् स्यात् । औपगवस्य स्वं औपगवकं । दाक्षकं । गार्गकं । अशिष्यदंडमाणव इति किं ? काठ्यस्येमे शिष्याः दंडमाणवाः वा काठाः । गौकक्षाः । दाक्षाः ।

रैवतिकादेश्छः ॥ १२१ ॥ रैवतिकादेः गोत्रात् छो भवति । रैवतिकस्येदं रैवतिकीयं । गौरग्रीवीयः । स्वापिशीयः ।

+ कौपिंजलहास्तिपदादण् ॥ १२२ ॥ आभ्यां गोत्रवाचिभ्यां तस्य स्वेऽण् स्यात् । कुपिंजलस्यापत्यं कौपिंजलः । हस्तिपदस्य हास्तिपदः । तयोः स्वं कौपिंजलं । हास्तिपदं ।

तस्य विकारः ॥ १२३ ॥ तस्येति तासमर्थात् विकार इत्येतस्मिन्नर्थे यथाविहितं त्यो भवति । भस्मनो विकारः भास्मनः । तार्णवः मार्तिकः ।

✓ प्राण्योषधिवृक्षेभ्योऽवयवे च ॥ १२४ ॥ प्राण्योषधिवृक्षवाचिभ्योऽवयवे विकारे च यथाविहितं त्यो भवति । कपोतस्यावयवो विकारो वा कापोतं सक्थि मांसं वा । मायूरं । दौर्वं कांडं । मौर्वं भस्म । पैप्पलं । कारीरं । बैल्वं । पालाशं ।

*तालाद् धनुषि ॥ १२५ ॥ तालादण् भवति धनुषि । तालस्य विकारः तालं धनुः । तालमयोऽन्यः ।

*हेमार्थान्माने ॥१२६॥ हेमवाचिनो मानेऽण् स्यात् । जातरूपस्य विकारः जातरूपो निष्कः । हाटकं कार्षापणं।मान इति किं?कांचनमयी यष्टिः।

हेमादिभ्योऽञ् ॥१२७॥ एभ्य अञ् स्यात् । हेम्नः विकारोऽवयवो वा हैमं सिंहासनं । राजतं। औदुंबरः ।

त्रपुजतोः षुक् ॥ १२८ ॥ आभ्यां अञ् स्यात षुक् चागमः।त्रपुणो विकारःत्रापुषं।जातुषं।

* शम्या ष्लुक् ॥ १२९ ॥ शमीशब्दादञ् स्यात् ष्लुक् चागमः।शामीलं भस्म।शामीली स्रुक्

*मयड् वाऽभक्षाछादने ॥ १३० ॥ तांतात् भक्षाछादनवर्जितेऽवयवे विकारे च मयड् वा स्यात् । अश्मनो विकारः-अश्ममयं । आश्मं । सिकतामयं । सैकतं । कपोतमयं । कापोतं । अभक्षाछादन इति किं?मौद्गः सूपः।कार्पासः प्रावारः ।

*एकाच्शरादप्राणिदोः ॥ १३१॥ एकाचः शरादेः अप्राणिवाचिनश्च दोर्मयट् स्यात् विकारावयवयोः । मृन्मयं । वाङ्मयं । शरमयं । दर्भमयं । तृणमयं । अप्राणिदोः—आम्रमयं । शाकमयं । तन्मयं ।

तिलयवादसंज्ञा ॥ १३२॥ आभ्यां मयट् भवत्यसंज्ञा । यवमयं । तिलमयं । तैलं । यावकमन्यत् ।

* व्रीहेः पुरोडाशे ॥ १३३ ॥ व्रीहेर्मयट् स्यात् पुरोडाशे । व्रीहीणां विकारः व्रीहिमयं, पुरोडाशः । व्रैहः ओदनोऽन्यः ।

* गोर्विट्केव॥१३४॥ गोर्मयट् स्यात् विटि शकृत्येव।गोर्विट् गोमयं। गोर्विकारो [illegible] ।

पिष्टात् ॥ १३५ ॥ पिष्टाद्विकारे मयट् स्यात् । पिष्टमयं ।

कः स्तौ ॥ १३६ ॥ पिष्टात् को भवति स्तौ । पिष्टिका ।

* क्रीतवन्मानात् ॥ १३७ ॥ मानवाचकात् क्रीत इव त्यविधिः स्यात् विकारे । यथा—शतेन क्रीतं शत्यं, शतिकं । साहस्रं । तथा—शतस्य विकारः शत्यः । शतिकः । साहस्रः । प्रास्थिकः ।

कौशेण्या ढण् ॥ १३८ ॥ आभ्यां ढण् स्यात् तयोः । कौशेयं सूत्रं । एण्याः विकारोऽवयवो वा ऐणेयं मांसं ।

उष्ट्राद् वुञ् ॥ १३९ ॥ उष्ट्राद् वुञ् स्यात् । औष्ट्रकं मांसं । औष्ट्रिका जंघा ।

× वोमोर्णात् ॥ १४० ॥ आभ्यां वुञ् वा स्यात् तयोः । औमकं भस्म । औमं । उमामयं । और्णकं सूत्रं । और्णं । ऊर्णामयं ।

* पयसो यः ॥ १४१ ॥ पयसो विकारे यः स्यात् । पयस्यं दधि ।

द्रोः ॥ १४२ ॥ द्रुशब्दाद् यो भवति । द्रोर्विकारः द्रव्यं ।

माने वयः ॥ १४३ ॥ द्रोर्माने वयो भवति । द्रुवयं मानं ।

*हैयंगवीनं ॥ १४४ ॥ ह्योगोदोह शब्दात् खञ् निपात्यः प्रकृतेश्च हियंगुभावः । ह्योगोदोहस्य विकारः हैयंगवीनं घृतं ।

*नातोऽफलद्रुवयात् ॥ १४५ ॥ विकारेऽवयवे च ये इमे त्याः उक्ता अतः एतदंतात् फलवाचिद्रुवयवर्जितात् तयोस्त्यो न भवति । कपोतस्य विकारः कापोतं । तस्य विकारोऽवयवो वा वेति मयट् नास्ति । अफलद्रुवयादिति किं? आमलक्या विकारोऽवयवो वा फलं आमलकं । तस्योप्यामलकमयं । द्रौवयं सकलं ।

उप्फले ॥ १४६ ॥ फलवाचे त्यस्योप् भवति तयोः । आमलक्याः विकारोऽवयवो वा फलं आमलकं । बदरं । कुवलं । मयडणोऽपि द्रुप्यशूचीति खीत्यस्योप् ।

* प्लक्षादेरण् ॥ १४७ ॥ एभ्योऽण् स्यात् फले तयोः । प्लाक्षं । नैय्यग्रोधं । आश्वत्थं ।

जंब्वा वोश्च ॥ १४८ ॥ जंबूशब्दाद् विकारेऽवयवे च विवक्षिते उश् वा भवत्यण् च । जंबूः जांबवं । जंबु फलं ।

*द्राक्षाद्योषधिभ्यः ॥ १४९ ॥ द्राक्षादिभ्य औषधिभ्यश्च त्यस्योश् भवति तयोः । द्राक्षा फलं । हरीतकी । नखरजनी । व्रीहिः । यवः । गोधूमः ।

* पुष्पमूले बहुलं ॥ १५० ॥ पुष्पे मूले च बहुलमुश् भवति तयोरर्थयोः । मल्लिका पुष्पं । मालती । जाती । बृहती मूलं । विदारी । अंशुमती । कचिन्न-बिल्वानि मूलानि । कचिदुप् सिंदुवारं पुष्पं । कदंबं पुष्पं ।

कांश्यपारशवौ ॥ १५१ ॥ कंसीय परशव्याभ्यां यञणौ निपात्यौ छययोश्च उप् । कंसार्थं कंसीयं । तस्य विकारः-कांस्यं । परश्वर्थं परशव्यं । तस्य विकारः पारशवं ।

प्राग्याट्ठण् ॥ १५२ ॥ यत्यात् प्राग् ठणधिकृतो वेदितव्यः । तत्रैवोदाहरिष्यामः ।

तेन दीव्यत्खनजयज्जितं ॥ १५३ ॥ तेनेति भासमर्थात् दीव्यत्याद्यर्थेषु ठण् स्यात् । अक्षैर्दीव्यति आक्षिकः । शालाकिकः । अभ्या खनति आभ्रिकः । कौद्दालिकः । अक्षैर्जयति जितो वा आक्षिकः । शालाकिकी ।

संस्कृतं ॥ १५४ ॥ तेनेति भासमर्थात् संस्कृतमित्यस्मिन्नर्थे ठण् स्यात् । दध्ना संस्कृतं दाधिकं । शार्ङ्गवैरिकं । मारीचिकं ।

कुलत्थकोकोऽण् ॥ १५५ ॥ कुलत्थात्

कोकणाण् स्यात् । कुलत्थैः संस्कृतं कौलत्थं । तैत्तिडीकं । दार्दरूकं ।

* तरत् ॥१५६॥ तेनेति भांतात् तरत्यर्थे ठण् स्यात् । उडुपेन तरति औडुपिकः। गौपुच्छिकः। कांडप्लविकः ।

नौद्व्यचष्ठः ॥ १५७॥ नौशब्दात् द्व्यचश्च ठो भवति तरत्यर्थे । नावा तरति नाविकः। घाटिकः । प्लविकः । बाहुकः ।

चरत् ॥१५८॥ तेनेति भांतात् चरत्यर्थे ठण् स्यात् । हस्तिना चरति हास्तिकः । शाकटिकः। दाधिकः ।

पर्पादेष्ठट् ॥ १५९ ॥ एभ्यष्ठट् स्यात् चरत्यर्थे । पर्पिकः । पर्पिकी । अश्विकः । अश्विकी । रथिकः ।

*पदिकः ॥१६०॥ पादशब्दात् ठट् निपात्यः। पद्भावश्च । पादाभ्यां चरति पदिकः

श्वगणाद्वा ॥१६१॥ श्वगणात् ठट् स्यात् वा । श्वगणेन चरति श्वगणिकः । श्वागणिकः ।

वेतनादेर्जीवत् ॥१६२॥ वेतनादेष्ठण् स्यात् जीवत्यर्थे । वेतनेन जीवति वैतनिकः । वाहिकः। भारिकः । दांडिकः ।

* वस्नक्रयविक्रयक्रयविक्रयेभ्यष्ठः॥१६३॥ वस्न क्रयविक्रय क्रय विक्रय इत्येतेभ्यष्ठो भवति जीवति । वस्नं मूल्यं तेन जीवति वस्निकः । क्रयविक्रयिकः। क्रयिकः । विक्रयिकः ।

+ छश्चायुधात् ॥ १६४ ॥ आयुधात् छो भवति ठश्च । आयुधेन जीवति आयुधीयः । आयुधिकः ।

व्रातीनञ् ॥१६५॥ व्रातात् जीवत्यर्थे लञ् निपात्यः । व्रातेन कर्मणा जीवति व्रातीना भार्या।

हरत्युत्संगादेः ॥१६६॥ उत्संगादेर्हरत्यर्थे ठण् स्यात् । उत्संगेन हरति औत्संगिकः । औडुपिकः । पैटकिकः ।

ठट् भस्त्रादेः ॥१६७॥ एभ्यष्ठट् स्यात् । भस्त्रया हरति भस्त्रिकः । भरटिकः । भरणिकः ।

वा विवधवीवधात् ॥ १६८ ॥ आभ्यां हरति ठट् वा स्यात् । विवधिकः । वीवधिकः । वैवधिकः ।

÷ अण् कुटिलिकायाः ॥१६९॥ कुटिलिकाशब्दात् अण् स्यात् । कुटिलिकया हरति कौटिलिकः मृगः, कर्मारः, कर्षकः, परिव्राजकः, चौरो वा ।

निर्वृत्तेऽक्षद्यूतादेः॥१७०॥ निर्वृत्तेऽर्थे अक्षद्यूतादेः ठण् स्यात् ।अक्षद्यूतेन निर्वृत्तं आक्षद्यूतिकं वैरं । जाघाप्रहतिकं ।

भावादिमः ॥ १७१ ॥ भाववाचिन इमो भवति । पाकेन निर्वृत्तं पाकिम ओदनः । सेकिमोऽसिः । कुट्टिमा भूमिः ।

क्त्रः ॥ १७२ ॥ क्त्रित्यंतात् इमो भवति । पक्त्रिमं । कृत्रिमं ।

नित्यं ॥ १७३ ॥ क्त्र्यंतं नित्यं इमपरं प्रयोक्तव्यं । पक्त्रिमं । तेन पक्त्रिमणा निर्वृत्तमिति वाक्यं,पक्त्रिः शोभनं इत्यादिप्रयोगश्च न भवति।

याचितापमित्यात् कण् ॥ १७४ ॥ आभ्यां कण् स्यात् । याचितेन याच्ञया निर्वृत्तं याचितकं । अपमित्येन प्रतिदानेन निर्वृत्तं आपमित्यकं ।

संसृष्टे ॥ १७५ ॥ भांतात् संसृष्टे मिश्रितेऽर्थे ठण् स्यात् । दध्ना संसृष्टं दाधिकं । पैप्पलिकं । मारिचिकं ।

*चूर्णलवणमुद्गादिनाण्॥ १७६॥चूर्णादेरिन् अ अण् इत्येते त्याः भवंति । चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः । लवणः सूपः । मौद्ग ओदनः।

व्यंजनरुपसिक्ते ॥१७७॥ व्यंजनवाचिभ्यः

उपसिक्तेऽर्थे ठण् स्यात् । सूपेन उपसिक्तःओदनः सौपिकः । वार्तिकः सूपः । तैलिकं शाकं ।

ओजःसहोंभसा वर्तते ॥ १७८ ॥ एभ्यो वर्ततेऽर्थे ठण् स्यात् । ओजसा बलेन वर्तते औजसिकः । साहसिकः । आंभसिकः ।

* तत्प्रत्यनोर्लोमकूलेपात् ॥१७९॥ तदितीप्समर्थात् प्रत्यनुभ्यां परात् लोमादेः ठण् स्यात् । प्रातिलोमं वर्तते प्रातिलोमिकः । आनुलोमिकः । प्रातिकूलिकः । आनुकूलिकः । प्रातीपिकः । आन्वीपिकः ।

* परेर्मुखपार्श्वात् ॥१८०॥ परिपूर्वाभ्यामाभ्यां ठण् स्यात् । परिमुखं वर्तते पारिमुखिकः । पारिपार्श्विकः सेवकः ।

प्रयच्छन् गर्ह्ये ॥१८१॥ गर्ह्यादिबंतात् प्रयच्छत्यर्थे ठण् स्यात् । द्विगुणार्थं द्विगुणं एकं प्रयच्छति द्वैगुणिकः । त्रैगुणिकः ।

+ वृधुष वृद्धेः ॥१८२॥ वृद्धिशब्दात्ठण् स्यात् वृधुषभावश्च । वृद्धिं प्रयच्छति वार्द्धुषिकः ।

* कुसीदात्ठट् ॥१८३॥ कुसीदाट्ठट् भवति गर्ह्ये । कुसीदं प्रयच्छति कुसीदिकः । कुसीदिकी ।

दशैकादशाट्ठश्च ॥ १८४ ॥ दशैकादशशब्दात् इबंतात् ठो भवति ठट् च । एकादशार्थो दश दशैकादश । तान् प्रयच्छति दशैकादाशिकः । दशैकादशिका । दशैकादशिकी ।

*रक्षन्नुंछन्॥१८५॥इबंतात् राक्षितात् रक्षति उंछति चार्थे ठण् स्यात् । नगरं रक्षति नागरिकः । सामवायिकः।बदराण्युंछति बादरिकः । नैवारिकः।

पक्षिमत्स्यमृगार्थमीनात् घ्नन् ॥ १८६ ॥ पक्ष्यर्थमत्स्यार्थमृगार्थेभ्यः मीनाच्च हंत्यर्थे ठण् स्यात् । पक्षिणो हंति पाक्षिकः। शाकुनिकः। तैत्तिरिकः। मायूरिकः। मात्स्यिकः। झाषकिः। मार्गिकः । नैयंकुकः । वाराहिकः । शौकरिकः। मैनिकः ।

÷ परिपंथं तिष्ठंश्च ॥ १८७ ॥ परिपंथशब्दात् इप्समर्थात् तिष्ठति हंति चार्थे ठण् स्यात्।परिपंथं तिष्ठति हंति वा पारिपंथिकश्चौरः।

+परिपथं ॥ १८८॥ परिपथशब्दात् इबंतात् तिष्ठत्यर्थे ठण् स्यात् । पारिपथिकः ।

* माथद्युपदव्याक्रंदं धावन् ॥ १८९ ॥ माथद्योः पदव्याक्रंदशब्दाभ्यां च ठण् स्यात् धावत्यर्थे । दंडामाथं धावति दांडामाथिकः । दैर्घामाथिकः।पदवीं धावति पादविकः। आक्रंदिकः।

* पश्चात्यनुपदात् ॥ १९० ॥ पश्चादर्थे अनुपदात् ठण् स्यात् । पदस्य पश्चादनुपदं तद् धावति-आनुपदिकः ।

* परदारादीन्यन् ॥१९१॥ परदारादिभ्यः इबंतेभ्यः एति गच्छत्यर्थे ठण् स्यात् । परदारान् एति पारदारिकः। गौरुदारिकः । गौरुतल्पिकः।

प्रतिपथाट्ठश्च ॥ १९२ ॥ अस्माट्ठो भवति ठण् च।प्रतिपथमेति प्रतिपथिकः।प्रातिपथिकः ।

पदद्युपदललामार्थप्रतिकंठं गृह्णन् ॥१९३॥ पदद्योः पदादेश्च इबंतात् गृह्णात्यर्थे ठण् स्यात् । पूर्वपदं गृह्णाति पौर्वपादिकः । औत्तरपदिकः। ऐश्वरपदिकः । पादिकः। लालामिकः । आर्थिकः। प्रातिकंठिकः ।

* धर्माधर्मौ चरन् ॥ १९४ ॥ आभ्यां चरत्यर्थे ठण् स्यात् । धर्मं चरत्यनुतिष्ठति धार्मिकः । आधर्मिकः ।

* समूहात् समवैति ॥ १९५ ॥ समूहवाचिभ्य इबंतेभ्यः समवैत्यर्थे ठण् स्यात् । समूहं समवैति सामूहिकः । सामाजिकः । सामवायिकः । गौष्ठिकः ।

परिषदं ण्यः ॥ १९६ ॥ परिषच्छब्दात् ण्यो भवति । परिषदं समवैति पारिषद्यः ।

सेनां वा ॥ १९७ ॥ सेनाशब्दादिवंतात् ण्यो वा स्यात् । सेनां समवैति सैन्यः, सैनिकः ।

* सुस्नातादीन् पृच्छन् ॥ १९८ ॥ सुस्नातादेरिवंतात् पृच्छत्यर्थे ठण् स्यात् । सुस्नातं पृच्छति सौस्नातिकः । सौखरात्रिकः ।

+प्रभूतादीनाह ॥ १९९ ॥ एभ्य आहेत्यस्मिन्नर्थे ठण् स्यात् । प्रभूतमाह प्राभूतिकः । पार्यासिकः ।

+माशब्दमित्यादिभ्यः ॥ २०० ॥ एभ्यो वाक्येभ्यष्ठण् स्यात् । वाक्यशब्दपरामर्शार्थमितिकरणं । माशब्दमित्याह माशब्दिकः कार्यशब्दिकः । नैत्यब्दिकः ।

*शब्ददर्दुरललाटकुक्कुटाद् रूढौ ॥२०१॥ एभ्यष्ठण् स्यात् रूढौ । शब्दं करोति शाब्दिकः वैयाकरणः । दर्दुरं वादित्र--दार्दुरिकः । ललाटं पश्यति—लालाटिकः सेवकः । कुक्कुटीं युगमात्रं पश्यति कौक्कुटिको भिक्षुः । रूढाविति किं ? शब्दं करोति काकादिः ।

तस्य धर्म्यं ॥ २०२ ॥ तस्येति ताममर्थात् धर्म्यमित्यस्मिन्नर्थे ठण् स्यात् । शुल्कशालाया धर्म्यं शौल्कशालिकं । आपणिकं । दौवारिकं ।

*नराद्यृतोऽण् ॥ २०३ ॥ नरादेः ऋकारांताच्च अण् भवति । नरस्य धर्म्यं नारं । नारी स्त्री । महिष्याः--माहिषं । प्रालेपिकं । पौरोहितं । नुर्धर्म्यं नारं । मात्रं । पैत्रं । श्वात्रं ।

* वैशस्त्रवैभाजित्रे ॥ २०४ ॥ एतौ शब्दौ कृतणिलौ निपात्यौ । विशसितुर्धर्म्यं वैशस्त्रं । कृत इत्यस्त्येवात्राण् इट्‌लं तु निपात्यते । विभाजयितुः-वैभाजित्रं ।

वक्रयः ॥ २०५ ॥ तांताद् वक्रय इत्यस्मिन्नर्थे ठण् स्यात् । आपणस्य वक्रयः आपणिकः । आकरिकः । शौल्कशालिकः ।

तदस्य पण्यं ॥ २०६ ॥ तदिति वासमर्थात् पण्यात् अस्येति तार्थे ठण् स्यात् यद्वाद् तच्चेत् पण्यं भवति । अपूपाः पण्यमस्य—आपूपिकः । लावणिकः । मौदकिकः ।

÷ किशरादेष्ठट् ॥ २०७ ॥ एभ्यष्ठट् स्यात् । किशरं पण्यमस्य किशरिकः । पर्णिकः । तगरिकः । गुग्गुलिकः ।

शलालोर्वा ॥ २०८ ॥ शलालुशब्दाद् ठट् वा पण्यार्थे । शलालु पण्यमस्य शलालुकः । शालालुकः ।

शिल्पं ॥ २०९ ॥ तदस्य शिल्पमित्यस्मिन्नर्थे ठण् स्यात् । मृदंगवादनं शिल्पमस्य मार्दंगिकः । पाणविकः । वैणिकः । नार्त्तिकः ।

मड्डुकझर्झराद् वाऽण् ॥ २१० ॥ आभ्यां वाण् स्यात् शिल्पे । माड्डुकः । माड्डुकिकः । झार्झरः । झार्झरिकः ।

प्रहरणं ॥ २११ ॥ तदस्य प्रहरणमित्यस्मिन्नर्थे ठण् स्यात् । असिः प्रहरणमस्य आसिकः । त्सारुकः । चाक्रिकः । धानुष्कः ।

+ परश्वधाद्वाण् ॥२१२॥ अस्मादण् स्यात् प्रहरणे वा । परश्वधः प्रहरणमस्य पारश्वधः । पारश्वधिकः ।

शक्तियष्टेष्टीकण् ॥ २१३ ॥ आभ्यां टीकण् स्यात् । शक्तिः प्रहरणमस्य शाक्तीकः । याष्टीकः । याष्टीकी ।

*वेष्ट्यादिभ्यः ॥ २१४ ॥ एभ्यो वा टीकण् स्यात् । इष्टिः प्रहरणमस्य ऐष्टीकः । ऐष्टिकः । आंमसिकः । आंमसीकः । दांडिकः । दांडीकः ।

नास्तिकास्तिकदैष्टिकाः ॥ २१५ ॥ नास्तिकादयः ठणंता निपात्यंते । परलोकादिकं नास्तीति मतिरस्य नास्तिकः । तदस्तीति मतिरस्य-आस्तिकः । दिष्टं दैवं तत्प्रमाणमिति मति-

रस्य दैष्टिकः ।

शीलं ॥२१६॥ तदस्मिन् शीलमित्यस्मिन्नर्थे ठण् स्यात् । अपूपभक्षणं शीलमस्य आपूपिकः। शाष्कुलिकः । तांबूलिकः ।

छत्रादेरञ् ॥ २१७ ॥ एभ्य अञ् स्यात् छत्रं शीलमस्य छात्रः । शैक्षः । भैक्षः ।

× तूष्णीकः ॥ २१८॥ तूष्णीमशब्दात् कत्वो मस्लं निपात्यं । तूष्णीम्भावः शीलमस्य तूष्णीकः।

*वृत्तोऽपपाठोऽनुयोगे ॥ २१९ ॥ तदिति वासमर्थात् अस्येति तार्थे ठण् स्यात् । यद् तद् वासमर्थं कर्म चेत् तदध्ययनविषयवृत्तं भवति । एकमन्यत् कर्म स्खलितरूपं अध्ययने वृत्तमस्य एक-मन्यदस्यापपाठरूपं स्खलितं परीक्षायां अनुयोगे वृत्तं-ऐकान्यिकः । द्वैयन्यिकः । त्रैयन्यिकः ।

बहुजादेष्ठः ॥ २२० ॥ बहुजादेर्मृदः तदस्य वृत्तोपपाठोनुयोग इत्यस्मिन् विषये ठो भवति । एकादशान्यन्यान्यस्यापपाठरूपाण्यनुयोगे वृत्तानि-एकादशान्यिकः । द्वादशान्यिकः ।

भक्ष्योऽस्मै हितं ॥ २२१ ॥ वांतादस्मै इत्यवर्थे ठण् स्यात् हितं भक्ष्यश्चेत्।अपूपाः भक्ष्याः हितमस्मै आपूपिकः। शाष्कुलिकः। लाड्डुकिकः।

*नियुक्तं दीयते ॥ २२२ ॥ तदस्मै नियुक्तं दीयत इत्यस्मिन्नर्थे ठण् स्यात् । अग्रे भोजनमस्मै नियुक्तं दीयते आग्रभोजनिकः । शाष्कुलिकः मौदकिकः ।

* भक्तौदनाद्वाण् ठट् ॥ २२३ ॥ आभ्यां अण् ठटौ यथासंख्यं वा स्तः। भक्तमस्मै नियुक्तं दीयते भाक्तः। भाक्तिकः। औदनिकः, औदनिकः।

*श्राणामांसौदनाट्टठः ॥ २२४ ॥ आभ्यां ठो वा भवति ।श्राणास्मै नियुक्तं दीयते श्राणिकः। श्राणिका । श्राणिकी। मांसौदनिकः। मांसौदनिका। मांसौदनिकी ।

+ नवयज्ञादयोऽस्मिन् वर्तते ॥ २२५ ॥ नवयज्ञादिभ्य अस्मिन्नितीवर्थे ठण् स्यात् वर्तते चेत् । नव यज्ञा अस्मिन् वर्तते नावयज्ञिकः । पाकयज्ञिकः ।

तत्र नियुक्तः ॥ २२६ ॥ तत्रेतीप्समर्थात् नियुक्त इत्यस्मिन्नर्थे ठण् स्यात्। शुल्कशालायां नियुक्तः शौल्कशालिकः । आपणिकः । दौवारिकः । आक्षपटालिकः ।

ठोऽगारांतात् ॥ २२७ ॥ अगारांताट्ठो भवति । कोष्ठागारे नियुक्तः कोष्ठागारिकः । देवागारिकः । भांडागारिकः ।

अध्यायिन्यदेशकालात् ॥ २२८ ॥ ईबंतादेदेशकालवचिनः ठण् स्यात् अध्यायिन्यर्थे । अशुचावध्यायी आशुचिकः । सांध्यावलिकः । आनध्यायिकः । अदेशकालादिति किं ? चैत्यालयाध्यायी । पूर्वाह्णेऽध्यायी ।

*कठिनांतप्रस्तारसंस्थानतद्व्यां व्यवहरन्॥२२९ कठिनांतात् प्रस्तारसंस्थानाभ्यां प्रस्तारसंस्थानयोश्च व्यवहरत्यर्थे ठण् स्यात्।वंशकठिने व्यवहरति वांशकठिनिकः । वार्द्धकठिनिकः । प्रास्तारिकः । सांस्थानिकः।तद्व्यु-कांसप्रस्तारिकः। गौसंस्थानिकः

*निकटादिषु वसन् ॥ २३० ॥ एभ्यो वसत्यर्थे ठण् स्यात् । निकटे वसति नैकटिकः । वाक्षमूलिकः । आवसथिकः ।

*सतीर्थ्यः ॥ २३१ ॥ समानतीर्थाद् यो निपात्यः । समानस्य च सभावः । समाने तीर्थे वसति सतीर्थ्यः ।

तद्वहन् रथप्रासंगाद् यः ॥२३२॥तदितीप्समर्थाभ्यां आभ्यां वहत्यर्थे यो भवति । रथं वहति रथ्यः । प्रासंग्यः ।

धुरो ढञ् च ॥ २३३ ॥ धुरो ढञ् भवति यश्च । धुरं वहति धौरेयः । धुर्यः ।

*सर्वोत्तरदक्षिणवामादेः खः॥ २३४ ॥ सर्वाद्यादेः धुरः खो भवति । सर्वां धूः—सर्वधुरा तां वहति सर्वधुरीणः । उत्तरधुरीणः । दक्षिणधुरीणः । वामधुरीणः ।

*उप् चैकादेः ॥ २३५ ॥ एकादेः धुरः खो भवति तस्य उप् च वहत्यर्थे. एकधुरीणः।एकधुरः।

×शकटादण् ॥२३६॥ अस्मादण्। शाकटो गौः।

हलसीराट्ठण् ॥२३७॥ आभ्यां ठण् स्यात् वहति । हालिकः । सैरिकः ।

विध्यत्यकरणेन ॥ २३८ ॥ इवंताद्र विध्यत्यर्थे यो भवति न चेत् करणेन विध्यंति। पादौ विध्यंति पद्याः शर्कराः । उरव्याः कंटकाः अकरणेनेति किं ? पादं विध्यति धनुषा ।

* धनगुणात् लब्धा ॥ २३९ ॥ धनगुणाभ्यां यो भवति लब्धरि । धनं लब्धा धन्यः । गुण्यः ।

*णोऽन्नात् ॥ २४० ॥ अन्नात् णो भवति । अन्नं लब्धा आन्नः ।

पदमस्मिन् दृश्यं ॥ २४१ ॥ पदात् वांतात् अस्मिन्निताबर्थे यो भवति दृश्यं चेत् । पदमस्मिन् दृश्यं पद्यः । कर्दमः ।

* जन्यवश्यधर्म्यधेनुष्यामूल्यहृद्यगार्हपत्याः ॥ २४२ ॥ जन्यादयो यत्यांता निपात्यंते । जनीं वधूं वहंति जन्याः परिणेतृसहायाः । जनस्य जन्या वा जन्यः । वशं गतः वश्यः । धर्मेण प्राप्तं धर्मादनपेतं वा धर्म्यं । प्रकृष्टा धेनुः धेनुष्या । ये षुक् निपात्यः । मूलमेषामुत्पाद्यं मूल्या मुद्गाः । मूलेनानम्यं मूल्यं सुवर्णादि । हृदयस्य प्रियः बंधनं वा हृद्यः ऋषिः। गृहपतिना संयुक्तः गार्हपत्योग्निः

*नौविषेण तार्यवध्ये ॥२४३॥ नौविषाभ्यां तार्ये वध्ये च यो भवति । नावा तार्यं नाव्यमुदकं । विषेण वध्यः विष्यः ।

पथ्यर्थन्यायादनपेते ॥ २४४ ॥ पथ्यादेः कांतात् यो भवति अनपेतेऽर्थे । पथोऽनपेतं पथ्यं । अर्थ्यं । न्याय्यं ।

छंदसा निर्मिते ॥ २४५ ॥ छंदसो भांतात् यो भवति निर्मितेऽर्थे। छंदसा निर्मितः छंदस्यः॥

उरसाऽण् च ॥२४६ ॥ उरसः भांतात् निर्मितेऽर्थेऽण् स्यात् यश्च । उरसा निर्मितः औरसः। उरस्यः पुत्रः ।

*मदस्य करणे ॥ २४७ ॥ मदात् तांतात् करणेऽर्थे यो भवति । मदस्य करणं मद्यं ।

*कौलीनो जल्पे ॥ २४८ ॥ कुलात् खञ् निपात्यंते जल्पेऽर्थे । कुलस्य जल्पः कौलीनः ।

तत्र साधुः ॥ २४९ ॥ तत्रेतीप्समर्थात् साधुरित्यभिधार्थे यो भवति । सामनि साधुः सामन्यः । कर्मण्यः।शरण्यः।अयान् जिनः।सभ्यः ।

भक्ताण्णः ॥ २५० ॥ भक्ताण्णो भवति भक्ते साधुः भाक्तः शालिः ।

परिषदो ण्यश्च ॥ २५१ ॥ परिषदो ण्यो भवति णश्च । परिषदि साधुःपारिषद्यः।पारिषदः।

*सर्वजनात् खञ् च ॥ १५२ ॥ अस्मात् खञ् भवति ण्यश्च साधौ॥सार्वजनीनः सार्वजन्यः।

*प्रतिजनादेः ॥ २५३ ॥ एभ्यः साधौ खञ् स्यात् । प्रातिजनीनः । ऐदंयुगीनः । सांयुगीनः । पारकुलीनः ।

कथादेष्ठण् ॥ २५४ ॥ कथादिभ्यः साधौ ठण् भवति । काथिकः । सांकथिकः । वैकथिकः- वैतथिकः । वैतंडिकः । गौडिकः ।

पथ्यतिथिवसतिस्वपतेर्ढञ् ॥ २५५ ॥ एभ्यः साधौ ढञ् स्यात् । पाथेयः आतिथेयः । वासतेयः । स्वापतेयं ।

*देवतांताद्र तादर्थ्ये ॥२५६॥ देवतांताद् यो भवति तादर्थ्ये । अग्निदेवतायै इदं अग्निदेवत्यं । पितृदेवत्यं ।

*पाद्यार्घ्ये ॥ २५७ ॥ एतौ यत्यांतौ निपात्यौ । पादार्थमुदकं पाद्यं । ये न पद्भावः । अर्घ्यं रत्नं ।

*ढ्योऽतिथेः ॥ २५८ ॥ अतिथेर्ण्यः स्यात् । अतिथ्यर्थं आतिथ्यं ।

*हलस्य सादेश्च कर्षे ॥ २५९ ॥ हलात् केवलात् सादेश्च कर्षेऽर्थे यःस्यात्।हलकर्षःहल्यः। द्विहल्यः । त्रिहल्यः ।

*सीतया संमिते ॥ २६० ॥ सीताशब्दात् केवलात् सादेश्च संमितेऽर्थे यो भवति।सीतया संमितं सीत्यं क्षेत्रं । परमसीत्यं । द्विसीत्यं ।

*वयस्तुलाभ्यां ॥ २६१ ॥ आभ्यां संमिते यो भवति । वयसा संमितः वयस्यः । तुल्यः ।

*सोदर्यसमानोदर्यौ ॥ २६२ ॥ एतौ समानोदरशब्दात् जातेऽर्थे यांतौ निपात्यौ समानस्य च वा सभावः।समानोदरे जातःसोदर्यः,समानोदर्यः।

इति शब्दार्णवापरनाम्नि जैनेंद्रव्याकरणे
शब्दार्णवचंद्रिकायां लघुवृत्तौ
तृतीयाध्यायस्य
तृतीयः पादः

## चतुर्थः पादः ।

प्राक् ढणञ्छः ॥ १ ॥ अर्हाद्वृणः प्राक् वेऽर्थाः तेषु छोऽधिकृतो वेदितव्यः । वक्ष्यति-तस्मै हित इति वत्सीयः ।

* हविरन्नभेदापूपादेर्यो वा ॥ २ ॥ हविर्भेदात् अन्नभेदाद् अपूपादेश्च यो वा स्यात् । आमिक्षायै इदं आमिक्ष्यं । आमिक्षीयं दधि । ओदन्या ओदनीयास्तंडुलाः । अपूप्यं, अपूपीयाः गोधूमाः । तंडुल्यं तंडुलीयाः शालयः ।

* युगादेर्यः ॥३॥ युगादेः उक्तेऽर्थे यो भवति । युगार्थं युग्यं । हविष्यं । बर्हिष्यं । ओःशंकव्यं दारु । पिचव्यः कार्पासः । कमंडलव्या मृत्तिका: ।

कंबलात् खौ ॥ ४ ॥ कंबलात् यो भवति खौ।कंबलोऽस्यास्तीति कंबल्यं ऊर्णाशतं । खाविति किं ? कंबलीया ऊर्णा ।

×नाभ्यूधसोर्नभ्ञौ ॥ ५ ॥ आभ्यां यो भवति। नभ् न् इत्येतावादेशौ च । नाभये हितं नभ्यमंजनं । ऊधसे हितं-ऊधन्यं ।

× शुन्यशून्यौ ॥६॥ एतौ निपात्यौ।श्वन्शब्दाद् यः शुन् शून् चादेशौ । श्वभ्यो हितं शुन्यं, शून्यं।

तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः ॥७॥ तस्मै इत्यप्समर्थात् राजादिवर्जितात् हित इत्यस्मिन्नर्थे यथाविहितं त्यो भवति । वत्सेभ्यो हितः वत्सीयः । करभीयः । पुरोडाश्याः पुरोडाशीयास्तंडुलाः । अराजादेरिति किं ? राज्ञे हितः । आचार्याय हितः । ब्राह्मणाय हितः । वृष्णे हितः ।

प्राण्यंगरथखलयवमाषवृषब्रह्मतिलायः ॥८॥ प्राण्यंगात् रथादेश्च यो भवति । दंतेभ्यो हितं दंत्यं । कर्ण्यं । चक्षुष्यं । रथ्यं । खल्यं । यव्यं । माष्यं । वृष्यं । ब्राह्मण्यं । तिल्यं ।

* ध्योऽजावेः ॥ ९ ॥ अजाविभ्यां ध्यो भवति । अजाभ्यो हितं-अजथ्यं । अविथ्यं ।

माणवचरकात् खञ् ॥ १० ॥ आभ्यां तस्मै हिते खञ् स्यात् । माणवीनः । चारकीणः ।

भोगद्रव्यात्मनभ्यां खः ॥ ११ ॥ भोगाणोरात्मनश्च खो भवति । मातृभोगाय हितः-मातृभोगीणः । राजभोगीणः । आत्मनीनः ।

पंचसर्वविश्वजनाद्यात् ॥ १२ ॥ पंचादिपूर्वाज्जनात् वसात् खो भवति ॥ पंचजनेभ्यो हितः पंचजनीनः । सर्वजनीनो वासुपूज्यनाथः ।

त्यंचजनीनः । वादिति किं ? पंचानां जनः पंचजनः । तस्मै-पंचजनाय: हितः पंचजनीयः ।

*महत्सर्वाट्ठण् ॥ १३ ॥ आभ्यां परात् जनाद् वसात् तस्मै हितेऽर्थे ठण् स्यात् । महते जनाय हितः माहाजनिकः । सार्वजनिकः ।

सर्वाण्णो वा ॥ १४ ॥ सर्वात् णो वा स्यात् । सर्वस्मै हितः सार्वः । सर्वीयः ।

*तदर्थे विवर्तिनि ॥ १५ ॥ अवंतात् तदर्थेऽवंतार्थे विवर्तिनि तदर्थपरिणामिनि वाच्ये छादयः स्युः । अंगारेभ्यः काष्ठानि-अंगारीयाणि । प्रासादीयं दारु । प्राकारीयाः इष्टकाः । पिचव्यः कार्पासः । तदर्थे इति किं ? मूत्राय कल्पते यवागूः । विवर्तिनीति किं ? उदकाय कूपः ।

चर्मण्यञ् ॥ १६ ॥ तदर्थे विवर्तिनि चर्मण्यभिधेये अञ् स्यात् । वध्राय इदं वाध्रं । वारत्रं चर्म ।

ऋषभोपानहाञ्ञ्यः ॥ १७ ॥ आभ्यां ञ्यो भवति । ऋषभाय वत्सः आर्षभ्यः । औपानह्यं चर्म ।

*छदिर्बलेर्ढञ् ॥ १८ ॥ आभ्यां ढञ् स्यात् । छदिषे तृणं छादिषेयं । बालेयाः तंडुलाः ।

परिखास्य स्यात् ॥ १९ ॥ परिखाशब्दाद् वांतात् ढञ् स्यात् अस्येति तार्थे या परिखा सा चेद् स्यादिति योग्यतया संभाव्यते । परिखा आसां स्यात् पारिखेयाः इष्टकाः ।

* अस्मिंश्च ॥ २० ॥ परिखायाः अस्मिन्निती वर्थे ढञ् स्यात् । परिखाऽस्मिन् स्यात् पारिखेयो देशः ।

*तद् ॥ २१ ॥ तदिति वासमर्थाद् अस्यार्थे विवर्तिन्यस्मिंश्चार्थे यथाविहितं त्यो भवति । प्रासादोऽस्य स्यात् प्रासादीयं दारुःपरिशव्यमयः । प्रासादोऽस्मिन् स्यात् प्रासादीयो देशः ।

आर्हाट्ठण् ॥ २२ ॥ वदित ऊर्ध्वमनुक्रमिष्यामः तदर्हतीत्यार्हशब्दात् तत्र ठणधिकृतो ज्ञेयः । वक्ष्यति—मूल्यैः क्रीतं,,- सास्तिकं। वास्त्रिकं ।

*स्यादेश्चार्हादलुपः ॥ २३ ॥ इपोर्हे वदिति आर्हात् यो यतस्त्यो विधास्यते स ततः केवलात् तदंताच्च ष्यिसंज्ञादेर्भवतीति ज्ञेयं अनुवंतात् । वक्ष्यति-चंद्रायणं चरति चांद्रायणिकः । द्वैचांद्रायणिकः । ष्यादेरिति किं ? महापारायणमधीते । अनुप इति किं ? द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पं।द्विशूर्पेण क्रीतः द्विशौर्पिकः ।

शतादस्वार्थेऽसे ठयौ ॥ २४ ॥ शतात् ठयौ स्तः अस्वार्थेऽसे । शतेन क्रीतं शतिकं, शत्यं । अस्वार्थ इति किं ? शतं मानमस्य शतकं । स्तांत्रे।अस इति।किं ? द्व्यधिकं शतं द्वौ च शतं च द्विशतं । तेन क्रीतं—द्विशतकं। त्रिशतकं ।

त्रिंशद्विंशतेड्वुरसौ ॥ २५ ॥ आभ्यां ड्वुर् भवत्यसौ । त्रिंशता क्रीतं त्रिंशकं।विंशकं । असाविति किं?त्रिंशन्मानमस्य त्रिंशत्कं। विंशतिकं

*स्यश्च कोऽशतः ॥ २६ ॥ शत् ति इत्येतदंतवर्जितात् ष्यिसंज्ञात् ताभ्यां च को भवति। द्वाभ्यां क्रीतं द्विकं । चतुष्कं । बहुकं। त्रिंशत्कं। विंशतिकं । अशत्तेरिति किं ? चात्वारिंशत्कः । षाष्टिकः ।

वतोरिट् ॥ २७ ॥ वत्वंताद् स्यः कस्य इट् वा स्यात् । यावता क्रीतं यावतिकं।यावत्कं । तावतिकं । तावत्कं ।

*कंसार्धाट्टठ्ट् ॥२८॥ आभ्यां ठट् स्यात् । कंसेन क्रीतं कांसिकं। आर्धिकं । आर्धिकी ।

*अर्धात् पलकंसकर्षात् ॥ २९ ॥ अर्धपूर्वात् पलादेः ठट् स्यात्। अर्धपलेन क्रीतं अर्धपलिकं । अर्धकंसिकं । अर्धकर्षिकं ।

+कार्षापणाड्ढा वास्य प्रतिश्च ॥ ३० ॥ अस्माड्ड्ट् स्यात् । अस्य च प्रतिरादेशो वा । कार्षापणिकः । प्रतिकः । प्रतिकी ।

*शतमानसहस्रादण् ॥ ३१ ॥ आभ्यामण् स्यात् । शातमानं । साहस्रं ।

शूर्पाद्वाऽञ् ॥ ३२ ॥ शूर्पादण् वा स्यात् । शौर्पं । शौर्पिकं ।

*वसनाट् ॥३३॥ अस्मादण् स्यात्।वासनं ।

*विंशतिकात् ॥ ३४ ॥ अस्मादण् स्यात् । वैंशतिकं ।

रात् खः ॥ ३५ ॥ विंशतिकांतात् रसात् खो भवति।द्वाभ्यां विंशतिकाभ्यां क्रीतं द्विविंशतिकीनं। त्रिविंशतिकीनं ।

×अनुपोऽखावुप् ॥ ३६ ॥ अनुबंतात् रात् यस्त्यः तस्योप् भवति अखौ । द्वाभ्यां कंसाभ्यां क्रीतं द्विकंसं । त्रिकंसं । अध्यर्द्धकंसं । द्विशूर्पं। त्रिशूर्पं । अनुप इति किं ? द्विशूर्पेण क्रीतं द्विशौर्पिकं । अखाविति किं ? पंच लोहिन्यः परिमाणमस्य पांचलोहितिकः । पांचकपलिकं ।

*वाऽञः ॥ ३७ ॥ अनुपो रात् अञो वोप् भवति।द्विशतमानं,द्विशातमानं।द्विसहस्रं द्विसाहस्रं।

* कार्षापणसुवर्णात् ॥ ३८ ॥ कार्षापण सुवर्णात् द्व्यंतात् रात् त्यस्य वोब्भवति । द्विकार्षापणं । द्विकार्षापणिकं । द्विसुवर्णं । द्विसौवर्णिकं । अध्यर्द्धसुवर्णं । अध्यर्द्धसौवर्णिकं ।

द्वित्रिबहोर्निष्कविस्तात् ॥ ३९ ॥ द्व्यादेः पराभ्यां निष्कविस्ताभ्यां वा त्यस्योब्भवति । द्विनिष्कं । द्विनैष्किकं । त्रिनिष्कं । त्रिनैष्किकं । बहुनिष्कं । बहुनैष्किकं । द्विविस्तं । द्विवैस्तिकं। त्रिविस्तं । त्रिवैस्तिकं । बहुविस्तं । बहुवैस्तिकं।

खारीकाकिणीभ्यः कप् ॥४०॥ खारीकाकिणीशब्दांतात् रात् केवलाभ्यां चाभ्यां कप् स्यात् । द्विखारीकं । द्विकाकिणीकं । अध्यर्द्धखारीकं । अध्यर्द्धकाकिणीकं । खारीकं।काकिणीकं ।

पणपादमाषाद् यः ॥ ४१ ॥ पणाद्यंताद् रसात् यो भवति आ अर्हेर्थे । द्विपण्यं। त्रिपण्यं । अध्यर्द्धपण्यं । द्विपाद्यं । द्विमाष्यं ।

शताद्वा ॥ ४२ ॥ शतांताद् रात् यो भवति वा । द्विशत्यं । द्विशतं ।

शाणात् ॥ ४३ ॥ शाणांताद्वा यो भवति । त्रिशाण्यं । त्रिशाणं ।

द्वित्रेरण् च ॥ ४४ ॥ आभ्यां परात् शाणाद् अण् स्यात् यश्च वा । द्वैशाणं । द्विशाण्यं । द्विशाणं । त्रैशाणं । त्रिशाण्यं । त्रिशाणं ।

*मूल्यैः क्रीतं ॥ ४५ ॥ मूल्यवाचिनो निर्देशात् एव भांताद् क्रीतमित्यस्मिन्नर्थे यथाविहितं त्यो भवति । अशीत्या क्रीतमाशीतिकं । शतिकं शत्यं । द्विकं।त्रिकं।मूल्यैरिति किं?पुत्रेण क्रीतं ।

तस्य वापः ॥ ४६ ॥ तस्येति तासमर्थात् वाप इत्यस्मिन्नर्थे ठणादयःस्युः । प्रस्थस्य वापः प्रास्थिकः । खारीकः ।

+वातपित्तश्लेष्मसंनिपाताच्छमनकोपने॥४७ तांतात् वातादेः ठण् स्यात् शमने कोपने चार्थे॥ वातस्य शमनं कोपनं वा वातिकं । पैत्तिकं । श्लैष्मिकं । सांनिपातिकं ।

*हेतुःसंयोगोत्पातौ ॥ ४८ ॥ तांतात् हेतुरित्यस्मिन्नर्थे ठणादयः स्युः । यो हेतुः स चेत् संयोग उत्पातो वा स्यात् । शतस्य हेतुरीश्वरेण संयोगः-शतिकः,शत्यःसाहस्रः।सोमग्रहणस्य हेतुरुत्पातःसोमग्रहणिको भूमिकंपः।सांग्रामिकं इंद्रधनुः।

÷द्यचब्रह्मवर्चसाद् योऽस्यिपरिमाणाश्वादेः ॥ ४९ ॥ स्यिसंज्ञाविवर्जिताद् द्यचः ब्रह्मवर्चसाच्च यो भवति । धनस्य हेतुः संयोगः उत्पातो वा धन्यः । यशस्यः । आयुष्यं । ब्रह्मवर्चस्यं ।

अस्वादेरिति किं ? सप्तकः । नवकः । प्रास्थिकः । आश्विकः । आश्मिकः ।

पुत्राच्छश्च ॥ ५० ॥ पुत्राच्छो भवति यश्च हेतौ संयोगोत्पातलक्षणे । पुत्रीयः । पुत्र्यः ।

सर्वभूमिपृथिव्या अण् ॥ ५१ ॥ आभ्यामण् स्यात् । सर्वभूमेर्हेतुः संयोगादिः सार्वभौमः । पार्थिवः ।

*ईशः ॥ ५२ ॥ ताभ्यामीश ईश्वर इत्यस्मिन्नर्थे अण् स्यात् । सर्वभूमेरीश्वरः सार्वभौमः । पार्थिवः ।

*ज्ञातः ॥ ५३ ॥ ताभ्यां ज्ञात इत्यस्मिन्नर्थे अण् स्यात् । सर्वभूमेर्ज्ञातो विदितः सार्वभौमः । पार्थिवः ।

लोकात् ॥ ५४ ॥ लोकात् ठण् स्यात् । लोकस्य ज्ञातः लौकिकः ।

सर्वात् ॥ ५५ ॥ सर्वपूर्वात् लोकात् ठण् स्यात् । सर्वलोकस्य ज्ञातः सार्वलौकिकः ।

*तदस्मै वा वृद्ध्यायलाभशुल्कोपदा देयाः ॥ ५६ ॥ तदिति वासमर्थात् अत्रेत्यर्थे अस्मा इत्यर्थे वा यथाविहितं त्यो वा भवति । यत्तत् तच्चेद् वृद्ध्यादयो देयाः स्युः । पंचास्मिन् वृद्धिः आयः लाभः शुल्कं उपदा वा दीयते पंचकः । सप्तकः । प्रास्थिकः । पंचास्मै वृद्ध्यादयो देयाः पंचको देवदत्तः । शतिकः । शत्यः ।

+ ढढर्द्धात्ठः ॥ ५७ ॥ ढडंतादर्द्धाच्च ठो भवति तदत्रेत्यादौ । पंचमिकः । षष्ठिकः । आर्द्धिकः ।

भागात् यश्च ॥ ५८ ॥ भागात् यो भवति ठश्च तदत्रेत्यादौ । भाग्यः । भागिकः ।

तद्धरति वहत्यावहति वंशादेर्भारात् ॥ ५९ ॥ वंशादिभ्यः परात् भारात् तदिति इबंतात् हरत्याद्यर्थेषु ठण् भवति । वंशभारं हरति वहति आवहति वा वांशभारिकः । वात्सभारिकः । कौटजभारिकः । वंशादेरिति किं ? भारं वहति ।

वस्नद्रव्यात्ठकं ॥ ६० ॥ आभ्यां तद्धरत्यादौ ठकौ त्यौ स्तः । वस्निकः । द्रव्यकः ।

*पचत्यण् च द्रोणात् ॥ ६१ ॥ द्रोणात् पचत्यर्थे अण् स्यात् ठण् च । द्रोणं पचति द्रौणिकः । द्रौणः ।

*संभवत्यवहरति च ॥ ६२ ॥ इबंतात् संभवति अवहरति पचति चार्थे यथाविहितं त्यो भवति । प्रस्थं संभवति अवहरति नाशं करोति पचति वा प्रास्थिकः । कौडविकः । खारीकः ।

वाऽऽढकाऽऽचितपात्रात् खः ॥ ६३ ॥ आढकादेः तत्संभवत्यादौ खो वा स्यात् । आढकीनः । आढकिकः । आचितीनः । आचितिकः । पात्रीणः । पात्रिकः । पात्रीणा । पात्रिकी ।

गात्ठट् च ॥ ६४ ॥ आढकाद्यंतात् गात् ठट् भवति खश्च वा तत्संभवत्यादौ । द्व्याढकिकी । द्व्याढकीना । द्व्याढकी । द्व्याचितिकी । द्व्याचितीना । द्व्याचिता । द्विपात्रिकी । द्विपात्रीणा । द्विपात्री ।

*कुलिजात्लुग्खौ च ॥ ६५ ॥ कुलिजांतात् गात् तत्संभवत्यादौ लुप्खौ स्तः ठट् च वा । द्विकुलिजः । द्विकुलिजिकः । द्विकुलिजीनः । द्वैकुलिजिकः ।

तदस्यांशवस्नभृतिः ॥ ६६ ॥ तदिति वासमर्थात् अस्येति तदर्थे ठणादयः स्युः । यत्तत् तच्चेत् अंशादयो भवंति । पंचास्यांशो वस्नं भृतिर्वा—पंचकः । शत्यः । साहस्रः । प्रास्थिकः ।

*मानं ॥ ६७ ॥ वांतात्तदर्थे ठणादयः स्युः यद् वांतं तच्चेत् मानं स्यात् । प्रस्थो मानमस्य प्रास्थिको राशिः । कौडविकः । खारीशतिकः ।

*स्ये: संघसूत्रार्थातौ ॥ ६८ ॥ म्यिसंज्ञकात् मानवाचकात् वांतात् तार्थे टणादय: स्यु: संघादयश्चेत् भवंति । पंच परिमाणमस्य संघस्य सूत्रस्य अधीतेर्वा—पंचक: । अष्टक: । शनिक: ।

स्वौ ॥ ६९ ॥ म्यिसंज्ञकात् स्वार्थे स्वौ यथाविहितं त्यो भवति । पंचैव पंचका: शकुनय: । सप्तका: ब्रह्मवृक्षा: ।

*त्रैंशचात्वारिंशं ॥ ७० ॥ त्रिंशच्चत्वारिंशद्भ्यां तदस्य मानं स्वावित्यस्मिन् विषये डण् निपात्य: । त्रिंशदध्याया: परिमाणमेषां त्रैंशानि, चात्वारिंशानि कानिचित् ब्रह्मणानि ।

पंचद्दशद् वंगे वा ॥ ७१ ॥ पंचद्दशतौ वर्गे डतत्यांतौ निपात्यौ वा । पंच परिमाणमस्य वर्गस्य पंचद् पंचको वा दशद् दशको वा वर्ग: ।

+डट्स्तोमे ॥ ७२ ॥ म्यिसंज्ञकाद् स्तोमेऽभिधेये डट् स्यात् । पंचदश मंत्रा: परिमाणमस्य स्तोमस्य पंचदश: स्तोम:।विंश: ।

पंक्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतं ॥ ७३ ॥ पंक्त्यादयो निपात्यंते मानाविषये । पंच पादा: परिमाणमस्य वर्गस्य पंक्ति: । पंचनष्टिस्त्वं तिश्च त्य: । द्वौ दशतौ परिमाणमस्य विंशति: । द्वुर्विन्भाव:। शतिश्च त्य: । दशतोर्वा द्वयोर्विन्भाव: शतिश्च त्य: । त्रिंशत्चत्वारिंशत् पंचाशदिति त्रिचतु:-पंचानां इमारिमश्चातादेशा: शच त्य: । त्रयो दशत: परिमाणमस्य त्रिंशत् । चत्वारो दशत:-चत्वारिंशत् । पंच दशत: पंचाशत् । षट् दशत: परिमाणमस्य षष्टि: । षषस्तिरपदत्वं च । सप्त दशत: सप्तति: । सप्तनस्ति: । अष्टौ दशत: अशीति: अष्टनोऽशीभावास्तिश्च त्य: । नव दशत: नवति: । नवनस्ति: । दश दशत: परिमाणमस्य शतं । दशानां शभाव: तश्च त्य: ।

७४ तदर्हति ॥ ७४ ॥ तदितीप्समर्थात् अर्हतीत्यस्मिन्नर्थे यथाविहितं त्यो भवति । श्वेतच्छत्रमर्हति श्वैतच्छत्रिक: । आभिषेचनिक: । वास्त्रिक: ।

प्राग्वतष्ठञ् ॥ ७५ ॥ वत: प्राक् येऽर्था: तेषु ठञधिकृतो वेदितव्य: । वक्ष्यति—तुरायणेत्यादि—तौरायणिक: ।

छेदादेर्नित्यं ॥ ७६ ॥ छेदादेरिवंताद् नित्यमर्हतीत्यर्थे यथाविहितं त्यो भवति । छेदं नित्यमर्हति छैदिक: । छैदिकी । भैदिक: ।द्रौहिक: ।

वैरंगिक: ॥७७॥ विरागशब्दाद् ठञ् निपात्य:विरंगादेशश्चाविरागं नित्यमर्हति वैरांगिक: ।

शीर्षच्छेदाद् यश्च ॥ ७८ ॥ अस्मात् यो भवति ठञ् च । शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्य: । शैर्षच्छेदिक: चौर: ।

दंडादे: ॥ ७९ ॥ दंडादेरिवंताद् यो भवत्यर्हति । दंडमर्हति दंड्य: । मुसल्य: । मधुपर्क्य: । इभ्य: ।

पात्राद् घश्च ॥ ८० ॥ पात्राद् घो भवति यश्चार्हति । पात्रिय: । पात्र्य: ।

कडंगरदक्षिणास्थालीबिलाच्छयौ ॥ ८१ ॥ कडंगरादे: छयौ स्त: तदर्हति । कडंगरीय: । कडंगर्यो गौ: । दक्षिणीय:, दक्षिण्यो गुरु: । स्थालीबिल्या: तंडुला: ।

*यज्ञाद् घ: ॥ ८२ ॥ यज्ञाद् घो भवति अर्हति । यज्ञियो देश: ।

*शालीनकौपीनार्त्विजीना: ॥ ८३ ॥ एते खञंता निपात्यंते । शालाकूपप्रवेशनाभ्यां खञ् घुत्वं च । शालाप्रवेशनमर्हति शालीनोऽधृष्ट: । कूपप्रवेशनमर्हति कौपीनं पापं पायूपस्थं । तदावरणचीरखंडं च । ऋत्विजमर्हति आर्त्विजीनो यजमान: । ऋजमर्हतीत्यर्थ: ।

गोदानादीनां ब्रह्मचर्ये ॥ ८४ ॥ एभ्यस्तांतेभ्यः ठञ् भवति ब्रह्मचर्येऽर्थे । गोदानस्य ब्रह्मचर्यं गौदानिकं । आदित्यव्रतिकं ।

चंद्रायणं चरति ॥ ८५ ॥ अस्मादिबंतात् गोदानादेश्च चरत्यर्थे ठञ् स्यात् । चंद्रायणं चरति चांद्रायणिकः।गौदानिकः । आदित्यव्रतिकः ।

देवव्रतादीन् डिन् ॥ ८६ ॥ एभ्य इबंतेभ्यः डिन् स्यात् । देवव्रतं चरति देवव्रती । तिलव्रती । अवांतरदीक्षी ।

डुश्चाष्टाचत्वारिंशत्चातुर्मास्याद् यत्वं च॥८७॥ आभ्यां इबंताभ्यां डुर्भवति डिन् च यकारस्य च त्वं । अष्टचत्वारिंशतं चरति अष्टाचत्वारिंशकः । अष्टचत्वारिंशी । चातुर्मासिकः । चातुर्मासी

तुरायणपारायणं यजतेऽधीते ॥ ८८ ॥ आभ्यां यजतेऽधीते चार्थे ठञ् स्यात् । तुरायणं यज्ञं यजते तौरायणिकः । पारायणमधीते पारायणिकः ।

संशयं प्राप्तेऽर्थे॥८९॥संशयाद् प्राप्तोऽर्थ इत्यस्मिन्नर्थे ठञ् स्यात् । संशयं प्राप्तोऽर्थः सांशयिकः।

क्रोशयोजनाच्छतायोजनाच्चाभिगमार्हः ॥ ९० ॥ क्रोशयोजनाभ्यां परात् शतात् योजनाच्च कांतात् अभिगमार्ह इत्यस्मिन्नर्थे ठञ् स्यात्। क्रोशशतादभिगमार्हः क्रौशशतिको मुनिः । यौजनशतिको गुरुः । यौजनिकः साधुः ।

तद् यात्येभ्यः ॥९१॥ तदितीबंतेभ्यः एभ्य क्रोशशतादिभ्यो यात्यर्थे ठञ् स्यात् । क्रोशशतं याति क्रौशशतिकः। यौजनशतिकः। यौजनिकः ।

पथष्टट् ॥ ९२ ॥ पथिन्शब्दाट्टट् स्यात् । पंथानं याति पथिकः । द्विपथिकः ।

+ पंथो णो नित्यं ॥ ९३ ॥ पथः नित्यं यात्यर्थे णो भवति पंथादेशश्च। पंथानं नित्यं याति पांथः । पांथा स्त्री । द्विपंथः ।

वारिजंगलस्थलकांताराजशंकूत्तरादिनाऽऽहृते च ॥ ९४ ॥ वार्यादिपूर्वात् पथः अंतात् आहृते आनीते याति चार्थे ठञ् स्यात् । वारिपथेनाहृतः याति वा वारिपथिकः। जांगलपथिकः। स्थालपथिकः । कांतारपथिकः । आजपथिकः । शांकुपथिकः । औत्तरपथिकः ।

स्थलादिनाण्मधुकमरिचं ॥ ९५ ॥ स्थलपूर्वात् पथोऽण् स्यादाहृतेऽर्थे तच्चेदाहृतं मधुकं मरिचं वा यदि स्यात्। स्थलपथेनाहृतं स्थालपथं मधुकं मरीचं वा ।

÷ कालेभ्यः ॥ ९६ ॥ यदितोऽग्रेऽनुक्रमिष्यामः तत्कालवाचिभ्यो भवतीति ज्ञेयं । तत्रैवोदाहरिष्यामः ।

+ तेन निर्वृत्तः ॥ ९७ ॥ तेनेति भासमर्थात् कालात् निर्वृत्तं इत्यस्मिन्नर्थे ठञ् स्यात् अह्ना निर्वृत्तः आह्निकः प्रासादः । मासिकः । आर्द्धमासिकः । सांवत्सरिकः ।

तस्मै भृतोऽधीष्टः ॥ ९८ ॥ तस्मै इत्यबंतात् कालात् भृतोऽधीष्ट इति चार्थे ठञ् स्यात् । मासाय भृतः मूल्येन क्रीतः नियमितः मासिकः कर्मकरः । मासायाधीष्टः मासिकोऽध्यापकः । सांवत्सरिकः ।

तं भूतो भावी ॥ ९९ ॥ तमितीबंतात् भूतो भावीति चार्थे ठञ् स्यात् । मासं भूतो भावी वा मासिको व्रीहिः । आर्द्धमासिकः । सांवत्सरिकः ।

षण्मासाण्ण्यटौ ॥ १०० ॥ अस्मात् ण्यठौ स्तो भः तेन निर्वृत्तादौ । षड्भिः मासैर्निर्वृत्तः षड्भ्यो भृतोऽधीष्टो षण्मासान् भूतो भावी वा षाण्मास्यः । षण्मासिकः ।

+ समायाः खः ॥ १०१ ॥ समाशब्दात् निर्वृत्तादौ खो भवति । समया निर्वृत्तः समीनः

भूतोऽधीष्टो वा समां भूतो भावी वा समीनः ।

× रात् भूतवले: ॥ १०२ ॥ समांतात् रसात् खो भवति भूतवलेराचार्यस्य मतेन । द्वाभ्यां समाभ्यां निर्वृत्तादिः द्विसमीनः। द्वैसमिकः।

राज्यहःसंवत्सरात् ॥ १०३ ॥ रात्र्यायंतात् रात् खो भवति निर्वृत्तादौ भूतबलेर्मतेन । द्विरात्रीणः । द्वैरात्रिकः। त्रिरात्रीणः । त्रैरात्रिकः । द्व्यह्नीनः । द्वैयह्निकः । त्रिसंवत्सरीणः । त्रिसांवत्सरिकः ।

वर्षाद्दुप् च ॥ १०४ ॥ वर्षांतात् रात् परस्य ठञः उप् भवति खश्च भूतबलेर्मतेन निर्वृत्तादौ । तेन—पक्षे ठञः श्रुतिः । द्विवर्षः । द्विवर्षीणः । द्विवार्षिकः ।

प्राणिन्युब्भूते ॥ १०५ ॥ वर्षांतात् रात् प्राणिन्यर्थे उप् स्यात् भूते । द्वे वर्षे भूतः द्विवर्षः । त्रिवर्षः दारकः । प्राणिनीति किं ? द्विवर्षः । द्विवार्षिको व्याधिः ।

* मासाद्द वयसि यः ॥ १०६ ॥ मासांतात् रात् भूतेऽर्थे यो भवति वयसि गम्यमाने । द्वौ मासौ भूतो द्विमास्यः । त्रिमास्यः । वयसीति किं ? द्वैमासिको व्याधिः ।

* खञ् च ॥ १०७ ॥ मासात् भूतेऽर्थे खञ् स्यात् । यश्च वयसि । मासीनः । मास्यः ।

*षण्मासाण्ण्यठण्याः ॥ १०८ ॥ अस्माद्द ण्यादयः स्युः वयसि गम्यमाने । षण्मासान् भूतः षाण्मास्यः । षाण्मासिकः । षण्मास्यः ।

*यज्ञानां दक्षिणा ॥ १०९ ॥ यज्ञवाचिभ्यस्तांतेभ्यो दक्षिणेत्यस्मिन्नर्थे ठञ् स्यात् । अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी । वाजपेयिकी । राजसूयिकी ।

*तत्र देयं ११० ॥ तत्रेतीप्समर्थात् यज्ञवाचकात् देयमित्यस्मिन्नर्थे ठञ् स्यात् । अग्निष्टोमे देयं भक्तं आग्निष्टोमिकं । वाजपेयिकं । द्वैवाजपेयिकं ।

* काले कार्ये च भववत् ॥ १११ ॥ कालवाचकादीबंतात् देयं कार्यमिति चार्थे भव इव त्यो भवति । यथा—वर्षासु भवं वार्षिकं । मासिकं । तथा वर्षासु देयं कार्यं वा वार्षिकं । मासिकं । नैशिकं । नैशं । पुराणं । पुरातनं ।

व्युष्टादिभ्यऽण् ॥ ११२ ॥ एभ्य इबंतेभ्य अण् स्यात् । व्युष्टे देयं कार्यं वा वैयुष्टं । नित्ये देयं नैत्यं । नैथ्यं ।

तेन यथाकथाचहस्ताण्णयं ॥ ११३ ॥ तेनेति भांताभ्यामाभ्यां णयौ त्यौ स्तः । यथा कथाच कार्यं देयं वा याथाकथाचं । हस्त्यं ।

जय्यलभ्यकार्यसुकरं ॥ ११४ ॥ भांतात् कालात् जय्याद्यर्थेषु ठञ् स्यात् । मासेन जय्यं लभ्यं कार्यं सुकरं वा मासिकं । आर्द्धमासिकं । सांवत्सरिकं ।

संपादिनि ॥ ११५ ॥ भांतात् संपादिनि शोभनेऽर्थे ठञ् स्यात् । कर्णवेष्टकाभ्यां संपादि मुखं कार्णवेष्टकिकं । वास्त्रयुगिकं शरीरं ।

कर्मवेषाद् यः ॥ ११६ ॥ आभ्यां संपादिन्यर्थे यो भवति । कर्मणा संपादि कर्मण्यं शौर्यं । वेष्या नर्तकी ।

* योगादये प्रभुः ॥ ११७ ॥ योगादिभ्यो ऽवंतेभ्यः प्रभुरित्यस्मिन्नर्थे ठञ् स्यात् । योगाय प्रभुः यौगिकः । सांतापिकः । नैसर्गिकः । औपवासिकः ।

* योग्यकार्मुके ॥ ११८ ॥ योग कर्मन्शब्दाभ्यां य उकञ निपात्यः । योगाय प्रभुः योग्यः । कार्मुकं धनुः ।

* सोऽस्य तद्वत्ब्रह्मचर्ये ॥ ११९ ॥ स इति वासमर्थात् अस्येति तार्थे ठञ् स्यात्

तद्भवति ब्रह्मचारिणि ब्रह्मचर्ये चार्थे। मासोऽस्य ब्रह्मचारिणः मासिकः। आर्द्धमासिकः। तथा मासिकं ब्रह्मचर्यं। सांवत्सरिकं।

समयात् प्राप्तात्॥ १२०॥ समयात् प्राप्तविशिष्टात् ठञ् स्यात्। समयः प्राप्तो ऽस्य सामयिकं कार्यं।

* ऋत्वादिभ्योऽण् ॥ १२१॥ एभ्योऽण् स्यात्। ऋतुः प्राप्तोऽस्य आर्तवं पुष्पं। उपवस्त्रा-औपवस्त्रं।

कालाद्यः ॥ १२२॥ कालशब्दात् प्राप्तोपाधिकात् सोऽस्येत्यस्मिन् विषये यो भवति। कालः प्राप्तोऽस्य काल्यो मेघः।

* दीर्घात्॥ १२३॥ कालाद्दीर्घविशिष्टात् ठञ् स्यात्। दीर्घः कालोऽस्य कालिकमृणं।

प्रयोजनं॥ १२४॥ तांतात् प्रयोजनमित्यस्मिन्नर्थे ठञ् स्यात्। अर्हत्पूजा प्रयोजनमस्य आर्हत्पूजिकः। जैनमहिकः। आभिषेचनिकः।

* एकागाराच्चौरे॥ १२५॥ अस्माच्चौरेऽर्थे ठञ् स्यात्। एकागारं प्रयोजनमस्य ऐकागारिकः चौरः।

श्रद्धादिभ्योऽण्॥ १२६॥ एभ्योऽण् स्यात्। श्रद्धा प्रयोजनमस्य श्राद्धं। चौडं।

विशाखाषाढान्मंथदंडे॥ १२७॥ आभ्यामण् स्यात् मंथे दंडे चार्थे। विशाखा प्रयोजनमस्य वैशाखो मंथः। आषाढो दंडः।

छोऽनुप्रवचनादेः॥ १२८॥ एभ्यश्छो भवति। अनुप्रवचनं प्रयोजनमस्य अनुप्रवचनीयं। उत्थापनीयं। अनुवादनीयं। अनुप्रवचनीयं।

+ विशिपूरिपदिरुहिसमापोऽनात्सादेः १२९. विश्यादेरनत्यांतात् सपूर्वपदात् छो भवति। गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयं। प्रपापूरणीयं। गोप्रपदनीयं। प्रासादारोहणीयं। जैनेंद्रसमापनीयं।

÷ स्वर्गस्वस्तिवाचनादिभ्यो योपू॥ १३०॥ स्वर्गादिभ्यः स्वस्तिवाचनादिभ्यश्च यापौ स्तः। स्वर्गः प्रयोजनमस्य स्वर्ग्यं। यशस्यं। आयुष्यं। स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनं। शांतिवाचनं। पुण्याहवाचनं। ठञ उप्।

* आकालिकं ठश्चाद्यंते॥ १३१॥ समानकालशब्दात् आद्यंतोपाधिकात् ठञ् निपात्यः समानकालस्य च आकाल आदेशः ठश्च। समानकालौ आद्यंतौ अस्य-आकालिकोऽनध्यायः आकालिकी, आकालिका वा विद्युत्।

* इवोऽर्हे वत् कृत्ये॥ १३२॥ इवंतादर्हेऽर्थे वत् भवति यदर्हं तच्चेत् कृत्यं क्रिया भवति। राजानमर्हति राजवत् वृत्तमस्य राज्ञः। कुलीनवत्। साधुवत्। कृत्य इति किं ? शतमर्हति पुत्रः।

* सुप इवे॥ १३३॥ सुबंतादिवार्थे वत् भवति कृत्ये। क्षत्रिय इव युध्यते क्षत्रियवत्। अश्ववत् धावति। देवमिव देववत् गुरुं पश्यति। साधुना इव साधुवत् पुत्रेणाचरितं।पात्रायेवपात्रवद-पात्राय दत्तं।पर्वतादिव पर्वतवत् कुनुपादवरोहति।

तत्र॥ १३४॥ तत्रेतीप्समर्थात् इवार्थे वत् भवति। मथुरायामिव मथुरावत् श्रुघ्ने प्रासादः। पाटलिपुत्रवत् साकेते परिखा।

तस्य॥ १३५॥ तस्येति तासमर्थात् इवार्थे वत् भवति। देवदत्तस्य इव देवदत्तवत्। राजवत्।

भावे त्वतल्॥ १३६॥ तांतात् भावेऽर्थे त्वतलौ स्तः। भवतोऽस्मादाभिधानप्रत्ययौ इति भावः। गोर्भावः गोत्वं। गोता। शुक्लत्वं। शुक्लता। पाचकत्वं। पाचकता। डित्थत्वं। डित्थता।

*आत्वादगड्वादेः ॥ १३७ ॥ यदित ऊर्ध्वमनुक्रमिष्याम: आब्राह्मणत्वंशब्दात् त्व तलौ अधिकृतौ ज्ञेयौ गड्वादीन् वर्जयित्वा । उत्तरत्रैवोदाहरिष्यामः । अगड्वादेरिति किं ? गाड्व्यं । दायाद्यं । कामंडलवं ।

*नञ् पादशुभादेः ॥ १३८ ॥ आत्वात् नञ् पूर्वात् यस्मात् बुधादंतवर्जिताद् त्वतलौ स्तः । न शुक्लोऽशुक्लः । तस्य भावः अशुक्लत्वं । अशुक्लता । अराजत्वं । अराजता । अस्थविरत्वं अस्थविरता । अहायनत्वं । अहायनता । अबुधादेरिति किं ? न बुधोऽबुधस्तस्य भावः कर्म वा आबुध्यं । आचतुर्यं । आसंगत्यं । आलवण्यं । आरम्यं । आलम्यं ।

÷ पृथ्वादेर्वेमन् ॥ १३९ ॥ पृथ्वादिभ्य इमन् वा स्यात् तौ च । पृथोर्भावः प्रथिमा । पृथुत्वं । पृथुता । पार्थिवं । म्रदिमा । मृदुत्वं । मृदुता । मार्दवं । लघिमा । लघुत्वं । लघुता । लाघवं ।

वर्णदृढादिभ्यष्ट्यण् च ॥ १४० ॥ वर्णवाचिभ्यो दृढादिभ्यश्च ट्यण् स्यात् इमन् च वा । शुक्लस्य भावः शौक्ल्यं । शुक्लिमा । शुक्लता । शुक्लत्वं । कार्ष्ण्यं । कृष्णिमा । कृष्णत्वं । कृष्णता । दार्ढ्यं । द्रढिमा । दृढत्वं । दृढता । वार्द्ध्यं । व्रढिमा । वृढत्वं । वृढता । पांडित्यं । पंडितिमा । पंडितत्वं । पंडितता ।

*राजपत्यंतगुणोक्तिराजादिभ्यःकृत्ये च॥१४१॥ राजांतेभ्यःपत्यंतेभ्यो गुणोक्तिभ्यो राजादिभ्यश्च कृत्ये कर्मणि भावे च ट्यण् स्यात् । सुराज्ञो भावः कर्म वा सौराज्यं । सुराजत्वं । सुराजता । यौवराज्यं । युवराजत्वं । युवराजता । नारपत्यं । नरपतित्वं । नरपतिता । आधिपत्यं । अधिपतित्वं । अधिपतिता । सैनापत्यं । जाड्यं । जडता । मौर्ख्यं । मूर्खत्वं । मूर्खता । कौशल्यं । राज्यं । राजत्वं । राजता । काव्यं । कवित्वं । कविता । ब्राह्मण्यं । ब्राह्मणत्वंब्राह्मणता ।

*सहायाद्वा ॥ १४२ ॥ सहायाद् ट्यण् वा स्यात् भावादौ । साहाय्यं । सहायत्वं । सहायता । साहायकं ।

*स्तेयार्हत्यं ॥ १४३ ॥ एतद् द्वयं निपात्यं । स्तेनस्य भावः कृत्यं वा स्तेयं । यो नलं च । स्तेनत्वं । स्तेनता । अर्हतो भावः कृत्यं वा आर्हत्यं । अर्हतो नुमट्यणौ च । अर्हत्वं । अर्हता ।

*सखिवणिग्दूताद्यः ॥ १४४ ॥ सख्यादेर्यो भवति भावादौ । सख्युर्भावःकर्म वा सख्यं । सखित्वं । सखिता । वणिज्यं । वणिक्त्वं । वणिक्ता । दूत्यं । दूतत्वं । दूतता ।

कपिज्ञातेर्ढञ् ॥ १४५ ॥ आभ्यां ढञ् स्यात् भावादौ । कापेयं । कपित्वं । कपिता । ज्ञातेयं । ज्ञातित्वं । ज्ञातिता ।

वयःप्राणिजातेरञ् ॥ १४६ ॥ वयोवाचिभ्यः प्राणिजातेश्चाञ् स्यात् भावादौ । कौमारं । कुमारत्वं । कुमारता । कैशोरं । कालभं । वार्करं । प्राणिजातेः—आश्वं । अश्वत्वं । अश्वता । गार्दभं । औष्ट्रं । हाम्तं ।

हायनांतयुवादेरण् ॥ १४७ ॥ हायनांतात् युवादेश्चाण् स्यात् भावादौ । द्वैहायनं । द्विहायनत्वं । द्विहायनता । त्रैहायनं । यौवनं । युवत्वं । युवता । स्थाविरं । कौतुकं । कौशलं । कौतूहलं ।

*हृदयपुरुषादसे ॥ १४८ ॥ आभ्यां भावे कृत्ये चाण् स्यात् असे । हार्द । हृदयता । पौरुषं । पुरुषत्वं । पुरुषता । असे इति किं ? सुहृदयत्वं । परमपुरुषत्वं ।

*श्रौत्रं ॥ १४९ ॥ श्रोत्रियशब्दादण् निपात्यते यलं च । श्रोत्रियस्य भावः कृत्यं वा श्रौत्रं

ओत्रियत्वं । ओत्रियता ।

प्यादेरिकः ॥ १५० ॥ इगंतात् प्यादेरण् स्यात् भावादौ । शौचं । शुचित्वं । शुचिता । मौनं । मुनित्वं । मुनिता । पाटवं । पटुता । पटुत्वं । पैत्रं । पितृत्वं । पितृता । प्यादेरिति किं । पांडुत्वं । इक इति किं ? घटत्वं ।

योकोरूपोत्तमाद् वुञ् ॥ १५१ ॥ योकः रूपोत्तमाद् वुञ् स्यात् भावादौ । रामणीयकं । रमणीयत्वं । रमणीयता । औपाध्यायकं । उपाध्यायत्वं । आचार्यकं । योक इति किं ? विमानत्वं । रूपोत्तमादिति किं ? क्षत्रियत्वं । कायत्वं ।

द्वंद्वधूर्तादेः ॥१५२॥ द्वंद्वात् धूर्तादिभ्यश्च वुञ् स्यात् । कुरुकाशीनां भावः कृत्यं वा कौरुकाशिका । भारतबाहुवलिका । श्रैपालवमुगालिका । धौर्तिका । चौरिका । धूर्तत्वं । धूर्तता । मानोज्ञकं ।

गोत्रचरणात् श्लाघात्याकागवेतौ॥१५३॥ गोत्राचरणाच्च वुञ् स्यात् श्लाघाद्यर्थेषु भावादौ। गार्गिकया श्लाघते अत्याकुरुत वा गार्गिकामवेत वान् । गार्ग्यत्वेन । गार्ग्यतया । वात्सिकया श्लाघते अत्याकुरुते वा वात्सिकामवेतवान् । एवं काठिकया कालापिकया ।

होत्रादिभ्यश्छः ॥ १५४ ॥ एभ्यः ऋत्विग्वाचिभ्यश्छो भवति भावादौ । अच्छावाकीयं । अच्छावाकत्वं । अच्छावाकता । मैत्रावरुणीयं ।

ब्रह्मणस्त्वः ॥ १५५ ॥ अस्माद् ऋत्विग्वाचिनस्त्वो भवति भावादौ । ब्रह्मणो भावः कृत्यं वा ब्रह्मत्वं ।

+शाकटशाकिनौ क्षेत्रे ॥ १५६ ॥ तांतात् क्षेत्रेऽर्थे शाकटशाकिनौ त्यौ स्तः । इक्षूणां क्षेत्रं इक्षुशाकटं, इक्षुशाकिनं । मूलशाकटं, मूलशाकिनं ।

धान्येभ्यः खञ् ॥ १५७ ॥ धान्यवाचिभ्यः खञ् स्यात् । मुद्गानां क्षेत्रं मौद्गीनं । कौलत्थीनं । प्रैयंगवीणं ।

व्रीहिशालेर्ढञ् ॥ १५८ ॥ आभ्यां क्षेत्रे ढञ् स्यात् । व्रैहेयं । शालेयं ।

+ यवयवकषष्टिकाद् यः ॥ १५९ ॥ एभ्यो यो भवति क्षेत्रे । यवानां क्षेत्रं यव्यं । यवक्यं । षष्टिक्यं ।

*वाऽणुमाषात् ॥१६०॥ आभ्यां यो भवति वा क्षेत्रे । अणव्यं । आणवीनं । माष्यं । माषीणं ।

*तिलोमाभंगात् ॥ १६१ ॥ एभ्यस्तांतेभ्यो यो वा स्यात् क्षेत्रे । तिल्यं । तैलीनं । उम्यं । औमीनं । भंग्यं । भांगीनं ।

कटोऽलाब्वाश्च रजसि ॥ १६२ ॥ अलाबूशब्दात् तिलादेश्च कटस्त्यो भवति रजस्यर्थे । अलाबूनां रजः-अलाबूकटं । तिलकटं । उमाकटं । भंगाकटं ।

गम्येऽध्वाश्वात् खञ् ॥ १६३ ॥ अश्वात् खञ् स्यात् अह्ना गम्येऽर्थे । अश्वस्यैकेनाह्ना गम्यः-आश्वीनोऽध्वा ।

सर्वचर्मणः कृतः खश्च ॥ १६४ ॥ सर्वचर्मणस्तांतात् खो भवति खञ् च कृत इत्यस्मिन्नर्थे । सर्वचर्मणः कृतः सर्वचर्मीणः । सार्वचर्मीणः ।

यथामुखसंमुखाद्दर्शनं ॥ १६५ ॥ आभ्यां तांताभ्यां दर्शनमित्यस्मिन्नर्थे खो भवति । यथामुखं दर्शनः-यथामुखीनः । संमुखस्य दर्शनः संमुखीनः ।

सर्वादेः पथ्यंगकर्मपत्रपात्रशरावाद् व्यापी ॥ १६६ ॥ सर्वपूर्वाद् पथ्यादेः व्यापी इत्यस्मिन्नर्थे खो भवति । सर्वपथस्य व्यापी सर्वपथीनो रथः । सर्वांगीणस्तापः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणः सारथिः । सर्वपात्रीणः ओदनः । सर्वशरावीणः सक्तुः ।

आमपदं ॥ १६७ ॥ अस्मात्तांतात् खो भवति । आमपदं व्यापी आमपदीनः पटः ।

परोवरपरंपरपुत्रपौत्रमन्वस्ति ॥ १६८ ॥ परोवरादेरिवंतात् खो भवति अन्वस्त्यनुभवत्यर्थे। परांश्चावरांश्चानुभवति परोवरीणः। परांश्च परतरांश्च परंपरीणः।पुत्रांश्च पौत्रांश्च पुत्रपौत्रीणः।

*यथाकामानुकामात्यंतपारावारपारावारावारपारान् गामी ॥ १६९ ॥ यथाकामादेरिवंतात् गामीत्यस्मिन्नर्थे खो भवति। यथाकामं गामी यथाकामीनः। अनुकामीनः। अत्यंतीनः। पारीणः। अवारीणः। पारावारीणः। अवारपारीणः।

अनुग्वलं ॥ १७० ॥ अनुगुशब्दाद् अलंगामीत्यस्मिन्नर्थे खो भवति। अनुग्वलं गामी अनुगवीनो गोपालः।

छोऽभ्यमित्रं ॥१७१॥ अभ्यमित्रादिवंताच्छो भवति। अभ्यमित्रमलंगामी-अभ्यमित्रीयः।

*यः ॥ १७२ ॥ अस्माद् यो भवति अलंगामिनि। अभ्यमित्र्यः।

*खश्चाध्वानं च ॥ १७३ ॥ अध्वनोऽभ्यमित्राच्चेवंतात् खो भवति यश्च। अध्वानमलंगामी अध्वनीनः। अध्वन्यः। अभ्यमित्रीणः।

समां समां विजायते ॥ १७४ ॥ समां समां शब्दात् खो भवति विजायतेऽर्थे।समां समां विजायते गर्भमादधाति समांसमीना गौः।

अद्यश्वीनाद्यप्रातीनमासन्नं ॥ १७५ ॥ एतद्द्वयं खांतं निपात्यं आसन्नमित्यस्मिन्नर्थे। अद्यश्वो वा विजनिष्यते अद्यश्वीना गौः। अद्यप्रातीना। आसन्नप्रसवा इत्यर्थः।

* सर्वान्नीनानुपदीनायानयीनमदद्बद्धानेये ॥ १७६ ॥ सर्वान्नीनादयः खांता निपात्यंते अदद्वाद्यर्थेषु। सर्वान्नमत्ति सर्वान्नीनो भिक्षुः। पदस्यपश्चं अनुपदं बद्धा अनुपदीना उपानत्। अयानयं नेयः—अयानयीनः शारः।

* आगवीनं ॥१७७॥ आगोः प्रतिदानात् कर्मकारिणि खो निपात्यः प्रतिदानस्य खं। आगोःप्रतिदानं कर्म करोति आगवीनः कर्मकरः।

* साप्तपदीनं सख्यं ॥ १७८ ॥ सप्तपदात् खञ् निपात्यः सख्यमित्यस्मिन्नर्थे। सप्तभिःपदैरवाप्यं साप्तपदीनं सख्यं।

गौष्ठीनं भूतपूर्वे ॥ १७९ ॥ गोष्ठात् खञ् निपात्यते भूतपूर्वेऽर्थे। गोष्ठो भूतपूर्वः गौष्ठीनो देशः।

चरट् ॥ १८० ॥ भूतपूर्वे चरट् स्यात्। आढ्यो भूतपूर्वः-आढ्यचरः।ऋषिचरः।दर्शनीयचरः।

ताया रूप्यश्च ॥ १८१ ॥ तांतात् रूप्यो भवति चरट् च। देवदत्तस्य भूतपूर्वा गौः देवदत्तरूप्यः। देवदत्तचरः। देवदत्तचरी।

*पील्वादेः कुणः पाके ॥१८२॥ पील्वादिभ्यः पाकेऽर्थे कुणो भवति। पीलूनां पाकः पीलुकुणः।कर्कंधुकुणः। करीरकुणः।

*कर्णादिपक्षान्मूले जाहती ॥१८३॥ कर्णादेः पक्षाच्च मूलेऽर्थे जा हती त्यौ स्तः।कर्णस्य मूलं कर्णजाहं। मुखजाहं। अक्षिजाहं। पक्षस्य मूलं पक्षतिः।

+ तृप्णोष्णशीतादालुरसहे ॥१८४॥ तृप्रादेरालु स्यात् असहेऽर्थे। तृप्रस्यासहः तृप्रालुः। उष्णालुः। शीतालुः।

+ हिमादेलुः सहे ॥१८५॥ हिमाद् सहेऽर्थे एलुः स्यात्। हिमस्य सहः हिमेलुः।

+वातबलादूलः ॥ १८६ ॥ आभ्यां ऊलो भवति। वातस्य सहः वातूलः।बलस्य सहः बलूलः।

वेः शालशंकटौ ॥ १८७ ॥ विशब्दात् एतौ त्यौ स्तः स्वार्थे। विसृष्टो -विशालः,विशंकटः

*न्युत्सान्निप्रात् कटः॥१८८॥ एभ्यः कटो भवति।विस्पष्टा—विकटो देशः।उद्गतःउत्कटो गंधः। संगतः संकटः पंथाः। निगतो निकटो ग्रामः। प्रगतः—प्रकटोऽर्थः।

+ कुटारश्चावात् ॥ १८९ ॥ अवात् कुटारो भवति कटश्च स्वार्थे।अवगतः-अवकुटारः,अवकटः।

नासिकानते टीटनाटभ्रटाः ॥ १९० ॥ अवात् नासिकायाः टीटादयः स्युः नतेऽर्थे । अवनता नासिका यस्य-अवटीटः । अवनाटः । अवभ्रटः ।

+ नेर्बिडबिरीसौ ॥ १९१ ॥ नेर्नासिकानतविषये एतौ स्तः । निनतं नासिकायाः निबिडं । निबिरीसं ।

+ कैनौ चिक्।। १९२ ॥ नेर्नासिकानतेऽर्थे कैनौ स्तः नेश्चिक् चादेशः । निनतं नासिकायाः-चिकं, चिकिनं ।

× पिटे चिः ॥ १९३ ॥ नेर्नासिकानतविषये पिटो भवति नेश्चिरादेशः । चिपिटं ।

क्षुल्लकाल्लो वा चुल् ॥ १९४ ॥क्षुल्लक शब्दात् स्वार्थे लो वा स्यात् तत्संनियोगे चुलित्ययं च प्रकृतेरादेशः । क्षुल्लकः । चुल्लः ।

क्लिन्नादक्ष्णि चिल् पिल् च ॥ १९५॥ क्लिन्नाल्लो भवति अक्ष्णि वाच्ये चिल् पिल् चुलादेशश्च । क्लिन्नं चक्षुः-चिल्लं, पिल्लं, चुल्लं।

+ उपत्यकाधित्यके ॥ १९६ ॥ उपाधिभ्यां त्यकौ निपात्यः आसन्ने अभिरूढे च स्त्रियां इत्वाभावश्च । पर्वतमुपासन्नो देशः उपत्यका । पर्वतमध्यारूढः अधित्यका ।

× तदस्य संजातं तारकादिभ्य इतः ॥ १९७ ॥ तदिति वासमर्थेभ्यः संजातविशिष्टेभ्यः तारकादिभ्य अस्येति तार्थे इतस्त्यो भवति । तारकाः संजाता अस्य तारकितं नमः। अभ्रितमाकाशं । पुष्पिता वल्ली । फलितस्तरुः । बुभुक्षितः । निद्रितः ।

गर्भादप्राणिनि ॥ १९८ ॥ गर्भशब्दादितो भवति अप्राणिनि । गर्भोऽस्य संजातः-गर्भितो व्रीहिः । अप्राणिनीति किं ? गर्भिणी गौः ।

प्रमाणे मात्रट् ॥ १९९ ॥ प्रमाणार्थे मात्रट् स्यात् । ऊरुः प्रमाणमस्य ऊरुमात्रं जलं । जानुमात्री खाता । धनुर्मात्री भूमिः ।

हस्तिपुरुषाद्वाऽण् ॥ २०० ॥ आभ्यामण् वा स्यात् । हस्ती प्रमाणमस्य हास्तिनमंबु । हस्तिमात्रं, हस्तिद्वयसं, हस्तिदघ्नं । पौरुषं । पुरुषद्वयसं । पुरुषदघ्नी छाया ।

वोर्ध्वे द्वयसट् दघ्नट् ॥ २०१ ॥ ऊर्ध्वे प्रमाणे द्वयसट् दघ्नटौ त्यौ वा स्तः । ऊरू प्रमाणमस्य ऊरुद्वयसं । ऊरुदघ्नं । ऊरुमात्रं तोयं । ऊरुद्वयसी परिखा । तद्दघ्नी । ऊर्ध्व इति किं ? रज्जुमात्री भूमिः ।

उन्माने ॥ २०२ ॥ मानवाचिन्येव प्रमाणे मात्रडादेरुप् भवति । समः प्रमाणमस्य समः । दिष्टिः । वितस्तिः । मान इति किं ? ऊरुमात्रं।

राट् संशये च ॥ २०३ ॥ संशये च राट् मात्रडादेरुप् भवति । द्वौ प्रस्थौ मानमस्य द्विप्रस्थः। द्विशतः । द्वौ समौ मानमस्य द्विसमः। द्विवितस्तिः।

मात्रट् ॥ २०४ ॥ माने संशये मात्रट् स्यात् । कर्षौ मानमस्य कर्षमात्रं घृतं । प्रस्थमात्रं धान्यं । हस्तमात्रं क्षेत्रं । पंचमात्राः पुरुषाः ।

शच्छन्‌विंशतेः ॥ २०५ ॥ शवंतात् शनंतात् विंशतेश्च मात्रट् स्यात् । त्रिंशन्मानमेषां स्यात् त्रिंशन्मात्राः । दशमात्राः । विंशतिमात्राः।

डिन् ॥ २०६ ॥ त्रिंशदादिभ्यो डिन् स्यात्। त्रिंशदहोरात्रा मानमस्य त्रिंशी । त्रिंशिनौ । त्रिंशिनो मासाः । पंचदशी अर्द्धमासः । विंशिनो भवनेंद्राः ।

घत्विदंकिमः ॥ २०७ ॥ आभ्यां वतुः स्यात् । इदं मानमस्य इयान् । कियान् ।

वैतदो घः ॥ २०८ ॥ एतदः वतोर्घस्य

वो भवति । एतावान् ।

यत्तदः ॥ २०९ ॥आभ्यां वतोर्वो भवति। यन्मानस्य यावान् । तावान् ।

किमश्च स्येर्डतिश्च ॥ २१० ॥ स्थिसंज्ञकात् माने वर्तमानात् किमस्ताभ्यां च डतिर्भवति च-तुश्च । का संख्या मानमेषां कतीमे । कियंत इमे । यति । यावंतः । तति । तावंतः ।

अवयवे तयट् ॥ २११ ॥ अवयवे वर्त-मानात् स्येः तयट् स्यात् । चत्वारोऽवयवा अस्य चतुष्टयं समंतभद्रस्य । पंचतयो यमः । सप्ततयी नयवृत्तिः । दशतयो धर्मः ।

द्वित्रेः खं वा ॥ २१२ ॥ द्वित्रिभ्यां परस्य तयट् आदेस्तकारस्य वा खं स्यात् । द्वौ अव-यवौ अस्य द्वयं । द्वितयं । त्रयः । त्रितयः । मोक्षमार्गः ।

द्यादेर्गुणात् मूल्यक्रेये मयट् ॥ २१३ ॥ द्यादेर्गुणवाचकात भागवाचकात् स्थिसंज्ञात् मयट् स्यात् द्यादिश्चेत् मूल्ये क्रेये वा वर्तते । यवानां द्वौ गुणौ मूल्यमस्योदश्वितः क्रेयस्य द्विमयं उदश्वित् । त्रिमयं । उदश्वितो द्वौ गुणौ क्रेयावेषां द्विमयाः त्रिमयाः यवाः । द्व्यादेरिति किं ? यवानामेको गुणो मूल्यमस्य एकगुण-मुदश्वित् ।

अस्मिन्नाधिकं शतसहस्रे तत्संख्यं शति-शदन्ताड्डः ॥ २१४ ॥ शांतात् शत्यांतात् स्येरस्मिन्निवीत्यर्थे शतसहस्रे च डो भवति यद्दांतं तच्चेत् तत्संख्यं आधिकं स्यात् । विंशतिरधिकम-स्मिन् शते विंशं योजनशतं । विंशं सहस्रं । त्रिंशं शतं । चत्वारिंशं सहस्रं । एकादशं । द्वादशं शतं सहस्रं वा । अधिकमिति किं ? विंशति-रूनास्मिन् शते । शतसहस्रे इति किं ? एकाद-शाधिका अस्यां त्रिंशति । तत्संख्यमिति किं ?

विंशतिर्दंडा अधिका अस्मिन् योजनशते । त्रिंशत् माषा अधिका अस्मिन् कार्षापणसहस्रे ।

इति शब्दार्णवापरनाम्नि जैनेंद्रव्याकरणे
शब्दार्णवचंद्रिकालघुवृत्तौ
तृतीयोऽध्यायः ।

---

# चतुर्थोऽध्यायः ।

## प्रथमः पादः ।

तस्य स्थिपूरणे डट् ॥ १ ॥ तस्येति ता-समर्थात् स्थिसंख्यावाचिनः डट् भवति स्थिपूर-णेऽर्थे। त्रयोदशानां पूरणः त्रयोदशो विमलनाथः। चतुर्दशः । पंचदशः । षोडशः । एकादशानां पूरणी एकादशी । द्वादशी ।

+ नोऽसे मट् ॥२॥ नकारांतान्मट् स्यात् असे । पंचानां पूरणः पंचमः। पंचमी । सप्तमः। सप्तमी । अष्टमः । नवमः । दशमः । अस इति किं ? एकादशः । द्वादशः ।

बहुपूगगणसंघस्य तिथुक् ॥ ३ ॥ एषां डटि तिथुक् स्यात् । बहूनां पूरणः बहुतिथः । बहुतिथी । पूगतिथः । गणतिथः । संघतिथः ।

वतोरिथुक् ॥४॥ वत्वंतस्य डटि परतःइथु-गागमो भवति।इयतां पूरणः इयतिथः।कियतिथः। यावतिथः ।यावतिथी। तावतिथः। तावतिथी ।

षट्कतिकतिपयस्य थुक् ॥ ५ ॥ एषां डटि परे थुक् स्यात् । षण्णां पूरणः षष्ठः ।

षष्ठी । कतिथः । कतिपयथः ।

चतुरः ॥ ६ ॥ अस्य थुग् स्यात् डटि परे । चतुर्णां पूरणः चतुर्थः । चतसृणां पूरणी चतुर्थी ।

छयौ चलं च ॥ ७ ॥ तस्माच्छयौ त्यौ स्तः चकारस्य च लं । तुरीयः । तुरीया । तुर्यः ।

द्वेस्तीयः ॥ ८ ॥ द्विशब्दात्तीयो भवति । द्वयोः पूरणः द्वितीयः । द्वितीया ।

त्रेस्तृ च ॥९॥ त्रेस्तीयो भवति तृ इत्ययं चादेशः । त्रयाणां पूरणः तृतीयः । तृतीया ।

+शतादिमासार्द्धमाससंवत्सरात्तमट् ॥१०॥ शतादिभ्यो मासादेश्च तमट् स्यात् । शतस्य पूरणः शततमः । सहस्रतमः । अयुततमः । मासतमो दिवसः । अर्द्धमासतमः । संवत्सरतमः ।

तेरस्यादेः ॥ ११ ॥ तित्यंतात् अस्यिसंज्ञापूर्वात् तमट् स्यात् । षष्टेः पूरणः षष्टितमः । षष्टितमी । सप्ततितमः । अशीतितमः । नवतितमी । अस्यादेरिति किं ? एकषष्टः ।

× विंशत्यादेर्वा ॥ १२ ॥ विंशत्यादिभ्यः तमट् वा स्यात् । विंशतेः पूरणः विंशतितमः । विंशतितमी । विंशः । एकविंशतितमः, एकविंशः । त्रिंशत्तमः, त्रिंशः । विंशी । त्रिंशी ।

तेन वित्तः चंचुचणौ ॥ १३ ॥ तेनेति भासमर्थात् वित्त इत्यस्मिन्नर्थे चंचुचणौ त्यौ स्तः । तर्केण वित्तः तर्कचंचुः । तर्कचणः । व्याकरणचंचुः । व्याकरणचणः । केशचंचुः । केशचणः ।

डटो ग्रंथं गृह्णन् क उप् च ॥ १४ ॥ आंतात् डडंतात् ग्रंथं गृह्णात्यर्थे को भवति, डडुप् च नित्यं । द्वितीयेन रूपेण गृह्णाति द्विकः । त्रिकः । चतुष्कः ।

ग्रहणे वा ॥१५॥ डडंताद् को भवति ग्रंथग्रहणेऽर्थे डडुप् च वा । द्वितीयं ग्रहणं द्विकं, द्वितीयकं । त्रिकं, तृतीयकं व्याकरणस्य ।

सस्याद् गुणात् परिजाते ॥ १६ ॥ सस्यशब्दात् गुणवाचिनः परिजातेऽर्थे सर्वगुणसंपन्ने को भवति । सस्येन परिजातः सस्यकः शालिः देशः वत्सो वा ।

पार्श्वकायःशूलिकदांडाजिनिकानुपद्यन्वेष्टा— ॥ १७ ॥ पार्श्वकादयो निपात्यंते अन्वेष्टरि । पार्श्वेनान्वेष्टा-पार्श्वकः-को निपात्यः । अयःशूलेन-आयःशूलिकः । दंडाजिनेन-दांडाजिनिकः । ठण् । अनुपदमन्वेष्टा अनुपदी गवां । इन्न ।

स्वांगेषु सक्तः ॥ १८ ॥ स्वांगेभ्यः ईबंतेभ्यः सक्त इत्यस्मिन्नर्थे को भवति । केशेषु सक्तः केशकः । दंतकः । नखकः ।

औदरिकआद्यूनः ॥ १९ ॥ उदराट्ठण् निपात्यते आद्यूनोऽर्थश्चेत् । उदरे सक्तः औदरिकः । उदरकोऽन्यः ।

कर्मठो घटते ॥ २० ॥ कर्मन्शब्दात् ठत्यो निपात्यः इकाभावश्च घटतेऽर्थे । कर्मणि घटते कर्मठो ना ।

अंशं हारी ॥ २१ ॥ अंशादिबंतात् को भवति हारिणि । अंशं हारी-अंशकः दायादः ।

शीतकोष्णकौ कारिणि ॥ २२ ॥ शीतोष्णाभ्यां कारिण्यर्थे कौ निपात्यौ । शीतं कारी शीतको जडः । उष्णकारी-उष्णकः शीघ्रः ।

तंत्रान्नवोद्धृते ॥२३॥ तंत्रात् कांतात् नवोद्धृत अचिरापहृतेऽर्थे को भवति । तंत्रान्नवोद्धृतस्तंत्रकः पटः ।

कमितर्यन्वभ्यभेः ॥ २४ ॥ एभ्यः को भवति कमितरि कामयमानेऽर्थे । अनुकमिता अनुकः । अभीकः । अभिकः ।

+ तदस्मिन्नन्नं प्राये लौ ॥ २५ ॥ तदितिवासमर्थात् अस्मिन्निनतीयर्थे को भवति लौ यद्वांत अन्नेदं प्रायविषयं स्यात् । पिष्टाः प्राये

आगमस्यां तिथौ त्रिपुटिका पौर्णमासी । गुडापूपिका । कुसरिका ।

कौल्माषीवटकिन्यौ ॥२६॥ कुल्माषवटकाभ्यां अणिनौ निपात्यौ । कुल्माषाः प्रायेणागमस्यां कौल्माषी तिथिः । वटकिनी पौर्णमासी ।

आश्रणकौष्णिके ॥ २७ ॥ एतौ कांतौ निपात्यौ स्तौ । आश्रणा आयुधजीविनोऽस्मिन् आश्रणको देशः । उष्णादल्पाने । उष्णादन्नेरचिरोद्धृता-उष्णिका यवागूः ।

सोऽस्याग्रणीः ॥ २८ ॥ स इति वासमर्थात् अस्येति तार्थे को भवति यद्वांतं स चेदग्रणीर्मुख्यः स्यात्।देवदत्तोऽग्रणीर्यस्य देवदत्तकः।जिनदत्तकःसंघः

कालप्रयोजनाद् रोगे ॥ २९ ॥ वांतात् कालवाचिनः प्रयोजनवाचिनश्च रोगेऽर्थे को भवति। सततं कालोऽस्य सततको ज्वरः । द्वितीयदिवसः कालोऽस्य द्वितीयकः। तृतीयकः । विषपुष्पं प्रयोजनमस्य विषपुष्पको रोगः । शीतकः । उष्णकः ।

शृंखलकः करभे ॥ ३० ॥ शृंखलात् को निपात्यः करभेऽर्थे।शृंखलं बंधनमस्य शृंखलकःकरभः।

उन्मनस्युदुत्सोः ॥ ३१ ॥ उदुत्सुभ्यां उन्मनस्यर्थे को भवति । उद्गतं मनोऽस्य उत्कः । उत्सु गतं मनोऽस्य उत्सुकः ।

क्षेत्रेऽन्यस्मिन् घो नाश्ये ॥ ३२ ॥ क्षेत्रादीवंताद् अन्यविशिष्टात् घो भवति नाश्येऽर्थे। क्षेत्रेऽन्यस्मिन् नाश्यः क्षेत्रियो व्याधिः ।

श्रोत्रियो वा छंदोऽध्येता ॥३३॥ श्रोत्रियो वा निपात्यते छंदोऽध्येता चेत्। छंदःशब्दात् घः श्रोत्रभावश्च । छंदोऽधीते श्रोत्रियः । छांदसः।

इंद्रियं ॥ ३४ ॥ इंद्रात् घो निपात्यते । इंद्रस्यात्मनो लिंगं, इंद्रेण कर्मणा वा सृष्टं इंद्रियं ।

श्राद्धं भुक्तं ठोऽनेनाद्य ॥ ३५ ॥ श्राद्धं भुक्तमनेनाद्य इत्यस्मिन्नर्थे ठो भवति । श्राद्धं भुक्तमनेनाद्य श्राद्धिको विप्रः ।

+ इन् ॥ ३६ ॥ श्राद्धं भुक्तमनेनाद्यार्थे इन् स्यात् । श्राद्धी ।

+ पूर्वात् ॥ ३७ ॥ वांतात् पूर्वाद् इन् स्यात् । पूर्वमनेन कृतं भुक्तं पीतं वा पूर्वी ।

सादेः ॥ ३८ ॥ सादेः पूर्वादिन् स्यात् । पूर्वं कृतमनेन कृतपूर्वी कटं । भुक्तपूर्वी ओदनं । पीतपूर्वी जलं ।

+ इष्टादेः ॥३९॥ इष्टादिभ्य इन् स्यात्। इष्टमनेन इष्टी यज्ञे । पूर्ती श्राद्धे । अधीती तर्के। अर्चिती गुरौ । श्रुती पुराणे ।

तदस्यास्त्यस्मिन्निति मतुः ॥ ४० ॥ तदिति वासमर्थात् अस्तिविशिष्टात् अस्यास्मिन् इत्येतयोरर्थयोर्मतुर्भवति । गावोऽस्य संति गोमान् । धनवान् । वृक्षा अस्मिन् संति वृक्षवान् । प्लक्षवान्।इतिकरणो विवक्षार्थः।तेन विषयो नियम्यते।

भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां प्रायो मत्वादयो मताः ॥

भूमा प्राचुर्यं तस्मिन्—गोमान् । निंदायां-ककुदावर्ती । प्रशंसायां—रूपवती कन्या । नित्ययोगे—क्षीरिणो वृक्षाः । अतिशायने--उदरिणी कन्या । संसर्गे-दंडी ।

प्राण्यंगादातो वा लः ॥ ४१ ॥ प्राण्यंगादाकारांतान्मत्वर्थे लो भवति वा । चूलालः । चूलावान् । जंघालः । जंघावान् । प्राण्यंगादिति किं ? शिखावान् प्रदीपः।चिकीर्षावान्।

*लक्षुद्रजंतोः ॥ ४२ ॥ लत्वादिभ्यः क्षुद्रजंतुवाचिभ्यश्च मत्वर्थे लो वा स्यात् । मूर्छालः। मूर्छावान् । विचर्चिकालः । विचर्चिकावान् । यूकालः।यूकावान् । मक्षिकालः । मक्षिकावान् ।

सिध्मादेः ॥ ४३ ॥ एभ्यो लो वा स्यात् । सिध्मान्यस्य संति सिध्मलः । सिध्मवान् । गडु-

कः । गडुवान् । मणिकः। मणिवान् ।

+वातदंतबलललाटादूलः ॥ ४४ ॥ एभ्यो ऊलो वा स्यात् । वातूलः । वातवान् । दंतूलः। दंतवान् । बलूलः । बलवान् ।ललाटूलः।ललाटवान्।

वाचो ग्मिन् ॥ ४५ ॥ वाचः ग्मिन् वा स्यात् । वाग्मी । वाग्वान् ।

*क्षिप्यालाटौ ॥ ४६ ॥ वाचः आल आट इत्येतौ त्यौ स्तः क्षिपि कुत्सायां । वाचालः । वाचाटः।यो निस्सारं बहु जल्पति स एवं क्षिप्यते।

+कालाघाटाजटाल्लेलौ ॥४७॥ एभ्यो लेलौ स्तः क्षिपि । कालालः । कालिलः । घाटालः । घाटिलः । जटालः । जटिलः ।

*पिच्छादेः ॥ ४८ ॥ पिच्छादिभ्यो मत्वर्थे वा लेलौ स्तः । पिच्छलः । पिच्छिलः । पिच्छवान् । फेनलः । फेनिलः । फेनवान् । उरोलः । उरसिलः । उरस्वान् ।प्रज्ञालः।प्रज्ञिलः। प्रज्ञावान् ।

*लोमादेः शः ॥४९॥ एभ्यः शो भवति वा। लोमान्यस्य संति लोमशः । लोमवान् । रोमशः। रोमवान् । हरिशः । हरिमान् ।

*पामादेर्नः ॥ ५०॥ एभ्यो मत्वर्थे नो वा स्यात् । पामनः । पामवान् । वामनः । वामवान् । श्लेष्मणः । श्लेष्मवान् ।

+दद्रुशाकीपलाल्याः मश्च ॥ ५१ ॥ दद्र्वादेर्नो वा स्यात् मश्च मत्वर्थे । दद्रुणः । दद्रुमान् । शाकिनः । शाकीमान् । पलालिनः । पलालीमान् ।

+लक्ष्मणविषुणांगनाः ॥ ५२ ॥ एते शब्दाः निपात्यंते । लक्ष्मीरस्यास्तीति लक्ष्मणः । लक्ष्मीवान् । नत्योऽकारश्चांते निपात्यः । विष्वंचो विवसा रश्मयो वाऽस्य संति विषुणः आदित्यः । नत्यो णुत्वं च । अंगानि कल्याणान्यस्याः संति अंगनाः । अंगनाः । अन्या—अंगवती ।

प्रज्ञाश्रद्धार्चावृत्तेर्णः ॥ ५३ ॥ प्रज्ञादेर्णो वा स्यात् मत्वर्थे । प्राज्ञः । प्रज्ञावान् । श्राद्धः । श्रद्धावान् । आर्चः।अर्चावान् । वार्त्तः । वृत्तिमान् ।

*ज्योत्स्नादिभ्योऽण् ॥ ५४ ॥ एभ्योऽण् स्याद्वा । ज्योत्स्नाऽस्मिन् अस्ति ज्यौत्स्नः । पक्षः । ज्योत्स्नावान् । तामिस्रः । तमिस्रावान् । वैसर्पो व्याधिः । कौतुपं गृहं ।

सिकताशर्कराद् ॥ ५५ ॥ आभ्यामण् स्याद् वा । सैकतः। सिकतावान् । शार्करः। शर्करावान्।

उश्लिलौ च देशे ॥ ५६ ॥ सिकताशर्कराभ्यां मत्वर्थे देशे उश् इल अण् च वा भवंति। मतोरुप् । तेन चातुरूप्यं । सिकता देशः । सिकतिलः । सैकतः । सिकतावान् । शर्करा । शर्करिलः, शार्करः । शर्करावान् ।

द्युद्रोर्मः ॥ ५७ ॥ द्युद्रुभ्यां मो वा स्यात् । द्यौरस्यास्तीति द्युमः । द्रुमः ।

+मधुकृष्यादिभ्यो रवलौ ॥ ५८ ॥ मध्वादिभ्यः कृष्यादिभ्यश्च मत्वर्थे यथासंख्यं र वलौ त्यौ वा स्तः । मधुरो रसः । ऊषरं क्षेत्रं । मुष्करः पशुः । सुषिरं काष्ठं । खं महत्कंठविवरमस्यास्तीति खरः । खवानन्यः । अन्यत्र—मधुमान् । ऊषवान् । मुष्कवान् । कृषीवलः । कृषिमान् । रजस्वला स्त्री । रजस्वान् ग्रामः । परिषद्वलः।परिषद्वान् राजा ।

*कांडांडभांडादीरः ॥ ५९ ॥ एभ्य ईरो वा स्यात् । कांडीरः । कांडवान् । आंडीरः । आंडवान् भांडीरः । भांडवान् ।

कच्छ्वा डुरः ॥ ६० ॥ कच्छूशब्दाड् डुरो भवति वा । कच्छुरः । कच्छूमान् ।

* दंतादुन्नते ॥ ६१ ॥ दंतादुन्नतेऽर्थे डुरो भवति । दंता उन्नता अस्य संति दंतुरः । अन्यत्र—दंतावान् ।

* मेधारथाद्वेरः ॥६२॥ आभ्यामिरो वा स्यात् । मेधिरः । मेधावी । मेधावान् । रथिरः । रथि-

कः । रथी । रथवान् ।

* कृपाहृदयाद्दालुः ॥ ६३॥ आभ्यामालुर्वा स्यात् । कृपालुः । कृपावान् । हृदयालुः । हृदयी । हृदयवान् ।

केशाद्वः ॥ ६४॥ केशान्मत्वर्थे वा वो भवति । केशवः । केशिकः । केशी । केशवान् ।

* गांड्यादिभ्यः ॥६५॥ एभ्यो वो वा स्यात् । गांडीवं । गांडिवं । अजगवं धनुः । हिरण्यवः । हिरण्यवान् ।

*तमिस्रार्णवोर्जस्वलोर्जस्विनवत्सलांशलाः ॥ ६६ ॥ एते निपात्यंते । तमोऽस्यामस्ति तमिस्रा रात्रिः । तमसो रः उकश्च इत्वं । अर्णोऽस्मिन्नस्ति अर्णवः समुद्रः । अर्णसो वः सस्य च खं । ऊर्जोऽस्यास्त्यस्मिन् वा ऊर्जस्वलः । ऊर्जस्वी । ऊर्जसः अस्वलास्विनौ त्यौ निपात्यौ । वत्सः स्नेहोऽस्यास्ति वत्सलः साधुः । अंशो बलमस्यास्ति । अंशलः पुत्रः । वत्सांशाभ्यां कामवति बलत्यो निपात्यः ।

* गोम्यर्च्ये ॥ ६७ ॥ गोशब्दात् मिन् निपात्यतेऽर्च्येऽर्थे । गावोऽस्य संतीति गोमी । गोमानन्यत्र । स्वामीश्वराधिपतीति निर्देशात् स्वमैश्वर्यमस्यास्तीति मिन्नंतं स्वामीति सिद्धं दीत्वं च निपात्यते ।

* ओऽभ्रादिभ्यः ॥६८॥ अभ्रादिभ्यः अत्यो भवति । अभ्राण्यस्मिन् संति अभ्रं नभः । अर्शसः । उरसः । जटः ।

* हीनात् स्वांगात् ॥ ६९ ॥ स्वांगाद्धीनात् अत्यो भवति । खंडः कर्णोऽस्यास्ति कर्णः । छिन्ना नासिका अस्यास्ति नासिकः । खंजः पादोऽस्यास्तीति पादः । हीनादिति किं? कर्णवान् ।

+ शृंगाद्वारकः ॥ ७० ॥ शृंगाद्वारको वा स्यात् । शृंगारकः । शृंगवान् । शृंगी ।

+ फलबर्हाच्चेनः ॥ ७१ ॥ आभ्यां शृंगाच्च इनो वा स्यात् । फलिनः । फलवान् । बर्हिणः । बर्हवान् । शृंगिणः ।

* मलादीमसश्च ॥७२॥ मलादीमसो भवति इनश्च वा । मलीमसः । मलिनः । मलवान् ।

× पर्वमरुतस्तः ॥ ७३ ॥ आभ्यां तो वा स्यात् । पर्वतः पर्ववान् । मरुतः । मरुत्वान् ।

* मायामयामेधास्रक्तपोऽसो विन् ॥७४॥ मायादेरसंताच्च विन्वा स्यात् । मायावी । मायावान् । आमयावी । आमयावान् । मेधावी । स्रग्वी । तपस्वी । यशस्वी । तेजस्वी । वर्चस्वी ।

* नौशिखादिभ्यां ठेनौ ॥७५॥ नावादिभ्यः शिखादिभ्यश्च ठेनौ वा स्तः । नाविकः । नौमान् । कुमारिकः । कुमारीवान् । इन्—शिखी । शिखावान् । माली । मालावान् । मेखली । मेखलावान् । संज्ञी । संज्ञावान् ।

*अतोऽनेकाचः ॥७६॥ अकारांतादनेकाचः ठेनौ वा स्तः । दंडिकः । दंडी । दंडवान् । छत्रिकः । छत्री । छत्रवान् । अनेकाच इति किं? खवान् । स्ववान् ।

व्रीह्यादिभ्यः ॥ ७७॥ एभ्यः ठेनौ वा स्तः । व्रीहिकः । व्रीही । व्रीहिमान् । मायिकः । मायी । मायावान् । मायावी ।

+अशिरसोऽशीर्षश्च ॥ ७८ ॥ अशिरसः ठेनौ वा स्तः । अशीर्षादेशश्च । अशीर्षिकः । अशीर्षी । अशीर्षवान् ।

+भावेऽर्थार्थोतात् ॥ ७९ ॥ भावे वर्तमानादर्थादर्थांताच्च तौ स्तः । अर्थनमर्थः । सोऽस्यास्ति अर्थिकः । अर्थी । प्रत्यर्थिकः । प्रत्यर्थी ।

*तुंदादिव्रीहेरिलश्च ॥ ८० ॥ तुंदादेर्व्रीहिशालिनश्च इलो भवति तौ च । तुंदिलः । तुंदिकः । तुंदी । तुंदवान् । उदरिलः । उदरिकः । उदरी । व्रीहि-शालिकः । शालिकः । शालिमान् । कच-

मिकः । कलमिकः । कलमी ।

*स्वांगाद्विवृद्धौ ॥ ८१ ॥ स्वांगात् विवृद्धि-विशिष्टात् इलो भवति तौ च वा । विवृद्धौ महांतौ कर्णौ अस्य स्तः कर्णिकः । कर्णिलः । कर्णी । कर्णवान् । ओष्ठिलः । ओष्ठिकः । ओष्ठीत्यादि ।

*हिमादिभ्यो यः ॥ ८२ ॥ एभ्यो यो वा भवति । हिम्यः । हिमवान्–गिरिः । गुण्यः । गुणवान् ।

*रूपाच्छस्ताहते ॥ ८३ ॥ रूपाद् यो वा भवति शस्ते आहते चार्थे । प्रशस्तरूपमस्यास्ति रूप्यो गौः । आहतं रूप्यमस्यास्ति रूप्यः कार्षापणः । रूपवानन्यत्र ।

गोपूर्वाट्ठञ् नित्यं ॥ ८४ ॥ गोपूर्वात् शब्दात् नित्यं ठञ् स्यात्।गौशतिकः।गौलक्षिकः।

निष्काच्छतसहस्रात् ॥ ८५ ॥ निष्क-पूर्वात् शतादेष्ठञ् स्यात् । नैष्कशतिकः । नैष्क-सहस्रिकः । निष्कादिति किं ? शती । सहस्री ।

*एकादेर्यात् ॥ ८६ ॥ एकपूर्वाद् यसात् ठञ् भवति नित्यं । एका गौः–एकगवः । सोऽस्यास्ति–ऐकगविकः । ऐकशतिकः ।

+ सर्वादेरिन् ॥ ८७ ॥ सर्वपूर्वाद् यसात् इन् स्यात् । सर्वधनी । सर्वकेशी ।

*द्वंद्वरुग्गर्ह्यात् प्राणिन्यस्वांगात् ॥ ८८ ॥ द्वंद्वाद् रुग्वाचकात् गर्ह्याच्च स्वांगात् इन् स्यात् प्राणिनि गम्यमाने । कटककेयूरिणी । शंखनू-पुरिणी । रुजः–कुष्ठी । किलासी । गर्ह्यात्–ककु-दावर्ती । काकतालुकी । प्राणिनीति किं ? पुष्प-फलवान् वृक्षः। अस्वांगादिति किं ? स्तनकेशवती।

*वातातीसारपिशाचात् कुक् च ॥ ८९ ॥ वातादेरिन् स्यात् कुक् चागमः । वातकी । अतीसारकी । पिशाचकी ।

ढटो वयसि ॥ ९० ॥ ढटंतादिन् स्यात् वयसि गम्यमाने । पंचमोऽस्यास्ति मासः संवत्सरो वा पंचमी उष्ट्रः । नवमी । दशमी ।

सुखादेः ॥ ९१ ॥ सुखादिभ्यः मत्वर्थे नित्यमिन् स्यात् । सुखी । दुःखी । कृच्छ्री ।

मालात् क्षेपे ॥९२॥ मालाशब्दादिन् स्यात् क्षेपे । माली ।

धर्मशीलवर्णांतात् ॥ ९३ ॥ धर्माद्यं-तादिन् स्यात् । तपस्विनां धर्मः तपस्विधर्मः । सोऽस्यास्तीति तपस्विधर्मी । तपस्विशीली। क्षत्रि-यधर्मी । क्षत्रियशीली । ब्राह्मणवर्णी । शूद्रवर्णी ।

+बाहूरोर्बलात् ॥ ९४ ॥ बाहूरुभ्यां परात् बलान्मत्वर्थे इन् स्यात् । बाहुबली । ऊरुबली ।

पुष्करादेर्देशे ॥ ९५ ॥ पुष्करादिभ्य इन् स्यात् देशेऽर्थे । पुष्कराण्यस्मिन् सन्ति पुष्करिणी देशः । पद्मिनी । उत्पलिनी । देश इति किं ? पुष्करवान् हस्ती ।

मन्मात् स्त्रौ ॥९६॥ मन्नंतात् मांताच्च इन् भवति स्त्रौ।दामिनी।वर्मिणी।भामिनी । कामिनी ।

*हस्तदन्तकराज्जातौ ॥ ९७ ॥ हस्तादेरिन् स्यात् जातौ । हस्ती । दंती । करी । जाताविति किं ? हस्तवान् ।

*वर्णी ब्रह्मचारी ॥ ९८ ॥ वर्णशब्दात् मत्वर्थे इन् निपात्यते ब्रह्मचारी चेदभिधेयो भवति । वर्णो ब्रह्मचर्यमस्यास्ति वर्णी ब्रह्मचारी ।

तुंदिवटिवलेर्भः ॥ ९९ ॥ एभ्यो भो भवति । तुंदिभः । वटिभः । वलिभः ।

*शंभ्यां ॥ १०० ॥ आभ्यां भो भवति । कंभः । शंभः ।

+ वयस्तितुताः ॥१०१॥ ताभ्यां वादयो भवंति । कंवः । शंवः । कंयः । शंयः। कंतिः। शंतिः । कंतुः । शंतुः । कंतः । शंतः ।

+ ऊर्णाहंशुभंम्यश्च युस् ॥१०२॥ एभ्य-

स्ताभ्यां च युस् भवति । ऊर्णायुः । अहंयुः । शुभंयुः । कंयुः । शंयुः ।

सूक्तसाम्नोश्छः ॥१०३॥ सूक्ते सामनि चाभिधेये मृदो मत्वर्थे छो भवति । अच्छावाक् शब्दोऽस्मिन्नस्ति अच्छावाकीयं । मैत्रावरुणीयं सूक्तं । यज्ञीयं । वारतंतवीयं साम ।

वोप् चाध्यायानुवाके ॥ १०४ ॥ अध्यायेऽनुवाके चाभिधेये मृदो मत्वर्थे छो भवति तस्य चोप् वा । गर्दभांडशब्दोऽस्मिन्नध्यायेऽनुवाके वा गर्दभांडीयः, गर्दभांडः—अध्यायोऽनुवाको वा । कूर्चमुखीयः । कूर्चमुखः । उच्छिष्टीयः । उच्छिष्टः ।

विमुक्तादेरण् ॥१०५॥ विमुक्तादिभ्योऽण् स्यात् अध्यायादावभिधेये । विमुक्तशब्दोऽस्मिन्नस्ति वैमुक्तः । दैवासुरः । राक्षोसुरः ।

घोषदादेर्वुन् ॥ १०६ ॥ अस्माद् वुन् स्यात् अध्यायादौ । घोषदशब्दोऽस्मिन्नस्ति घोषदकः । इषत्वकः ।

धनहिरण्ये कामे ॥ १०७ ॥ आभ्यामीबंताभ्यां कामेऽर्थे वुन् स्यात् । धने कामः धनकः । हिरण्यकः ।

* किंखिबहोरद्व्यादिवैपुल्यात् ॥ १०८ ॥ किमः खिसंज्ञेभ्यो द्व्यादिवर्जतेभ्यः बहुशब्दाच्चावैपुल्यवाचिनः"ते सुपः"इत्यतः प्राक् वक्ष्यमाणास्त्याः भवंति इत्येषोऽधिकारो ज्ञेयः । तत्रैवोदाहरिष्यामः । अद्व्यादिग्रहणं किं ? द्वाभ्यां । द्वयोः । त्वत् । मत् । भवतः । बहोः । सूपात् ।

इदम इश् ॥ १०९ ॥ इदम इश् भवति तसादौ । अस्मात् । इतः । इह ।

एतेतौ र्थोः ॥ ११० ॥ इदमः एत इत इत्येतौ आदेशौ स्तः रेफादौ थकारादौ च परतः । एतर्हि । इत्थं ।

एतदः ॥ १११ ॥ एतदस्तौ स्तः रेफथकारादौ परतः । एतस्मिन्ननद्यतने काले एतर्हि । इत्थं ।

अश् ॥ ११२ ॥ एतदोऽश् भवति तसादौ । एतस्माद् अतः । एतस्मिन् अत्र ।

कायास्तस् ॥ ११३॥ किमादेः कांतात् तस् भवति । कस्मात्—कुतः । सर्वतः । विश्वतः। बहुभ्यो—बहुतः ।

तसेः ॥ ११४ ॥ परस्य किमादिभ्यः आद्यादिभ्यस्तसीत्येवमादिना विहितस्य तसेस्तस् भवति । कुतः आगतः । ततः आगतः ।

* पर्यभेः सर्वोभये ॥ ११५ ॥ पर्यभिभ्यां सर्वोभयेऽर्थे तस् भवति । परितः । अभितः

ईपस्त्रः ॥ ११६ ॥ ईबंतात् त्रो भवति। सर्वस्मिन्—सर्वत्र । तत्र । यत्र । बहुत्र।

* किमोऽश्च ॥११७॥ किमः अश् भवति त्रश्च । कस्मिन्—क, कुत्र ।

इदमो हः ॥११८ ॥ इदमः हो भवति । अस्मिन्—इह ।

* भवत्वायुष्मद्दीर्घायुर्देवानांप्रियैकार्थाच्च ॥ ११९ ॥ भवत्वादिसमानाधिकरणात् किमादेः त्रो भवति तश्च । को भवान् । कुत्र भवान् । कुतो भवान् । यो भवान्—यत्रभवान् । यतो भवान् । स भवान्। ततो भवान् । ततो भवंतौ। ततो भवंतः । तं भवतं-तत्रभवंतं । ततो भवंतं । तौ भवंतौ । तत्रभवंतौ । ततो भवंतौ । तान् भवतः । तत्र भवतः । ततो भवतः । एवं सर्वत्र। स आयुष्मान् । तत्र आयुष्मान् । तत आयुष्मान् । स दीर्घायुः। तत्रदीर्घायुः। ततोदीर्घायुः। स देवानां प्रियः। तत्रदेवानांप्रियः । ततो देवानांप्रियः।चशब्दादन्यत्रापि।अनेन गतः इतो गतः।

*कालेऽनद्यतनेर्हिः॥१२०॥ किमादेरनद्यतने

काले र्हिस्त्यो भवति । कस्मिन्ननद्यतने काले कर्हि । यस्मिन्ननद्यतने काले यर्हि । तर्हि । अनद्यतन इति किं ? कस्मिन् काले कदा ।

*इदमः ॥ १२१ ॥ इदमः र्हिर्भवति । अस्मिन् काले एतर्हि ।

*अधुना ॥१२२॥ इदमोऽधुना त्यो भवति। अस्मिन् काले अधुना ।

* दानीं ॥ १२३ ॥ तस्माद्दानीं भवति । अस्मिन् काले इदानीं ।

*तदः ॥ १२४ ॥ तदः दानीं भवति । तस्मिन् काले तदानीं ।

* यत्किंनत्सर्वैकान्याद्दा ॥१२५॥ यदादेर्दात्यो भवति । यस्मिन् काले—यदा । कदा । तदा । सर्वदा । एकदा । अन्यदा ।

*सदासद्यः ॥१२६॥ सदा सद्यस् इत्येतौ शब्दौ निपात्यौ । सर्वशब्दाद्दानिपात्यः । सभावश्च । सर्वस्मिन् काले सदा । समानात् द्यस्त्यः । सभावश्च । समाने काले अहनि वा सद्यः ।

*पूर्वान्यान्यतरेतरापराधरोत्तरेभ्योऽह्येद्युस् ॥ १२७ ॥ एभ्यः अहनि वर्तमानेभ्यः एद्युस् भवति अस्मिन्नहनि । पूर्वेद्युः । अन्येद्युः । अन्यतरेद्युः । इतरेद्युः । अपरेद्युः । अधरेद्युः । उत्तरेद्युः ।

* द्युश्चोभयात् ॥ १२८ ॥ उभयाद् द्युस् भवति एद्युश्च । उभयस्मिन्नहनि-उभयद्युः,उभयेद्युः

* परेद्यवि ॥१२९॥ परशब्दात् एद्यवि त्यो निपात्यः । परस्मिन्नहनि परेद्यवि ।

* परुत्परार्यैषमोऽब्दे ॥१३०॥ एते निपात्यन्तेऽब्दे वर्षे गम्यमाने । पूर्वशब्दादुत्यः परादेशश्च।पूर्वस्मिन् संवत्सरे परुत्।पूर्वतर शब्दाद् आरित्यः परभावश्च । पूर्वतरे संवत्सरे परारि । इदमः समसण् इशादेशश्च । अस्मिन् संवत्सरे-एषमः।

*प्रकारे था ॥ १३१ ॥ सामान्यापेक्षाविशेषाभिर्देशः प्रकारः । किमादिभ्यः प्रकारेऽर्थे था भवति । सर्वेण प्रकारेण-सर्वथा । यथा । तथा ।

* कथमित्थं ॥ १३२ ॥ किमिदमेतद्भ्यः थम् निपात्यते । केन प्रकारेण—कथं । अनेन एतेन वा प्रकारेण—इत्थं ।

* ते सुपः ॥१३३॥ ते प्रागुक्ताः तसादयः सुप्संज्ञकाः भवंति । तथा चैवोदाहृतं ।

*दिग्भ्यो वाक्केभ्योऽस्तात् दिग्देशकाले ॥ १३४ ॥ दिक्शब्देभ्यो वाक्केवंतेभ्यो दिशि देशे काले च वर्तमानेभ्योऽस्तात् भवति । पूर्वा दिग् रमणीया, पूर्वो देशः कालो वा रमणीयः । पुरस्ताद् रमणीयं । पूर्वस्याः दिशः पूर्वस्माद्देशात् कालाद्वा आगतः । पुरस्तादागतः । पूर्वस्यां दिशि पूर्वस्मिन् देशे काले वा वसति पुरस्ताद् वसति । एवमधस्ताद् रमणीयमित्यादि । वाक्केभ्य इति किं ? पूर्वं देशं गतः । दिग्देशकाल इति किं ? पूर्वस्मिन् गिरौ वसति।

*परावरात् स्तात् ॥१३५॥ आभ्यां वाक्केवंताभ्यां दिग्देशकालेषु वर्तमानाभ्यां स्ताद् भवति । परा दिग् रमणीया । परो देशः कालो वा रमणीयः- परस्ताद् रमणीयं । परस्तादागतः। परस्ताद् वसति । अवरस्ताद् रमणीयं । अवरस्तादागतः । अवरस्ताद् वसति ।

*दक्षिणोत्तराच्चातस् ॥ १३६ ॥ आभ्यां ताभ्यां च वाक्केवंताभ्यां दिग्देशकालेषु वर्तमानाभ्यां अतस् भवति । दक्षिणतो रमणीयं । दक्षिणत आगतः । दक्षिणतो वसति । उत्तरतो रमणीयं । उत्तरत आगतः । उत्तरतो वसति । परतो रमणीयं । अवरतो रमणीयमित्यादि ।

* अधराच्चात् ॥१३७॥ अस्मात् ताभ्यां च आद् भवति दिगादौ । अधराद् रमणीयं ।

अपरादागतः । अपराद् वसति । दक्षिणाद् रमणीयं । उत्तराद् रमणीयमित्यादि ।

* पश्चोऽपरस्य दिगादेश्चाति ॥ १३८ ॥ केवलस्यापरशब्दस्य दिग्पूर्वस्य च पश्चादेशो भवति आतित्ये परे । अपरा दिग् देशः कालो वा रमणीयं पश्चात्, पश्चादागतः। पश्चाद् वसति । दिगादेः—दक्षिणाऽपरा दिग् देशः कालो वा रमणीयः दक्षिणपश्चाद् रमणीयं । उत्तरपश्चाद् रमणीयमित्यादि ।

* वार्धे धौ ॥१३९॥ केवलस्यापरशब्दस्य दिगादेश्च पश्चो वा भवति अर्द्धे धौ परतः । अपरमर्द्धं—पश्चार्द्धं । अपरार्द्धं । दक्षिणापरस्यार्द्धं—दक्षिणपश्चार्द्धं । दक्षिणापरार्द्धं ।

* उपर्युपरिष्टात् ॥१४०॥ एतौ निपात्यौ । ऊर्ध्वशब्दाद् रिरिष्टातौ त्यौ उपादेशश्च । ऊर्ध्वा दिग् रमणीया–उपरि रमणीयं । उपरिष्टाद् रमणीयं । उपर्यागतः । उपरिष्टादागतः। उपरि वसति । उपरिष्टात् वसति ।

* वैनोऽदूरेऽकायाः ॥ १४१ ॥ दिक्शब्दात् अदूरे दिगादौ वर्तमानात् कांतवर्जितात् एनो वा भवति । अस्मात्पूर्वा दिगदूरा रमणीया पूर्वेणास्य रमणीयं । पूर्वेणास्य वसति । एवं—अपरेण, दक्षिणेन, उत्तरेण । अदूर इति किं? हिमवतो दक्षिणाद् वसति । अकाया इति किं? दक्षिणादागतः ।

* अंचेरुप् ॥ १४२ ॥ अंचत्यंतात् प्राग्दिग्शब्दात् वाकेवंतात् दिगादौ वर्तमानात् विहितस्यास्तातः एनस्य वा उप् भवति । प्राची दिग् दूराऽदूरा वा रमणीया–प्राग्रमणीयं । प्रागागतः । प्राग् वसति । एवं—प्रत्यग् । अपाक् । उदक् ।

*दक्षिणाद् वाऽऽः ॥१४३॥ दक्षिणाद् कावर्जितात् दिगादौ वर्तमानात् आत्यो वा भवति । दक्षिणा रमणीयं । दक्षिणाद् रमणीयमित्यादि ।

*आऽऽही दूरे ॥ १४४ ॥ दक्षिणादकांतात् दूरेऽर्थे आऽऽही इत्येतौ त्यौ स्तः दिगादौ। दक्षिणा रमणीयं, दक्षिणाहि रमणीयं । दक्षिणा वसति, दक्षिणाहि वसति । दूरे इति किं ? दक्षिणतः । दक्षिणाद् ।

*उत्तराद् वा ॥ १४५ ॥ उत्तरादकांताद् आऽऽही वा स्तः । उत्तरा रमणीयं । उत्तराहि रमणीयं । उत्तरा वसति । उत्तराहि वसति । उत्तरतः । उत्तरात् ।

*पूर्वाधरावराणां पुरधवोऽसि ॥ १४६ ॥ पूर्वादीनां पुरादयो भवंत्यसि परतः दिगादौ । पुरो रमणीयं । पुर आगतः । पुरो वसति । अधो रमणीयं । अधः आगतः । अधो वसति । अवो रमणीयं । अवः आगतः । अवो वसति।

* अस्ताति ॥ १४७ ॥ तेषां पूर्वादीनां पुरादयो भवंत्यस्ताति परतः । पुरस्तात् रमणीयं पुरस्तादागतः । पुरस्ताद् वसति । एवं—अधस्तात् । अवस्तात् ।

*स्योर्विधार्थे धा ॥ १४८ ॥ स्यिसंज्ञकात् विधार्थे धा स्यात्। एकेन प्रकारेण-एकधा। द्विधा । त्रिधा । चतुर्धा । बहुधा भुंक्ते ।

*विचाले च ॥ १४९ ॥ विचाले द्रव्यस्य संख्यांतरापादनेऽर्थे स्येर्धा स्यात्। एको राशिर्द्वि क्रियते- द्विधा क्रियते । त्रिधा । अनेकमेकं कुरु एकधा कुरु ।

* वैकाद् ध्यमुञ् ॥१५०॥ एकाद्वा ध्यमुञ् भवति विधार्थे विचाले च । एकेन प्रकारेण–ऐकध्यं । एकधा भुंक्ते । अनेकमेकं करोति–ऐकध्यं, एकधा करोति ।

*द्वित्रेर्धमुञ् ॥ १५१ ॥ आभ्यां धमुञ् स्याद्

वा विधार्थादौ । द्वैधं । त्रैधं । द्विधा । त्रिधा ।

*एधात् ॥ १५२ ॥ ताभ्यां एधात् भवति विधार्थादौ । द्वेधा । त्रेधा ।

*तद्वति धण् ॥ १५३ ॥ द्वित्रिभ्यां तद्वति प्रकारवति विभागवति चार्थे धण् स्यात् । द्वौ प्रकारौ द्वौ भागौ वा एषां-द्वैधानि । त्रैधानि ।

* याप्ये पाशः ॥१५४॥ याप्ये कुत्स्येऽर्थे मृदः पाशो भवति । याप्यो वैयाकरणः-- वैयाकरणपाशः । तार्किकपाशः ।

*वांशेऽष्टमान्ञः ॥ १५५ ॥ अष्टमशब्दादंशे भागे वर्तमानात् स्वार्थे ञत्यो वा भवति । अष्टम एव--आष्टमो भागः । अष्टमः ।

*षष्ठात् ॥ १५६ ॥ षष्ठादंशे वर्तमानात् स्वार्थे ञो वा भवति । षाष्ठः । षष्ठः ।

*कश्च माने ॥ १५७ ॥ षष्ठान्मानेऽर्थे वर्तमानात् को भवति ञश्च वा । षष्ठ एव षष्ठकः । षाष्ठः । षष्ठः ।

* एकादाकिंश्चासहाये ॥ १५८ ॥एकशब्दात् आकिन् भवत्यसहाये कश्च वा । एक एव एकाकी । एककः । एकः ।

*तिलात् पिंजपंजौ निष्फले ॥ १५९ ॥ तिलात् निष्फलेऽर्थे पिंजपंजौ त्यौ स्तः । निष्फलस्तिलः--तिलपिंजः । तिलपंजः ।

*तमः प्रकृष्टे मिङश्च ॥ १६० ॥ मिङन्तान्मृदश्च प्रकृष्टेऽर्थे तमो भवति । सर्वे इमे पचंति अयमेषां प्रकृष्टं पचति-पचतितमां । जल्पतितमां । मृदः--सर्वे इमे आढ्या अयमेषां प्रकृष्टः आढ्यः आढ्यतमः । सुकुमारतमः ।

*द्विविभज्ये तरः ॥ १६१ ॥ द्वित्वे विभज्ये च पृथक्कर्तव्ये सति प्रकृष्टे तरो भवति । द्वाविमौ पचतः--अयमनयोः प्रकृष्टं पचति--पचतितरां । पठतितरां । पटुतरः । पाठकतरः । विभज्ये--सांकाश्यकेभ्यः पाटलिपुत्रकाः पचंतितरां । पठंतितरां । आढ्यतराः । अभिरूपतराः ।

*तौ ञः ॥१६२॥ तौ तकारादौ त्यौ तमतरौ ञसंज्ञौ स्तः । कुमारितमा । कुमारितरा ।

*गुणांगाद्विष्ठेयसू ॥ १६३ ॥ गुणांगमप्रधानं यस्य तस्मात्परयोः तमतरयोः इष्ठेयसू वा स्तः । पटिष्ठः । पटुतमः । पटीयान् । पटुतरः ।

*प्रशस्यस्य श्रः॥१६४॥प्रशस्यशब्दस्य श्रो भवति तयोः परतः । सर्वेषामयं प्रशस्यः--श्रेष्ठः । अयमनयोरस्माद्वा प्रशस्यः--श्रेयान् ।

* ज्यः ॥ १६५ ॥ तस्य ज्यादेशो भवति तयोः परतः । ज्येष्ठः । ज्यायान् ।

*वृद्धस्य ॥ १६६ ॥ वृद्धशब्दस्य ज्यो भवति तयोः परतः । सर्वेषामनयोरस्माद्वाऽयं वृद्धः--ज्येष्ठः । ज्यायान् ।

वाढांतिकस्य साधनेदं ॥ १६७ ॥ वाढांतिकयोः साध नेदावादेशौ स्तः तयोः परतः । सर्वेषामयं वाढं जल्पति--साधिष्ठं । साधीयः । इदमेषामनयोरस्माद्वांतिकं--नेदिष्ठं । नेदीयः ।

युवाल्पस्य कन् वा ॥१६८ ॥ युवाल्पयोः कन् वा भवति तयोः परतः । सर्वेषामयं प्रकृष्टो युवा--कनिष्ठः । यविष्ठः । अयमनयोरस्माद्वा प्रकृष्टो युवा-- कनीयान् । यवीयान् । अल्पिष्ठः । अल्पीयान् ।

विन्मतोर्लुप् ॥ १६९ ॥ एतयोर्लुब्भवति तयोः परतः । सर्वेषां स्रग्वीणामयं प्रकृष्टः स्रग्वी--स्रजिष्ठः । अयमनयोरस्माद्वा स्रजीयान् । अयमेषां त्वग्वतां प्रकृष्टःत्वग्वान्--त्वचिष्ठः । त्वचीयान् ।

प्रशस्ते रूपः ॥ १७० ॥ मिङन्तान्मृदश्च प्रशस्तेऽर्थे रूपो भवति।प्रशस्तं पचति--पचतिरूपं। वैयाकरणरूपः । पंडितरूपः ।

* आसिद्धं प्रादेर्देश्यदेशीयकल्पाः॥ १७१ ॥ ईषदसिद्धं—आसिद्धं । तस्मिन्नर्थे प्रावंतर्वर्जिताद् देश्यादयो भवंति । आसिद्धं ईषदसमाप्तं पचति पचतिदेश्यं, पचतिदेशीयं, पचतिकल्पं । पटुदेश्यः, पटुदेशीयः, पटुकल्पः । अप्रादेरिति किं ? तमादिभ्यो देश्यादयो न भवंति । एभ्यस्तु ते स्युः । पटुदेश्यतमः, पटुदेश्यतरः, पटुदेश्यरूपः ।

वा सुपां बहुः प्राक् ॥ १७२ ॥ आसिद्धे सुबंतात् प्राक् बहुर्वा स्यात् । आसिद्धः पटुः बहुपटुः । पटुदेश्यः । बहुमुक्तं, मुक्तदेशीयं ।

+न प्रादिः कजोऽछि नादिभ्यः ॥ १७३॥ छिन्नादिवर्जितात् यः कजत्यः तदंतात् प्रादिर्न भवति । अयमेषामनयोरस्माद् वा प्रकृष्टः पटुः पटुकः । प्रशस्तः पटुः- पटुकः । कज इति किं? कुटीरतमः । अच्छिन्नादिभ्य इति किं ? कुत्सितो ज्ञातो वा छिन्नः-छिन्नकः । अयमेषामनयोरस्माद्वा छिन्नः-छिन्नकः । कजन्तमादयः स्युःछिन्नकतमः, छिन्नकतरः, छिन्नकरूपः, भिन्नकतमः । भिन्नकदेश्यः ।

×अनत्यंते ॥ १७४ ॥ अनत्यंतेऽर्थे यस्त्यस्तदंताद् प्रादिर्न भवति। अनत्यंतं भिन्नं-भिन्नकं । इदमेषां प्रकृष्टं भिन्नं-भिन्नकं ।

एवात् कज् ॥ १७५ ॥ आ इवशब्दात् कजधिकृतो वेदितव्यः । तत्रैवोदाहरिष्यामः ।

* मिङ्सेरक् प्राक्टेः ॥ १७६ ॥ मिङः खिसंज्ञकस्य च टेः प्राक् अक् त्यो भवति । कुत्सितमज्ञातं वा पचति पचतकि । पठतकि । सर्वके । विश्वके । यके । तके ।

×युष्मदस्मदोः सुपोऽभोसि ॥ १७७॥ एतयोः सुबंतस्य टेः प्राक् अग् भवति अभोसि परतः । त्वयका । मयका । त्वयकि । मयकि । युष्मदस्मदोरिति किं ? तकया । यकया । अभोसीति किं ? युवकाभ्यां । आवकाभ्यां । युष्मकाभिः । अस्मकाभिः । युवकयोः । आवकयोः । युष्मकासु । अस्मकासु ।

* क्षेः को दिश्च ॥ १७८ ॥ क्षेः प्राक् टेग् भवति ककारस्य च दिः । कुत्सितमज्ञातं वा उच्चैः—उच्चकैः । नीचकैः । धिक् । धकित् । पृथक्--पृथकत् ।

÷तूष्णीकां ॥ १७९॥ तूष्णीमः काम् निपात्यते । कुत्सितमज्ञातं वा तूष्णीं—तूष्णीकामास्ते ।

* कुत्सिताज्ञातात्पे ॥ १८० । कुत्सिताद्यर्थेषु यथाविहितं त्यो भवति । कुत्सितोऽज्ञातोऽल्पो वाऽश्वः-अश्वकः । घृतकं । जल्पतकि ।

* अनुकंपातन्नीत्योः ॥ १८१॥ अनुकंपायां तन्नीतौ च मृदो मिङंतात् कजादयः स्युः । अनुकंपितः पुत्रः पुत्रकः । वत्सकः । अनुकंपितं याचते—याचतकं । तन्नीतौ- पुत्रक उत्संगे उपविश । कर्दमकेनासि दिग्धकः । तूष्णीकां तिष्ठ । हंत ते धानकाः । तिलकाः । एहकि । अद्धकि ।

* बह्वचो नृस्त्रोर्वाऽजातेष्ठघेलाः ॥ १८२ ॥ बह्वचो मृदः नृनाम्नः पुरुषवाचिनः जातिवर्जितात् ठघेला वा भवंति । अनुकंपितो देवदत्तः देविकः । देवियः । देविलः । देवदत्तकः । बह्वच इति किं? रामकः । सामकः । नृस्त्रोरिति किं ? सुसीमकः । अजातेरिति किं ? महिषकः। वराहकः । शूकरकः।

अडवुञोपादेः ॥ १८३ ॥ बह्वचो नृस्त्रोरजादेरुपपूर्वात् अडवुतौ त्यौ स्तः ते च वा । अनुकंपितः उपेंद्रदत्तः—उपडः । उपकः । उपिकः । उपियः । उपिलः । उपेंद्रदत्तकः ।

×उकोऽचः खं प्रकृत्या च ॥ १८४ ॥ उगंतात् परस्यानुकंपादौ विहितस्य त्यस्याजादेरादेः खं भवति प्रकृत्या च तदुगंतं स्यात् । वायुदत्तः

वायुकः।वायुयः।वायुलः।मातृकः।मातृयः। मातृलः ।

* कजुपि घोः ॥ १८५ ॥ बह्वचो नृखोर्यद्व तस्य घोषित्युपि सति ततः कज् भवति । देवदत्तः, देवः । अनुकंपितो देवः-देवकः। देवका । जिनकः । जिनका ।

* उप् चाजिनात् ॥ १८६ ॥ अजिनांतात् नृखोः कज् भवति घोश्चोप् । व्याघ्राजिनोऽनुकंपितः—व्याघ्रकः । सिंहकः । वृककः ।

* अषडेकाचप्राक्पदस्याचि ॥ १८७ ॥ षड्वर्जितैकाच्पूर्वपदस्य घोरुप् भवति अचि । अनुकंपितो वाग्दत्तः-वाचिकः।वाचियः। वाचिलः। त्वाचिलः। त्वाचिकः। शुचिकः । पण्णिषधः किं ? अनुकंपितःषडंगुलिः--षडिकः । षडियः । षडिलः।

* द्वितीयादचः ॥१८८॥ द्वितीयादचः परस्य शब्दस्योब्भवति अनुकंपायां विहितेऽचि परतः। अनुकंपितो जिनदत्तः-जिनिकः । जिनियः । जिनिलः। उपडः। उपकः। उपिकः । उपियः।उपिलः।

*तेनैच ॥ १८९ ॥ तेन द्वितीयेनाचा सह ततः परस्य शब्दस्योब् भवत्यचि द्वितीयोऽच् एच् यदि स्यात् । अनुकंपितो लहोडः-लहिकः। लहियः । लहिलः । कपोतरोमाः--कपिकः । कपियः । कपिलः । गुरुदत्तः, गुरुकोऽन्यत्र ।

शेवलसुपरिविशालवरुणार्यमादेस्तृतीयात् ॥ १९० ॥ शेवलादिपूर्वात् नृखोस्तृतीयादचः परस्य शब्दस्योब्भवत्यचि । अनुकंपितः शेवलदत्तः--शेवलिकः । शेवलियः । शेवलिलः । सुपरिमितः--सुपरिकः । सुपरियः । सुपरिलः। विशालदत्तः विशालिकः। विशालियः। विशालिलः । वरुणदत्तः-वरुणिकः । वरुणियः । वरुणिलः । अर्यमदत्तः-अर्यमिकः । अर्यमियः । अर्यमिलः ।

* कचित्तुर्यात् ॥ १९१ ॥ कचित्तुर्यादचः परस्य शब्दस्योब्भवत्यचि । अनुकंपितो बृहस्पतिदत्तः-बृहस्पतिकः। बृहस्पतियः। बृहस्पतिलः ।

* प्राक्पदस्य वा ॥१९२॥ पूर्वपदस्य कचिदुप् स्यात् वाचि । अनुकंपितो देवदत्तः-दत्तिकः।दत्तियः।दत्तिलः।देविकः। देवियः । देविलः ।

ह्रस्वे ॥ १९३ ॥ ह्रस्वेऽर्थे कादयः स्युः । ह्रस्वः पटः-पटकः । दंडकः । पुरुषकः ।

* कुटीशुंडाद्रः ॥१९४॥ आभ्यां रो भवति । ह्रस्वा कुटी-कुटीरः । शुंडीरः ।

* शम्या रुश्च ॥१९५॥ शमीशब्दाद्रुर्भवति रश्च । ह्रस्वा शमी-शमीरुः । शमीरः ।

* कुतुपः॥१९६॥ कुतूशब्दाडुपो निपात्यते। ह्रस्वा कुतूः-कुतुपः ।

कासूगोण्यास्तरट् ॥ १९७ ॥ आभ्यां ह्रस्वे तरट् स्यात् । ह्रस्वा कासूः--कासूतरी । गोणीतरी ।

* वत्सोक्षाश्वर्षभाद्ध्रासे॥१९८॥ एभ्यस्तरट् स्याद्ध्रासे तनुत्वे गम्यमाने । ह्रसितो वत्सः वत्सतरः । उक्षतरः । अश्वतरः । ऋषभतरः ।

*किंयत्तदन्याद्द्वयोर्निर्द्धार्ये डतरः॥१९९॥ किमादेर्द्वयोरेकस्मिन्निर्धार्ये डतरो भवति । को भवतोः कठः पटुः कर्ता देवदत्तो वा--कतरः । यतरः । ततरः । अन्यतरः । द्वयोरिति किं ? योऽस्मिन् ग्रामे मुख्यः स आगच्छतु । निर्द्धार्य इति किं ? कोऽनयोर्ग्रामयोः स्वामी ।

* वैकात् ॥२००॥ एकशब्दात् द्वयोरेकस्मिन्निर्द्धार्ये डतरो वा स्यात् । एकतरः, एककः ।

* बहूनां प्रश्ने डतमश्च ॥२०१॥ बहूनां मध्ये निर्धार्ये वर्तमानेभ्यः किमादिभ्यः डतमो भवति डतरश्च वा प्रश्नविषये । को भवतां कठः कतमः । कतरः । यतमः । यतरः । ततमः । ततरः। अन्यतमः। अन्यतरः । बहूनामिति किं ?

योऽस्मिन् ग्रामे कठः स आगच्छतु ।

एकात् ॥ २०२ ॥ बहूनामेकस्मिन् निर्धार्ये एकात् डतमो वा स्यात् । एकतमो भवतां कठः एककः ।

इवे सुमतिकृत्योः कः ॥ २०३ ॥ सौ प्रतिकृतिविषये च इवार्थे वर्तमानान्मृदः को भवति । अश्व इवायं अश्वकः । उष्ट्रकः । प्रतिकृतिः—अश्व इवेदं—अश्वकं रूपं । आश्विका प्रतिमा । गर्दभकं ।

* उश् नृचार्थध्वजाचित्रे ॥२०४॥ नरि अर्चार्थे ध्वजे चित्रकर्मणि चाभिधेये वर्तमानान्मृदःकस्योश् भवति । चंचेव चंचा मनुष्यः । वर्द्धिका । अर्चार्थे—अर्हन् । शिवः । ध्वजे-तालः । कपिः । चित्र दुर्योधनः । भीमसेनः ।

* जीवनेऽपण्ये ॥ २०५ ॥ जीवनेऽपण्येऽर्थे कस्योश् भवति । वासुदेव इवायं—वासुदेवः स्कंदः । विष्णुः । अपण्य इति किं ? हस्तिकान् विक्रीणीते ।

देवपथादिभ्यः ॥२०६ ॥ एभ्यः परस्य कस्योश् भवति । देवपथ इव देवपथः । उष्ट्रग्रीवा । चामरज्जुः ।

वस्तेर्ढञ् ॥२०७॥ वस्तेर्ढञ् स्यात् । वस्तिरिव—वास्तेयी प्रणालिका ।

* शिलायाः ॥२०८॥ शैलाशब्दाद् ढञ् स्यात् । शिलेव शैलेयं दधि ।

* ढ्व ॥२०९॥ शिलाया ढ्व स्यात्-शिलेयं ।

शाखादेर्यः ॥ २१० ॥ शालादिभ्यो यो भवति । शालेव शाल्यः । मुख्यः । जघन्यः ।

द्रव्यं भव्ये ॥२११॥ द्रुशब्दाद् यो निपात्यते भव्येऽर्थे । द्रु इव भवति द्रव्यं कार्षापणं । भव्य इति किं ? द्रु इवायं न चेतयते ।

कुशाग्राच्छः ॥ २१२ ॥ अस्माच्छो भवति । कुशाग्र इव कुशाग्रीया बुद्धिः स्वामिनः ।

सात् तद्विषयात् ॥ २१३ ॥ सात् इवार्थे विषयात् छो भवति । काकश्च तालश्च काकतालं तदिव-काकतालीयं । अंधकवर्तकीयं । अंधककूपाणीयं ।

शर्करादेरण् ॥ २१४ ॥ शर्करादिभ्योऽण् स्यात् । शर्करेव-शार्करी मृत्तिका । कापालिकं । गौपुच्छं ।

कर्कलोहिताट्टीकण् ॥ २१५ ॥ ताभ्यां टीकण् स्यात् । कर्क इव कार्कीकः।लौहितिकः ।

* ठण् ॥२१६॥ ताभ्यां ठण् स्यादिवार्थे । कार्किकः । लौहितिकः ।

* गोण्यादेः ॥२१७॥ एभ्यष्ठण् स्यात् । गोणीव गौणिकं वस्त्रं । आंगुलिकी हरिद्रा ।

* ठश्चैकशालायाः॥२१८॥एकशालाशब्दात् ठो भवति ठण् च । एकशालेव एकशालिकः । ऐकशालिकः ।

इति शब्दार्णवापरनाम्नि जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ चतुर्थाध्याये प्रथमःपादः

## द्वितीयः पादः

* पूगाञ्ञ्योऽनग्रणीकात् ॥ १ ॥ पूगवाचिनो मृदो ञ्यो भवति अग्रणीरिति विहितकत्यांतं वर्जयित्वा । लोहध्वजा पूगाः-लोहध्वज्यः । लोहध्वज्यौ,लोहध्वजाः । शैव्यः,शैव्यौ । शिवयः। अनग्रणीकादिति किं ? देवदत्तोऽग्रणीरस्य संघस्य देवदत्तकः ।

व्रातञ्फादस्त्रियां ॥ २ ॥ व्रातवाचिनः ञ्फांताच ञ्यो भवत्यस्त्रियां स्वार्थे । नानाजातीया अनियतवृत्तयः उत्सेधजीविनः भारोपजीविनः

संघाः भ्राताः । कपोतपाकाः भ्राताः कापोतपाक्यः, कपोतपाक्यौ, कपोतपाकाः । ब्रैहिमत्यः । ञ्फाङ्-कुंजस्यापत्यं कौंजायन्यः, कौंजायन्यौ, कौंजायनाः । ब्राध्नायन्यः । अस्त्रियामिति किं ? कपोतपाका स्त्री । कौंजायनी ।

* शस्त्रजीविसंघाञ्ञ्यङ् वा ॥३॥ शस्त्रजीविनां संघवाचिनः ञ्यङ् वा स्यात् । शबराः शस्त्रजीविसंघः । शाबर्यः । शबरः । पौलिंद्यः । पुलिंदः ।

वाहीकेष्वविप्रराजन्येभ्यः ॥ ४ ॥ वाहीकेषु शस्त्रजीविसंघवाचकात् विप्रराजन्यवर्जितात् ञ्यङ् भवति । कुंडीवृसाः शस्त्रजीविसंघः कौंडीवृस्यः । कौंडीवृस्यौ । कुंडीवृसाः । क्षौद्रक्यः । मालव्यः । वाहीकेष्विति किं ? शबरः । अविप्रराजन्येभ्य इति किं ? गौपालिः । शालंकायनः । राजन्यः । कांबव्यः ।

वृकाट्टेण्यण् ॥ ५ ॥ शस्त्रजीविसंघात् वृकात् टेण्यण् स्यात् । वार्केण्यः । वार्केण्यौ । वृकाः । वार्केणी ।

* पर्श्वादिदामन्यादियौधेयादेरणछाञः ॥६॥ पर्श्वादेः दामन्यादेः यौधेयादेश्चाण् छाञो भवन्ति । पर्शोरपत्यानि पर्शवः । पर्शवः शस्त्रजीविसंघः पार्शवौ । पर्शवः । राक्षसः । आसुरः । दामन्यादेश्छः—दामनेयः शस्त्रजीविसंघः—दामनीयः । दामनीयौ । दामनयः । औलपीयः । बैजवापीयः । यौधेयादेरञ्-यौधेयः । शौभ्रेयः ।

गोत्रेऽभिजिद्विदभृतोऽणो यञ् ॥ ७ ॥ आभ्यामणंताभ्यां गोत्रे यञ् भवति स्वार्थे । अभिजितोऽपत्यं—आभिजितः । आभिजित एव आभिजित्यः । आभिजित्यौ । आभिजिताः । वैदभृत्यः ।

शिलावाकामीमूर्णाभेर्मतोः ॥८॥ शिलावत्यादेर्मतंतात् गोत्रे योऽण् तदंतात् यञ् स्यात् स्वार्थे । शिलावतोऽपत्यं शैलावत्यः । शैलावत्यौ । शैलावताः । वाकावत्यः । शामीवत्यः । और्णावत्यः । भैमत्यः ।

ते द्रिः ॥९॥ ते ञ्यादयः द्रिसंज्ञा भवंति तथा चैवोदाहृतं ।

* प्रकारोक्तौ जातीयः ॥१०॥ प्रकारवचने जातीयो भवति । पटुः प्रकारः पटुजातीयः । मृदुजातीयः । तज्जातीयः । नानाजातीयः ।

* कोऽण्वादेः ॥११॥ अणुप्रभृतिभ्यः को भवति । अणुः प्रकारः अणुकः । स्थूलकः । माषकः ।

+ कृष्णयववर्जाणमुगावद्गोमूत्राच्छिक-व्रीहिशाल्ययहिगुः [illegible] ॥१२॥ कृष्णादिभ्यः तिलाद्यर्थेषु [illegible] कृष्णप्रकाराः कृष्णकास्तिलाः । [illegible] । जीर्णकाः शाल्यः । मु[illegible] । [illegible]का सुरा । गोमूत्रकमाच्छादनं । अन्यत्र कृष्णजातीय इत्यादि ।

* क्ताच्छ्राद्धेश्चानन्त्ये ॥ १३ ॥ क्तांतात् श्राद्धेश्चानन्त्ये अकारस्यार्थे को भवति । अनन्त्यं भिन्नं भिन्नकं । छिन्नं छिन्नकं । छिन्नतमकं । भिन्नतरकं । भिन्नदेश्यकं ।

न सामि ॥ १४ ॥ सामिवचने प्रयुक्ते क्तांतात् श्राद्धेश्च को न भवति । सामिकृतं । सामिभुक्तं । सामिछिन्नतमं ।

*खोऽलंकर्मालंपुरुषाषडक्षाश्रितंगोः॥१५॥ अलंकर्मादेः खो भवति । अलंकर्मणे-अलंकर्मीणः । अलंपुरुषीणः । अद्वयानि षडक्षाण्यस्य—अषडक्षीणः । आश्रिता गावो यस्मिन् तदाश्रितंगवीनं वनं । निपातनात् नुम् ।

वाऽञ्चोऽदिक्स्त्रियां ॥ १६ ॥ अंचत्यंतात् खो वा भवत्यदिक्स्त्रियां । प्राक्, प्राचीनः । उदक्—उदीचीनः । प्रत्यक्—प्रतीचीनः । अपाची । प्रतीची दिक् । [illegible]ग्रहणं किम् ;

सम्यक्—समीचीनः । अदिक्स्त्रियामिति किं ? उक्ता दिक् स्वभावतो नपुंसकलिंगा । तत्र निषेधो मा भूत् । प्राक् प्राचीनं दिक्रमणीयं ।

*जातेश्छो द्रव्ये ॥ १७॥ द्रव्ये वर्तमानायाः जातेश्छो भवति । ब्राह्मणो जातिरस्य ब्राह्मणजातीयः । क्षत्रियजातीयः । सुजातीयः । दुर्जातीयः । द्रव्य इति किं ? बहुजातिर्ग्रामः ।

*द्येनिङ्किञ्चादामद्रव्ये ॥ १८ ॥ द्यादिभ्यः परात् ङांतात् मृदः आम् भवति न चेत्स द्रव्ये वर्तते । उच्चैस्तमां कथयति । उच्चैस्तरां हसति । पूर्वाह्णेतमां । अपराह्णेतरां भुंक्ते । पचतितमां । जल्पतितमां । किंतमां जल्पति । किंतरां पठति । अद्रव्य इति किं ? उच्चैस्तरो वृक्षः ।

*अभिनोऽण् ॥ १९ ॥ ञांतात् भिनंताच्चाण् भवति । व्यवक्रोशी । व्यवहासी । सांकोटिनं । सांमार्जिनं ।

विसारिणो मत्स्ये ॥ २० ॥ अस्मादण् भवति मत्स्ये । वैसारिणो मत्स्यः ।

*स्येर्वारे कृत्वस् ॥ २१ ॥ स्यिसंज्ञात् वारेऽर्थे कृत्वस् भवति । पंचवारान् भुंक्ते-पंचकृत्वः । षट्कृत्वः । शतकृत्वः । बहुकृत्वः । स्येरिति किं ? वारं वारं भुक्ते ।

*चतुस्त्रिद्विः सुच् ॥ २२ ॥ एभ्यः सुच् भवति वारेऽर्थे । चतुरो वारान् भुंक्ते—चतुः, त्रिः, द्विः ।

*सकृत् ॥ २३ ॥ एकशब्दात् वारे सुच् सकृदादेशश्च निपात्यते । एकं वारं सकृत् भुंक्ते ।

बहोर्धासन्ने ॥ २४ ॥ अदूरे काले क्रियावाचिन्यर्थे धा भवति । बहुवारं भुंक्ते बहुधा भुंक्ते । आसन्न इति किं ? बहुकृत्वो भुंक्ते मासस्य ।

*मयट् प्रकृते ॥ २५ ॥ प्राचुर्येण प्राधान्येन वा कृतं प्रकृतं । प्रकृतेऽर्थे वर्तमानान्मृदो मयट् स्यात् । घृतं प्रकृतं-घृतमयं । दधिमयं । अन्नमयं ।

*अस्मिन् ॥ २६ ॥ अस्मिन्निति विषयेऽर्थे मयट् स्यात् । घृतं प्रकृतमस्मिन् घृतमयं भोजनं । पुष्पमयी पूजा ।

समूहवच्च बहुषु तयोः॥२७॥बहुषु वर्तमानान्मृदः समूह इव त्यविधिर्भवति मयट् च तयोः प्रकृतेऽस्मिन्निति च । अपूपानां समूहः—आपूपिकं । तथापूपाः प्रकृताः—आपूपिकं । अपूपमयं । मोदकाः प्रकृता अस्मिन् मौदकिकं पर्व । मोदकमयं । अश्वीया यात्रा—अश्वमयी ।

*भेषजादिभ्यष्ट्यण् ॥ २८ ॥ एभ्यः ट्यण् स्यात् । भेषजमेव भैषज्यं । आनंत्यं । चातुर्वर्ण्यं । त्रैलोक्यं ।

*होत्रादेवोपधेश्छतल्टष्ण् ॥ २९ ॥ होत्रादिभ्यश्छादयो भवंति । होत्रैव होत्रीयं । देव एव देवता । औपधेयं ।

+नामरूपाद्धेयः ॥ ३० ॥ आभ्यां स्वार्थे धेयो वा स्यात् । नामधेयं । रूपं—रूपधेयं ।

+भागाद्व ॥ ३१ ॥ भागाद्वा धेयो भवति । भागः । भागधेयः ।

यः ॥ ३२ ॥ भागाद् यो भवति । भाग्यं ।

क्षेमादिभ्यः ॥ ३३ ॥ एभ्यो यो भवति । क्षेम एव क्षेम्यं । मर्त्यः । अपराद्ध्यं ।

+नवात् स्नतनखाश्च नूच ॥ ३४ ॥ नवशब्दात् स्नादयो भवंति यश्च तत्पक्षे नूभावश्च । नवं । नूत्नं । नूतनं । नवीनं । नव्यं ।

+प्रात् पुरातने ॥३५॥ प्रशब्दात् पुरातनेऽर्थे त्नादयो भवंति । प्रगतं कालेन पुरातनं—प्रत्नं । प्रतनं । प्राणं । प्रीणं ।

कोऽव्यादिभ्यः ॥ ३६ ॥ एभ्यः को भवति । अविरेव-अविकः । यावकः । मणिकः ।

+ कुमारक्रीडनेयसः ॥ ३७ ॥ कुमार-

कौशलवाचकात् ईषदसंताच्च को वा स्यात् । कंदुरेव कंदुकः । उत्कंठकः । श्रेयानेव-श्रेयस्कः । ज्यायस्कः ।

*शीतोष्णादृतौ ॥ ३८ ॥ आभ्यां ऋतौ को वा स्यात् । शीत एव--शीतकः । उष्णकः ऋतुः । ऋताविति किं ? शीतो वायुः ।

*लूनवियातात् पशौ ॥ ३९ ॥ आभ्यां पशौ को वा स्यात् । लून एव—लूनकः । वियातकः पशुः ।

*तनुबृहतीज्ञातपुत्राणुशून्यात् सूत्राच्छादनसमासवेदकृत्रिमनिपुणरिक्ते ॥ ४० ॥ तन्वादेः सूत्राद्यर्थे को भवति । तनुकं सूत्रं । बृहतिका शाटी । ज्ञातकः समासवेदः । पुत्रकः कृत्रिमः । अणुकः निपुणः । शून्यकः रिक्तः । अन्यत्र—तनुः । बृहती छंदः ।

लोहितान्मणौ ॥ ४१ ॥ अस्मान्मणौ को भवति वा । लोहित एव लोहितकः । लोहितो मणिः ।

वर्णेऽनित्ये ॥ ४२ ॥ अनित्ये वर्णे लोहितात् को भवति । लोहितकं चक्षुः कोपेन । अनित्य इति किं ? लोहित इंद्रगोपः ।

रक्ते ॥ ४३ ॥ रक्तेऽर्थे लोहितात् को वा भवति । लोहितकः, लोहितो वा पटः ।

कालाच्च ॥ ४४ ॥ वर्णेऽनित्ये रक्ते च कालात् को भवति । कालकं मुखं शोकेन । कालिका शाटी ।

+तीयादीकण्विद्यायां ॥ ४५ ॥ तीयप्रत्ययांतात् स्वार्थे टीकण् स्याद् वा न चेत् तत् तीयप्रत्ययांतं विद्यायां वर्तते । द्वितीयं । द्वैतीयीकं । तृतीयं, तार्तीयीकं वस्त्रं । अविद्यायामिति किं ? द्वितीया विद्या ।

विनयादिभ्यष्ठण् ॥ ४६ ॥ एभ्यष्ठण् स्यात् । विनय एव वैनयिकं । सामयिकं । कांचनिकं । आकस्मिकं ।



*अनुगादिनः ॥ ४७ ॥ अस्मात् ठण् स्यात् । आनुगादिकः ।

*औपयिकं ॥ ४८ ॥ उपायशब्दात् ठण् निपात्यते ह्रस्वश्च । उपाय एव औपयिकः ।

*वाचः संदिष्टे ॥ ४९ ॥ वाक्शब्दात् ठण् स्यात् संदिष्टेऽर्थे । संदिष्टा वाक्-वाचिकं कथयति । संदिष्ट इति किं ? स्निग्धा वाग् सुजनस्य ।

कर्मणोऽण् ॥ ५० ॥ कर्मणः संदिष्टेऽर्थे अण् स्यात् । कार्मणं ।

*कृष्णभ्रोत्रौषधेर्मृगांगाजातौ ॥ ५१ ॥ कृष्णादेर्मृगाद्यर्थेऽण् स्यात् । कृष्ण एव कार्ष्णो मृगः । श्रौत्रमंगं । औषधं । ओषधिरेवान्यत्र ।

प्रज्ञादिभ्यः ॥ ५२ ॥ एभ्योऽण् स्याद्वा स्वार्थे । प्रज्ञ एव प्राज्ञः । वाणिजः । मानसं । बांधवः । आकृतिगणोऽयं ।

मृदस्तिकः ॥ ५३ ॥ मृच्छब्दात्तिको भवति । मृदेव—मृत्तिका ।

सस्नौ प्रशंसे ॥ ५४ ॥ मृदः सस्नौ स्तः प्रशंसेऽर्थे । प्रशस्ता मृत्--मृत्सा । मृत्स्ना ।

*यत्तोर्द्वयसज्मात्रट् बहुलं ॥ ५५ ॥ यत्तदंतात् द्वयसट् मात्रटौ बहुलं स्तः । यावदेव यावद्द्वयसं । यावन्मात्रं । तावद्द्वयसं । तावन्मात्रं ।

+वर्णात् कारः ॥ ५६ ॥ वर्णवाचकात् कारो भवति । अ एव अकारः । ककारः ।

बह्वल्पार्थाच्छस् कारकात् इष्टानिष्टे ॥ ५७ ॥ बह्वर्थात् अल्पार्थाच्च कारकात् शस् वा भवति इष्टेऽनिष्टे च । बहु धनं ददाति बहुशो ददाति विवाहे । भूरिशो ददाति । गणशः । बहुभिर्भुक्तं बहुशो भुक्तं अतिथिभिः । बहुभ्यो ददाति—बहुशो ददाति । बहुभ्य आगतः बहुषु वसति वा बहुशः । अनिष्टे—अल्पं ददाति, अल्पैर्भुक्तं, अल्पेभ्यो ददाति, अल्पेभ्य आगतः, अल्पेषु वसति वा

अल्पशः । स्तोकशः । कतिपयशः । बह्वल्पार्था-दिति किं ? व्रतं ददाति । कारकादिति किं ? बहूनां स्वामी ।

स्येकाद्वीप्सायां ॥५८॥ स्यिसंज्ञकात् एकवचनांताच्च कारकात् वीप्सायां शस् वा स्यात् । एकैकं देहि–एकशो देहि । द्वौ द्वौ–द्विशः । कतिशः । एकैकेन दीयते–एकशः । द्वाभ्यां द्विशः । एकवचनांतात्–माषं माषं देहि–माषशः देहि । पणशः । पादशः । स्येकादिति किं ? माषौ माषौ ददाति । वीप्सायामिति किं ? द्वौ ददाति ।

*स्येः पादादिभ्यो दंडत्यागे च वुन् खं च ॥ ५९ ॥ स्यिसंज्ञात् परेभ्यः पादादिभ्यो वुन् भवति दंडे त्यागे वीप्सायां च खं तेषां । द्वौ पादौ दंडितः द्विपादिकां दंडितः । त्रिपदिकां । द्विशतिकां । त्यागे—द्वौ पादौ विसृजति द्विपादिकां विसृजति । द्विशतिकां । त्रिशतिकां । वीप्सायां–द्वौ द्वौ पादौ भुंक्ते द्विपादिकां भुंक्ते । त्रिपदिकां । द्विशातिकां । त्रिमोदकिकां । द्विमाषिकां भुंक्ते । स्येरिति किं ? पादं दंडितः । दंडत्यागे चेति किं ? द्वौ पादौ भुंक्ते ।

+आद्यादिभ्यस्तासिः ॥ ६० ॥ एभ्यस्तसिर्भवति वा । आदौ—आदितः । अंततः । अग्रतः । पृष्ठेन-पृष्ठतः । सर्वेण सर्वस्मिन् वा सर्वतः । अन्यतः । यतः । ततः । एकतः । इतः । अर्थतः । शब्दतः ।

*कायाः प्रतिना ॥ ६१ ॥ प्रतियोगे कांतात् तसिर्भवति । अभयकुमारः श्रेणिकात् प्रति श्रेणिकतः प्रति । भरतात् प्रति अर्ककीर्तिः–भरततः प्रति ।

अपादानेऽहीयरुहोः ॥६२॥ हीयरुहवर्जितस्य धोः संबंधिन्यपादाने या का विहिता तदंतात् तसिर्वा भवति । ग्रामादागच्छति–ग्रामतः । उपाध्यायादधीते-उपाध्यायतोऽधीते । अहीयरुहोरिति किं ? सार्थाद्धीनः । पर्वतादवरोहति ।

क्षेपाऽव्यथाऽतिग्रहेऽकर्तृभावाः ॥ ६३ ॥ अकर्तरि वा भा तदंतान्मृदः क्षेपादिष्वर्थेषु तसिर्भवति । वृत्तेन क्षिप्तः-वृत्ततः क्षिप्तः । चारित्रेण न व्यथते चारित्रतो न व्यथते । वृत्तेनातिगृह्यते--वृत्ततोऽतिगृह्यते । अकर्तृग्रहणे किं ? पुत्रेण क्षिप्तः ।

हीयमानपापेन ॥ ६४ ॥ अकर्तृभांतान्मृदः तसिर्भवति आभ्यां योगे । वृत्तेन हीयते । वृत्ततो हीयते । धनेन पापः-धनतः पापः ।

ताया व्याश्रये ॥ ६५ ॥ व्याश्रये नानापेक्षाश्रये तांतात् तसिर्भवति वा । नमिरर्ककीर्तितोऽभवत् अर्ककीर्तेरभवत् । मेघप्रभो मेघेश्वरतोऽभवत् । मेघेश्वरस्याभवत् ।

रोगादपनये ॥ ६६ ॥ रोगात् तांतात् तसिर्भवति अपनये प्रतीकारे । प्रवाहिकायाः प्रवाहिकातः कुरु । प्रच्छर्दिकातः ।

कृभ्वस्तिभ्यां योगेऽतत्त्वे संपत्तरि च्विः ॥६७॥ अतस्य तद्भावः विकाररूपापत्तिरतत्त्वं, तस्मिन् गम्यमाने संपत्तरि संपद्यतेः कर्तरि वर्तमानान्मृदः कादिभिर्योगे च्विर्वा भवति । अशुक्लं शुक्लं करोति शुक्लीकरोति । शुक्लीभवति । शुक्लीस्यात् । कृष्णीकरोति । कृष्णीभवति । कृष्णीस्यात् । कादियोग इति किं ? अशुक्लः शुक्लो जायते । अतत्त्व इति किं ? कटं करोति । संपत्तरीति किं ? अदेवगृहं सन् देवगृहे भवति ।

मनोऽरुश्चक्षुश्चेतोरहोरजसः खं ॥ ६८॥ एषां खं भवति च्वौ परे । अनुन्मनसं उन्मनसं करोति–उन्मनीकरोति । उन्मनीभवति । उन्मनीस्यात् । अरूकरोति । उच्चक्षूभवति । विचेती-

स्यात् । चिरीकरोति । नीरजीस्यात् ।

+ इसुसोर्बहुलं ॥ ६९ ॥ इसुसंतस्य बहुलं ईः स्यात् च्वौ । सर्पीभवति नवनीतं । धनूभवति वंशः । सर्पिर्भवति । धनुर्भवतीत्यपि ।

+ हल ईद् ॥७०॥ हलंतस्य बहुलमीभ्भवति च्वौ । दृषदीभवति शिला । समिधीभवति काष्ठं । दृषद्भवति, समिद्भवतीत्यपि ।

साद्वा कार्त्स्न्ये ॥ ७१ ॥ कार्त्स्न्येऽर्थवृत्तेः सात् भवति वा । कृत्स्नं समस्तमनग्निमग्निं करोति–अग्निसात् करोति । उदकसाद्भवति, उदकीभवति लवणं। अग्निसाद् स्यात्। अग्नीस्यात्।

संपदा चाभिविधौ ॥ ७२॥ कृभ्वस्तिभिः संपदा च योगेऽभिविधौ गम्यमाने साद् वा भवति । अस्मिन् देशे सर्वं लवणं अनुदकं उदकं करोति देवः--उदकसाद् करोति । उदकीकरोति । उदकसाद् भवति । उदकीभवति । उदकसाद् स्यात।उदकीस्यात्।उदकसाद् संपद्यते।

*तत्राधीने ॥७३ ॥ तत्रेतीप्समर्थात् अधीनेऽर्थे साद्वा स्यात् । राजन्यधीनं करोति राजसाद् भवति।राजसाद् स्यात् ।आचार्यसाद् संपद्यते।

देये त्रा च ॥ ७४ ॥ तत्रेतीतात् देयेऽर्थे कृभ्वस्तिभिः संपदा च योगे त्रा भवति। गुराधीनं देयं करोति--गुरुत्रा करोति । गुरुत्रा भवति। गुरुत्रा स्याद् । गुरुत्रा संपद्यते । देय इति किं ! राजसाद् भवति राष्ट्रं । चकारात्संपदानुवृत्तिः ।

*द्विस्वानेकाचोऽव्यक्तानुकरणाड्डाच् ॥७५॥ अव्यक्तानुकरणादनेकाचः डाज्भवति कृभ्वस्तिभ्योगे पूर्वस्य च द्वित्वं । अपटत् पटत् करोति पटपटाकरोति । पटपटाभवति । पटपटास्यात् । दमदमाकरोति । दमदमाभवति । समसमास्यात्। अनेकाच इति किं ! खात्करोति । अव्यक्तानुकरणादिति किं ! दृषत्करोति ।

*कृञस्तीयशंबबीजात्कृषौ ॥ ७६॥ ती-यप्रत्ययांतात् शंबबीजाभ्यां च कृञो योगे डाच् स्यात् कृषिविषये । क्षेत्रस्य द्वितीयं कर्ष करोति द्वितीयाकरोति । तृतीयाकरोति क्षेत्रं । शंबाकरोति कृषिकः । बीजाकरोति क्षेत्रं । कृषाविति किं ! द्वितीयं करोति विवरणं सूत्राणां ।

स्येर्गुणात् ॥ ७७॥ स्विसंख्यात् परो यो गुणशब्दस्तदंतान्मृदः कृञ्योगे डाज्भवति । क्षेत्रस्य विलेखनं द्विगुणं करोति द्विगुणाकरोति । त्रिगुणाकरोति । स्येरिति किं ! समगुणं करोति । कृषाविति किं ! द्विगुणं करोति रज्जुं ।

* सपत्रनिष्पत्रादतिव्यथे ॥७८॥ आभ्यामतिव्यथेऽतिपीडने गम्यमाने डाज्भवति । सपत्रां करोति मृगं सपत्राकरोति मृगं।निष्पत्राकरोति मृगं।

* भद्रभद्रान्मुंडने ॥७९॥ आभ्यां मुंडनेऽर्थे डाज्भवति । भद्रं करोति भद्राकरोति शिरः। मद्राकरोति शिरो नापितः । मुंडने इति किं ! भद्रं करोति साधुः ।

* सुखप्रियादानुलोम्ये ॥ ८० ॥ आभ्यामानुलोम्येऽनुकूलार्थे डाज्भवति । सुखाकरोति । प्रियाकरोति गुरुं शिष्यः । आनुलोम्य इति किं! सुखं करोत्यनंतनाथः ।

* शूलसमयदुःखनिष्कुलसत्यात्पाकयापनात्रातिकूल्यनिष्कोषाशपथे ॥ ८१ ॥ शूलादिभ्यः पाकादिष्वर्थेषु यथासंख्यं कृञो योगे डाज्भवति । शूलाकरोति मांसं । समयाकरोति पटं कुविंदः । दुःखाकरोति वत्सं । निष्कुलाकरोति बीजपूरं । सत्याकरोति वणिग्भांडं । अन्यत्र–शूलं करोति कदलं । समयं करोति विवाहस्य । दुःखं करोति मिथ्या।निःकुलं करोति रिपुं । सत्यं करोति शपथं करोतीत्यर्थः ।

+देवादिभ्यस्त्रा॰॰॰ ॥ ८२ ॥ इत्येतेभ्य

ईवंतेभ्यश्च देवादिभ्यस्त्रा भवति । देवान् गच्छति देवत्रा गच्छति । मनुष्यत्रा गच्छति । देवेषु वसति देवत्रा वसति । मनुष्यत्रा वसति ।

सांतः ॥ ८३ ॥ सांत इत्ययमधिकारो वेदितव्यः आपादपरिसमाप्तेः, इतोऽग्रे उदाहरिष्यते ।

*न स्वतेस्तेः षे ॥ ८४ ॥ स्वतिभ्यां तिसंज्ञाभ्यां परस्य षसे सांतो न भवति । शोभना धूः सुधूः । सुराजा । अतिधूः । अतिराजा । तेरिति किं ? धुरमतिक्रांतो ऽतिधुरः । षे इति किं ? स्वक्षः ।

* किमः क्षेपे ॥८५॥ क्षेपे निंदायां वर्तमानात् किमः परस्य सांतो न भवति । स किंराजा यो न रक्षति । स किंगौर्यो न वहति । क्षेपे इति किं ? कस्य राजा—किंराजः ।

नञः॥ ८६ ॥ नञः परस्य सांतो न भवति षसे । अनृक् । असखा । अगौः ।

पथो वा ॥ ८७ ॥ नञः पथ्यंतात् वा सांतो न भवति । अपथं । अपंथाः ।

* नञ्बहोः स्येयर्डः ॥८८॥ नञ्बहुभ्यां परात् स्थिसंज्ञात् डो भवति षसे । न दश अदशाः । अनवाः । निर्गतास्त्रिंशदंगुलिभ्यः निस्त्रिंशः खड्गः । निश्चत्वारिंशानि वर्षाणि वर्तंते । नञ्बहोरिति किं ? गोत्रिंशत् । स्येरिति किं ? असकृत् ।

* स्थिवाद्‌बहोः ॥८९॥ स्थिवसात् अबहुशब्दांतात् डः सांतो भवति । आसन्ना दशानामिमे—आसन्नदशाः । अदूरविंशाः । द्वौ वा त्रयो वा द्वित्राः । पंचषाः । स्थिवादिति किं ? चित्रगुः । अबहोरिति किं ? आसन्नबहवः ।

*ऋक्पूरप्पथोऽत् ॥९०॥ ऋगाद्यंतादकारः सांतो भवति । अर्द्धर्चः । उच्चारितर्चः । त्रिपाः पूः—त्रीपुरं त्रिपुरं । द्विगता आपोऽस्मिन्-द्वीपः । समीपः । मोक्षस्य पंथाः-मोक्षपथः । राजपथः ।

*धुरोऽनक्षे ॥९१॥ धुरोऽक्षवर्जे । राज्यस्य धूः राज्यधुरा । महाधुरं शकटं । अनक्ष इति किं ? अक्षधूः ।

कृष्णोदक्पांडुस्येर्भूमेः ॥ ९२ ॥ कृष्णादिभ्यः स्थिसंज्ञाच्च परात् भूमिशब्दात् अत् भवति । कृष्णभूमो देशः । उदग्भूमः । पांडुभूमः । द्विभूमः, त्रिभूमः प्रासादः । कृष्णादेरिति किं ? सर्वभूमिः ।

प्रत्यन्ववात् सामलोम्नः ॥९३॥ प्रत्यादेः पराभ्यां सामलोमभ्यां अत्वं स्यात् । प्रतिगतं साम प्रतिसामं । प्रतिलोमं । अनुसामं । अनुलोमं । अवसामं । अवलोमं ।

*राजहस्तिपल्याद् वर्चसः ॥९४॥ राजादेः परात् वर्चसोऽत्वं स्यात् । राज्ञः वर्चः-राजवर्चसं । हास्तिवर्चसं । पल्यवर्चसं ।

तमसोऽवसमंधात् ॥ ९५ ॥ अवादेः परात् तमसोऽत्स्यात् । अवहीनं तमः-अवतमसं । संतमसं । अंधतमसं ।

तप्तान्ववाद् रहसः ॥ ९६ ॥ तप्तादिपूर्वाद् रहसोऽद् भवति । तप्तं रहः-तप्तरहसं । अनुरहसं । अवरहसं ।

प्रतेरुरस ईपः ॥ ९७ ॥ प्रतिपूर्वादीवंतात् उरसः अत्वं स्याद् । प्रतिष्ठितमुरसि—प्रत्युरसं । ईप इति किं ? प्रतिगतमुरः प्रत्युरः ।

गेरध्वनः ॥ ९८ ॥ गिपूर्वादध्वनोऽत्सांतो भवति । प्रगतमध्वानं प्राध्वं शकटं । उपाध्वं । निरध्वं । गेरिति किं ? परमाध्वा ।

अजीवेऽक्ष्णः ॥ ९९ ॥ अजीवे वर्तमानादक्ष्णोऽत्वं स्यात् । कमलस्याक्षि—कमलाक्षं । महिषाक्षो गुग्गुलः । गवाक्षं । रुद्राक्षं । अजीव इति किं ? अजाक्षि ।

*संकटात् ॥१००॥ आभ्यामक्ष्णोऽत्वं स्यात् । संगतमक्ष्णा समक्षं । कटाक्षं ।

*आतन्वहत्वदारुवन्तो वे ॥१०१॥ आतादिपूर्वादुरुन्शब्दादत्वं स्यात् वसे । आतश्चासौ उक्षा च आतोक्षः । महोक्षः । वृद्धोक्षः । व इति किं ? आतस्योक्षा-आतोक्षा ।

*स्त्रियाः पुंसो द्वंद्वे च ॥१०२॥ स्त्रीशब्दात् परात् पुंसोऽत्वं स्यात् द्वंद्वे वे च । स्त्री च पुमांश्च स्त्रीपुंसं । स्त्रीपुंसा विस्मयं गताः॥ वसे—स्त्रीभूत्वा पुमान् जातः स्त्रीपुंसःशिखंडी ।

*वाग्धेन्वदारान् मनोऽनडुद्गोः ॥१०३॥ वागादिपूर्वेभ्यः मन आदिभ्योऽत्वं स्यात् द्वंद्वे । वाक् च मनश्च वाङ्मनसे । धेन्वनुडुहौ । दारगवं ।

*ऋचः सामयजुर्भ्यां ॥ १०४ ॥ ऋचः पराभ्यां सामयजुर्भ्यामद् भवति । ऋक् च साम च ऋक्सामं । ऋग्यजुषं ।

नक्तंरात्रिमहोभ्यो दिवं ॥१०५॥ एभ्यः परं दिवमिति निपात्यते । नक्तं च दिवा च नक्तंदिवं । रात्रिंदिवं । अहर्दिवं ।

*पदष्ठीवोर्वष्ठीवाक्षिभ्रुवं ॥१०६॥ पदष्ठीवादयो निपात्यंते अदंताः । पादौ चाष्ठीवंतौ च पदष्ठीवं । पद्भ्यावष्ठिलं च । ऊरू चाष्ठीवंतौ च ऊर्वष्ठीवं । अक्षिणी च भ्रुवौ च अक्षिभ्रुवं ।

*चुदषो रार्थे ॥१०७॥ घ्याधंतात् रार्थे समाहारलक्षणे द्वंद्वे अद् भवति । वाक् च त्वग् च वाक्त्वचं । श्रीस्रजं । वाग्दषदं । छत्रोपानहं । वाक्त्विषं । रार्थ इति किं । प्रावृट्शरदौ ।

वेऽङ्गुलेर्हिस्यादेः ॥ १०८ ॥ ह्यादेः स्यादेःचांगुलेरत्वं स्यात् वसे । निर्गतमंगुलिभ्यः निरंगुलं । अंगुलेरतिक्रांतं-अत्यंगुलं । द्वयोरंगुल्योः समाहारः-द्व्यंगुलं । त्र्यंगुलं । व इति किं?पंचांगुलिर्हस्तः ।

*सर्वांशाह:संख्यातपुण्याच्च रात्रेः॥ १०९॥ सर्वादेः परात् किंस्यादेश्च रात्रिशब्दात् अत्यो भवति वसे । सर्वा चासौ रात्रिश्च सर्वरात्रं । पूर्वं रात्रेः-पूर्वरात्रः । अपररात्रः । अर्धरात्रः। अहश्च रात्रिश्च-अहोरात्रं । संख्यातरात्रः । पुण्यरात्रः । अतिरात्रः ।नीरात्रः । द्विरात्रः।त्रिरात्रः ।

+वर्षादीर्घात् ॥ ११० ॥ वर्षादीर्घपूर्वायाः रात्रेरद् भवति । वर्षारात्रः । दीर्घरात्रः ।

एभ्योऽह्नोऽह्नः ॥१११॥ एभ्यः सर्वादिभ्यः परस्याहन्शब्दस्याह्नादेशो भवति । सर्वमहः सर्वाह्नः । पूर्वाह्नः । अपराह्नः । निःक्रांताह्नः निरह्नी कथा । अष्टन्वहस्सु भवा-अष्टाह्नी पूजा ।

न समाहारे ॥ ११२ ॥ समाहारलक्षणे सेऽह्नोऽन्ह्नो न भवति । द्वयोरह्नोः समाहारः द्व्यहः । त्र्यहः । समाहार इति किं ? द्वयोरह्नोर्भवः द्व्यह्नः उत्सवः । त्र्यह्नी पूजा ।

पुण्यैकात् ॥ ११३ ॥ आभ्यां परस्याहोऽह्नो न भवति । पुण्यमहः-पुण्याहं । एकाहः ।

*संख्यातात्वा ॥११४॥ अस्मात्परस्याहोऽह्नो न वा स्यात् । संख्यातमहः-संख्याताह्नः । संख्याताहः ।

राजाहःसखेट्टः ॥ ११५॥राजाद्यंतात् वात् टो भवति । जिनराजः । महाराजः । द्व्यहः पटः । परमाहः । राजसखः । अतिसखः ।

उरसोऽग्रे ॥ ११६ ॥ उरसष्टो भवत्यग्रे प्रधानेऽर्थे । हस्तिन उरः-हस्त्युरसं । अश्वोरसं ।

सरोऽन्नोऽश्मायसः त्वजात्यो: ॥ ११७॥ एभ्यः लौ आतौ च टो भवति वसे । जालमिव सरः-जालसरसं । मंडूकसरसं । उपानसं । महानसं । कनकाश्मः । स्थूलाश्मः । लोहितायसं। तीक्ष्णायसं ।

निःश्रेयसः ॥ ११८ ॥ निसः परात् श्रेयसः टो भवति । निश्चितं श्रेयः-निःश्रेयसं ।

श्वसो वसीयसश्च ॥११९ ॥ श्वसः परात्

वसीवसः श्रेयसस्य टो भवति पे। शोभनं वसीयः श्वोवसीयसं ते भूयात् । श्वःश्रेयसमस्तु ते ।

ग्रामकौटात् तक्ष्णः ॥ १२० ॥ आभ्यां तक्ष्णः टो भवति। ग्रामस्य तक्षा—ग्रामतक्षः । कुट्यां भवः-कौटः,कौटस्तक्षा कौटतक्षः ।

शुनोऽत्रेः ॥ १२१ ॥ अतेः परस्य शुनः टो भवति । श्वानमतिक्रांतोऽतिश्वः वराहः । सेवकश्च ।

*गौणात् ॥१२२॥ गौणादुत्तरस्य शुनष्टो भवति पे । व्याघ्र इव श्वा व्याघ्रश्वः । सिंहश्वः ।

अजीवे ॥ १२३ ॥ अजीवे वर्तमानात् गौणात शुनष्टो भवति । आकर्षः श्वा इव आकर्षश्वः । फलकश्वः । शकटश्वः । अजीव इति किं ! कालकश्वा ।

मृगोत्तरपूर्वाच्च सक्थ्नः ॥ १२४ ॥ एभ्यो गौणाच्च परात् सक्थ्नष्टो भवति । मृगस्येव सक्थि-मृगसक्थं । उत्तरस्येव सक्थि-उत्तरसक्थं पूर्वसक्थं । फलकमिव सक्थि-फलकसक्थं ।

गोरहृदुपि ॥ १२५॥ गोशब्दाट्टो भवति अहृदुपि । पुंगवः। राजगवः । पंचगवप्रियः । दशानां गवां समाहारः-दशगवं । गामतिक्रांता अतिगवी । अहृदुपीति किं ! पंचभिर्गोभिः क्रीतः पंचगुः ।

नावो राष्ट्र ॥ १२६ ॥ नावंताद् रसाद् टो भवति । द्वयोर्नावोः समाहारः-द्विनावं । त्रिनावं। राविति किं ! राजनौः ।

अर्धात् ॥ १२७ ॥ अर्धात् परात् नावष्टो भवति । अर्धनावः । अर्धनावी । अर्धनावं ।

खार्या वा ॥ १२८ ॥ खारीशब्दांतात् राट्टो भवति सांतः अर्धाच्च वा । द्वे खार्यौ समाहृते-द्विखारं,द्विखारि । पंचखारं, पंचखारि । अर्धखारं, अर्धखारि ।

द्वित्रेरंजलेः ॥ १२९ ॥ द्वित्रिपूर्वादंजलेष्टो भवति । द्वयोरंजल्योः समाहारः-द्व्यंजलं त्र्यंजलं ।

आयुषः समाहारे ॥ १३० ॥ ताभ्यामायुषः समाहारे टो भवति । द्वयोरायुषोः समाहारः द्व्यायुषं । त्र्यायुषं।समाहार इति किं! द्व्यायुः प्रियः।

*पुरुषात् ॥ १३१ ॥ अस्मात् परादायुषः टो भवति पे । पुरुषस्यायुः-पुरुषायुषं ।

ब्रह्मणो राष्ट्रेभ्यः॥१३२॥राष्ट्रवाचिभ्यःपरात् ब्रह्मणष्टो भवति से।सुराष्ट्रेषु ब्रह्मा-सुराष्ट्रब्रह्मः।अवंतिब्रह्मः । राष्ट्रेभ्य इति किं ! देवब्रह्मा नारदः।

कुमहद्भ्यां वा ॥१३३॥ आभ्यां ब्रह्मणष्टो वा स्यात् । कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा । महाब्रह्मः, महाब्रह्मा ।

*द्विस्तावात्रिस्तावागोष्ठश्वाः ॥ १३४ ॥ एते वा निपात्यंते । द्विस्तावती । त्रिस्तावती । द्विस्तावाः वेदिः । त्रिस्तावाः वेदिः। मत्त्ये ती-शब्दस्य खं । गोष्ठे श्वा गोष्ठश्वः । मत्सांतः ।

*प्रत्यनुसमोऽक्ष्णो हे ॥ १३५॥ प्रत्यादेः परादाक्षिशब्दाद् हसे टो भवति । अक्षिणी प्रति प्रत्यक्षं।अनुगतमक्ष्णः-अन्वक्षं।समीपमक्ष्णः-समक्षं

शरदादेः ॥ १३६ ॥ अस्माट्टो भवति हे। शरदः समीपमुपशरदं । प्रतिशरदं । उपमनसं । अनुदिशं ।

*जराया जस्च ॥१३७॥ जराशब्दांतात् टो भवति जसादेशः । जरायाः समीपमुपजरसं । प्रतिजरसं ।

अनः ॥ १३८ ॥ अनंताट्टो भवति हे । आत्मन्यधि-अध्यात्मं । उपराजं । प्रत्यात्मं ।

नपो वा ॥ १३९ ॥ अन्नंताद् नपो हे टो वा स्यात् । चर्मणः समीपमुपचर्मं । उपचर्म । प्रतिचर्मं । प्रतिचर्म ।

*नदीगिरिपौर्णमास्याग्रहायण्या ॥१४०॥

ग्रावंताद् टो वा स्याद् हे । उपककुभं । उपककुप् । प्रतिसमिधं । प्रतिसमित् । गिरेर्बहिः बहिर्गिरं । बहिर्गिरि । उपपौर्णमासं । उपपौर्णमासि । उपाग्रहायणं । उपाग्रहायणि ।

* नद्याः ॥ १४१ ॥ नदीशब्दांताट्टो वा स्यात् । उपनदं । उपनदि ।

* स्वेः ॥ १४२ ॥ स्विपूर्वाया नद्याः टो भवति हे । पंच नद्यः समाहृताः पंचनदं । सप्तनदं ।

* गोदावर्याः ॥१४३॥ स्विपूर्वाद् गोदावरीशब्दात् टो वा स्यात् । द्विगोदावरं । सप्तगोदावरं ।

* सरजसोपशुनानुगवं ॥ १४४ ॥ एते टांताः निपात्यंते हसे । सह रजसा सरजसमभ्यवहरति । शुनोंतिकमुपशुनमास्ते । टे वस्योत्वं । यवामन्वायतं-अनुगवं यानं ।

स्वांगाद्क्ष्यसिसक्थ्नः ॥ १४५॥ स्वांगवाचकाद् अक्ष्णःसक्थ्नश्च बसे टो भवति । विशाले अक्षिणी अस्य-विशालाक्षः । कल्याणाक्षः । गौरे सक्थिनी अस्य-गौरसक्थः । ग्सक्थी । अतिसक्थी । स्वांगादिति किं ? स्थूलाक्षिरिक्षुः । ब इति किं वामाक्षि ।

द्रुण्यंगुलेः ॥ १४६ ॥ द्रुणि दारुविषये अंगुलेर्बसे टो भवति । द्वे अंगुली अस्य-द्व्यंगुलं । त्र्यंगुलं । चतुरंगुलं दारु ।

*द्वित्रेर्मूर्ध्नो वा ॥१४७॥ द्वित्रिभ्यां मूर्ध्नः टो वा स्याद् बसे । द्विमूर्धः । द्विमूर्धा । त्रिमूर्धः । त्रिमूर्धा ।

*प्रधानडट्स्त्रीप्रमाण्योरः ॥१४८॥ प्रधानभूता या डडंता स्त्रीप्रमाणीशब्दश्च तदंताद् बाद् अत्यो वा स्यात् । कल्याणी पंचमी आसां कल्याणीपंचमा रात्रयः । कल्याणीषष्ठा भार्याः । स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः कुटुंबिनः । प्रधानग्रहणं किं ? कल्याणी पंचमी यस्मिन् कल्याणीपंचमीकः पक्षः ।

*भान्नेतुः ॥१४९॥ भवाचिनः परात् नेतृशब्दादस्यं स्यात् । मृगो नेता आसां मृगनेत्रा रात्रयः । पुष्यनेत्राः । भादिति किं? द्रुपनेतृकं सैन्यं ।

*लोम्नोऽन्तर्बहिर्भ्यां ॥ १५० ॥ आभ्यां परात् लोम्नः अस्यं स्याद् बसे । अंतर्गतानि लोमान्यस्य अंतर्लोमः । बहिर्लोमः ।

नञ्बहोर्ऋचो माणवचरणे ॥ १५१ ॥ नञ्बहुभ्यां परात् ऋक्शब्दात् अस्यो भवति यथासंख्यं माणवे चरणे च वाच्ये । न विद्यंते ऋचोऽस्य अनृचः माणवकः । बह्वृचो ब्राह्मणः । माणवचरण इति किं? अनृकं साम । बह्वृकं सूक्तं ।

*नाभेः खौ ॥१५२॥ नाभ्यंताद् बसादस्यो भवति खौ । हिरण्यं नाभौ यस्य-हिरण्यनाभः । पद्मनाभः । ऊर्णनाभः ।

*नञ्द्व्युपत्रेश्चतुरः ॥ १५३ ॥ एभ्यः परात् चतुःशब्दात् अस्यं स्यात् बसे । अविद्यमानानि चत्वारि येनासौ अचतुरः । विगतानि चत्वारि यस्य विचतुरः । समीपे चतुर्णां-उपचतुरं । त्रयो वा चत्वारो वा-त्रिचतुराः ।

सोः ॥ १५४ ॥ सुपूर्वाच्चतुरोऽस्यं स्यात् । शोभनानि चत्वारि यस्यासौ सुचतुरः ।

प्रातर्दिवाश्वसः ॥ १५५ ॥ सुपूर्वाद् प्रातरादेरस्यं स्यात् । शोभनं प्रातरस्य सुप्रातः । सुदिवः । सुश्वः ।

प्रोष्ठ्याजात्पदः ॥१५६॥ प्रोष्ठादेः परः पदो निपात्यते । प्रोष्ठस्येव पादावस्य-प्रोष्ठपदः । एणीपदः । अजपदः । अस्ये पद्भावः ।

चतुःशारेरक्षिकुक्षेः ॥१५७॥ चतुःशारिपूर्वाभ्यां अक्षिकुक्षिभ्यामस्यं स्यात् । चत्वारोऽक्षयोऽस्य चतुरक्षः । शारिरिव कुक्षिरस्य शारिकुक्षः ।

नञ्दुःसोःसक्थिहलेर्वा ॥ १५८ ॥ नञादिपूर्वाभ्यां सक्थिहलिभ्यां अस्यो वा स्यात् ।

न विद्यते सक्थ्यस्य-असक्थः।असक्थिः। दुःसक्थः। दुःसक्थि। सुसक्थः। सुसक्थिः। अहलः। अहलिः। दुर्हलः। दुर्हलिः। सुहलः सुहलिः।

*अस् प्रजायाः ॥१५९॥ नञादिपूर्वात् प्रजाशब्दादस् स्यात्। न विद्यते प्रजा अस्य अप्रजाः। अप्रजसौ। अप्रजसः। दुःप्रजाः। सुप्रजाः।

*मंदाल्पाच्च मेधायाः ॥१६०॥ आभ्यां परात् नञादिपूर्वाच्च मेधाशब्दात् अस् स्यात् बसे। मंदमेधाः। अल्पमेधाः। अमेधाः।दुर्मेधाः।सुमेधाः।

धर्मात् केवलादन् ॥ १६१॥ केवलो धर्मशब्द एव यत्रोत्तरपदं तदंतात् बसात् अन् स्यात्। साधूनामिव धर्मोऽस्य साधुधर्मा। क्षत्रियधर्मा। अंबतधर्मा। केवलादिति किं ? परमः स्वो धर्मोऽस्य परमस्वधर्मः।

सुहरिततृणसोमाज्जंभात् ॥ १६२ ॥ स्वादिपूर्वाद् जंभादन् स्यात्। शोभनो जंभो यस्य सुजंभा। हरितजंभा। तृणजंभा। सोमजंभा। स्वादेरिति किं ? चारुजंभः।

दक्षिणेर्मा लुब्धयोगे ॥ १६३ ॥ दक्षिणेर्मेति अनंतो निपात्यते लुब्धेन योगे।दक्षिणं अंगं ईर्मं वृणं व्रणं वाऽस्य व्याधेन दक्षिणेर्मा मृगः। लुब्धयोग इति किं ? दक्षिणेर्मः पशुः।

*संप्राज्जानोर्ज्ञुज्ञौ ॥१६४॥ संप्राभ्यां परस्य जानुशब्दस्य ज्ञुज्ञावादेशौ स्तः। संगते जानुनी अस्य-संज्ञुः। संज्ञः।प्रगते प्रकृष्टे वा जानुनी अस्य—प्रज्ञुः। प्रज्ञः।

वोर्ध्वात् ॥ १६५ ॥ ऊर्ध्वात्परस्य जानुनस्तौ वा स्तः। ऊर्ध्वे जानुनी अस्य—ऊर्ध्वज्ञुः। ऊर्ध्वज्ञः। ऊर्ध्वजानुः।

जायाया निङ् ॥ १६६ ॥ जायाशब्दस्य निङ् भवति। युवतिर्जाया यस्य—युवजानिः।

*भृतिस्वान्मासाठः ॥१६७ ॥ भृतावर्थे विहितात् स्वात् परान्मासात् ठो भवति। पंच भृतिरस्य पंचकः।पंचको मासोऽस्य पंचकमासिकः। विंशकमासिकः। भृतिस्वादिति किं ? द्विमासः।

*सुपूत्युत्सुरभेर्गुणे गंधस्येः ॥१६८॥स्वादिभ्यःपरस्य गुणवाचिनःगंधस्य बसे इकारादेशो भवति। शोभनो गंधोऽस्य सुगंधिः। पूतिगंधिः। उद्गंधिः। सुरभिगंधिः। स्वादेरिति किं ? तीव्रगंधो हिंगुः। गुण इति किं ? शोभनगंधास्तगराद्योऽस्य सुगंधः आपणिकः।

*वाऽल्पे ॥ १६९ ॥ अल्पार्थे वर्तमानस्य तस्येर्वा स्यात्।घृतस्य गंधोऽल्पमस्मिन् घृतगंधिः। घृतगंधः ओदनः। सूपगंधिः। सूपगंधः।

*वोपमानात् ॥१७०॥उपमानादुत्तरस्य गंधस्येर्वा स्यात्। पद्मस्येव गंधोऽस्य पद्मगंधिः। पद्मगंधः। उत्पलगंधिः। उत्पलगंधः। करीषगंधिः। करीषगंधः। पुनर्वाग्रहणमुत्तरत्र निवृत्यर्थं।

खं पादस्याहस्त्यादेः ॥ १७१ ॥ हस्त्यादिवर्जितादुपमानादुत्तरस्य पादस्य खं भवति। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। पादस्येति किं ? व्याघ्रमुखः। अहस्त्यादेरिति किं ? हस्तिपादः। अश्वपादः। महिषपादः। दासीपादः।

सुस्र्यादेः ॥ १७२ ॥ स्वादेः स्यादेश्च तस्य खं स्यात् बसे। शोभनौ पादावस्य सुपात् द्विपात्। त्रिपात्। चतुःपात्।

कुंभपद्यादिः ॥ १७३ ॥ एते निपात्यंते। कुंभ इव पादावस्य कुंभपदी। एकपदी। सूकरपदी। गोधापदी। सूचीपदी।

वयसि दंतस्य दतृ ॥ १७४ ॥ वयसि गम्यमाने स्वादेः स्र्यादेश्च परस्य दंतस्य दतृ इत्ययमादेशः स्यात्। शोभना दंता अस्य सुदन्। द्विदन्। त्रिदन्। चतुर्दन्। पंचदन्। षोडन्।

चतुर्दती गौः। वयसीति किं ? चतुर्दन्तो हस्ती।

स्त्रियां खौ ॥ १७५ ॥ स्त्रियां दंतस्य दतृ स्यात् खौ । अय इव दंता अस्याः-अयोदती । फालदती । स्त्रियामिति किं ? वज्रदंतः । खाविति किं ? समदंती ।

वा श्यावारोकात् ॥ १७६ ॥ आभ्यां परस्य दंतस्य दतृ वा स्यात् खौ । श्यावा ध्यामलिताकाराः दंता अस्य-श्यावदन् । श्यावदंतः । अरोकाः निर्दीप्तयो निश्छिद्रा वा दंता अस्य-अरोकदन् । अरोकदंतः ।

शुद्धाग्रांतशुभ्रवृषवराहाहिमूषिकात् १७७ एभ्यः परस्य दंतस्य दत्रादेशो भवति वा बसे । शुद्धा दंता अस्य शुद्धदन् । शुद्धदंतः । कुड्मलाग्रमिव दंता अस्य कुड्मलाग्रदन् । कुड्मलाग्रदंतः । शिखराग्रदन्, शिखराग्रदंतः। शुभ्रदन्, शुभ्रदंतः । वृषदन् वृषदंतः । वराहदन्, वराहदंतः । अहिदन्, अहिदंतः । मूषिकदन् मूषिकदंतः ।

ककुदस्यावस्थायां खं ॥ १७८ ॥ ककुदस्य खं भवत्यवस्थायां । असंजात ककुदमस्य असंजातककुत् । पूर्णककुत् । अवस्थायामिति किं ? श्वेतककुदः ।

त्रिककुदद्रौ ॥ १७९ ॥ त्रिककुदिति निपात्यते अद्रावभिधेये । त्रीणि ककुदान्यस्य त्रिककुद् गिरिः । त्रिककुदोऽन्यः ।

व्युदः काकुदस्य ॥ १८० ॥ आभ्यां परस्य काकुदस्य खं स्यात् । विशिष्टं काकुदं ताल्वस्य-विकाकुत् । उत्काकुत् ।

पूर्णाद् वा ॥१८१ ॥ पूर्णाद् परस्य खं वा स्याद् । पूर्णं काकुदमस्य-पूर्णकाकुत् । पूर्णकाकुदः ।

+खरखुराभ्यां नासिकायाः खौ ॥१८२॥ खरखुराभ्यां परस्य नासिकाशब्दस्य नस् भवति खौ । खरस्येव नासिकास्य-खरणाः । खुरणाः । खाविति किं ? खरनासिकः ।

*नसोऽस्थूलाच्च ॥ १८३ ॥ स्थूलवर्जितान्युदः ताभ्यां च परस्य नासिकायाः नसो भवति खौ । द्रु इव नासिकास्य-द्रुणसः। वार्ध्रीणसः । गोनसः । खरणसः । खुरणसः । अस्थूलादिति किं ? स्थूलनासिका ।

गेः ॥ १८४ ॥ गेः परस्याः तस्याः नसो भवति । उन्नता नासिकास्य-उन्नसं । प्रणसं मुखं ।

+वेः खुखग्राः ॥ १८५ ॥ विपूर्वायाः तस्याः खुखग्राः आदेशाः भवति । विगता नासिकास्य विखुः । विखः । विग्रः ।

सुहृद्दुर्हृन्मित्रामित्रे ॥ १८६ ॥ एतौ निपात्येते मित्रामित्रे चाभिधेये । शोभनं हृदयमस्य-सुहृत् मित्रं । पापं हृदयमस्य दुर्हृदमित्रं । हृदयस्य हृद् । मित्रामित्र इति किं ? सुहृदयः साधुः । दुर्हृदयः खलः ।

*धनुःखौ ॥ १८७ ॥ धनुः शब्दः खावेव प्रयोक्तव्यो बसे । शतं धनूंष्यस्य शतधनुः । दृढधनुः । पुष्पधनुः । खाविति किं ? गाण्डीवधन्वा । शार्ङ्गधन्वा ।

*स्त्रियामूधसोऽनङ् ॥ १८८ ॥ स्त्रियां वर्तमानस्योधसोऽनङ् स्यात् । कुंडमिवोधोऽस्याः कुंडोध्नी । घटोध्नी गौः । पीनोध्नी । स्त्रियामिति किं ? महोधाः पर्जन्यः ।

*इनः कप् ॥ १८९ ॥ इन्नंतात् कप् भवति स्त्रियां । बहवो दंडिनोऽस्यां बहुदंडिका । बहुछत्रिका । बहुवाग्मिका शाला ।

*उरःप्रभृतेः ॥ १९० ॥ उरःप्रभृतिभ्यः कप् स्यात् । व्यूढमुरोऽस्य व्यूढोरस्कः । महोरस्कः । चित्रोपानत्कः । प्रभूतसर्पिष्कः । सलक्ष्मीको जिनः ।

नञोऽर्थात् ॥ १९१ ॥ नञ्पूर्वादर्थात् कप् स्यात् । नास्त्यर्थो ऽस्यानर्थकं । नञ इति किं ? अर्थे ।

+पुंस्यचोनडुन्नौलक्ष्म्य एकार्थे ॥ १९२ ॥ एभ्य एकार्थे एकत्वे कप् स्यात् । प्रियः पुमानस्याः—प्रियपुंस्का । प्रियपयस्कः । प्रियानुडुत्कः । प्रियनौकः । प्रियलक्ष्मीकः । एकार्थ इति किं ? द्विपुंस्कः । द्विपुमान् । बहुलक्ष्मीकः। बहुलक्ष्मीः ।

ऋन्मोः ॥ १९३ ॥ ऋकारांतान्मुसंज्ञाच कप् स्यात् । बहुभर्तृका स्त्री । बहुमातृकः । बहुकुमारीकः । बहुवामोरूकः ।

शेषाद्वा ॥ १९४ ॥ यस्य सांतो विधिर्न विहितस्तस्माद् शेषात् कब्वा स्यात् । बहुखट्वाकः । बहुखट्वकः । बहुखट्वः । बहुमालाकः, बहुमालकः, बहुमालः। शेषादिति किं ? वृकपात् ।

*नेयसः ॥ १९५ ॥ ईयसंतात् कप् न भवति । बहुश्रेयान् । विद्यमानश्रेयसी । बहुश्रेयसी पुरुषः ।

खौ ॥ १९६ ॥ खौ विषये कप् न भवति। बहुदेवदत्तः । विश्वदेवो ग्रामः ।

+सहादेस्तुल्ये ॥ १९७ ॥ तुल्ये यो वर्तते सहशब्दः तदादेः कप् न स्यात् । सपुत्रः आगतः । सपुत्रः स्थूलः । सहादेरिति किं ! श्वेताश्वकोऽयमागतः । तुल्य इति किं ? सह विद्यमानानि लोमान्यस्य लोमकः ।

स्तुतौ भ्रातुः ॥ १९८ ॥ स्तुत्यर्थे भ्रातुः कप् न स्यात् । सुभ्राता । दर्शनीयभ्राता । कल्याणभ्राता । स्तुताविति किं ? दुर्भ्रातृकः ।

नाडीतंत्र्योः स्वांगे ॥१९९॥ आभ्यां स्वांगे कप् न स्यात् । बहुनाडी जंघा । बहुतंत्री ग्रीवा । स्वांगे इति किं ? बहुनाडीकः स्तंबः । बहुतंत्रीका वीणा ।

निष्प्रवाणिः ॥ २०० ॥ निष्प्रवाणिरित्यकबंतं निपात्यते । निर्गता प्रवाणी तंतुवायशलाका अस्मान्निःप्रवाणिः पटः कंबलो वा ।

अ इच् ॥ २०१ ॥ आर्थे इच् स्यात् । केशाकेशि । कचाकचि । मुशलामुशलि ।

द्विदंड्यादिः ॥२०२॥ द्विदंड्यादयः इजंताः साधवो भवंति । द्वौ दंडौ अस्मिन् प्रहरणे द्विदंडि । उभादंडि । त्रिदंडि । उभादंति घ्नंति । उभांजलि पिबति । उभयाबाहु प्रहरति ।

इति श्रीशब्दार्णवापरनाम्नि जैनेंद्रमहाव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ चतुर्थाध्याये द्वितीयपादः ।

## तृतीयः पादः ।

आदेरेकाचो द्वे ॥ १ ॥ आदेरेकाचः द्वे रूपे भवतः इत्याधिकृतं वेदितव्यं।वक्ष्यति—लिडुच्कचि धोः"इति। तेन धोरादेरेकाचः द्वे रूपे भवतः। पपाच । जुहोति । अपीपचत् । आदेरिति किं ? जजागार । अनाद्यस्य ऋकारस्य माभूत् ।

+सुपः ॥ २ ॥ सुब्धोर्यस्य कस्यचिदेकाचो द्वे स्तः । इत्यधिकृतं ज्ञेयं । वक्ष्यति—सन्यङोः । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति ।

अचः ॥ ३ ॥ धोः सुब्धोश्चादेरचः परस्यैकाचो द्वे भवतः । अटाट्यते । आशिश्वीयिषति, अश्वीयियिषति । अश्वीयिषिषति ।

न स्कादौ न्द्रोऽयि ॥ ४ ॥ स्कादौ वर्तमाना आदेरचः परे नकारदकाररेफवकारा न द्विरुच्यंते अयकारे परतः । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । उब्जिजिषति। स्कादाविति किं ? अरिरिषति । न्द्र इति किं ? ईचिक्षिषते । अयीति किं ; अराऱ्यते । अयः

इति किं ? दिद्रासति ।

+चस्यैके ॥५॥ चसंज्ञकस्य द्वे न स्त इत्येके । लोलूयिषते । अस्त्येवेत्यपरे । लुलोलूयिषते ।

+यकस्तृतीयस्य ॥६॥ यगंतस्य धोस्तृतीयस्यैकाचो द्वे स्तः।कंडूयियिषति।धोमूयियिषति ।

×ईर्ष्यः ॥ ७ ॥ ईर्ष्यतेस्तृतीयस्यैकाचो द्वे स्तः । ईर्ष्यियिषति । ऐर्ष्यियन् ।

+सनो वा ॥ ८ ॥ ईर्ष्यतेः सनंतस्य तृतीयस्यैकाचो द्वे वा स्तः । ईर्ष्यिषिषति । ईर्ष्यियिषति।

चः ॥९॥ ते द्वे समुदिते चसंज्ञे स्तः । ददति । दधति । अददुः । चप्रदेशाः चस्तिमेरित्यादयः ।

जक्षादिः ॥ १० ॥ जक्षित्यादयः चसंज्ञका भवंति । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति ।

पूर्वश्चः ॥ ११ ॥ द्विरुक्तयोः पूर्वोऽवयवः चसंज्ञो भवति । पपाठ । पापठ्यते । अपीपठत् । चप्रदेशाः चस्योवादयः ।

लिड्ङ्चकचि धोः ॥ १२ ॥ लिटि ङचि कचि च परतः धोः सुब्धोऽद्वाद्देरच परस्य चैकाचो द्वे स्तः । पपाच । प्रोर्णुनाव । बिभेति । आटिटत्, आशिश्रीयत् । लिड्ङ्चकचीति किं ? प्रादात् । धोरिति किं ? ईहांचक्रे ।

सन्यङोः ॥ १३॥ सनंतस्य यङंतस्य च द्वे रूपे भवतः । अटिटिषति । अटाट्यते । चिकीर्षति । चेक्रीयते ।

+चिक्लिदचक्नसदाश्वस्साह्वन्मीढ्वत्॥१४॥ एते निपात्यंते । चिक्लिदः । चक्नसः । कस्ये द्वित्वं । दाश्वान् । श्वसो ह्रट् द्वित्वाभावश्च । साह्वान् । सहेर्माविषित्वो दीत्वमद्वित्वमनिट्त्वं च । मीढ्वान् । मिहेरद्वित्वमानिट्त्वमुको दीत्वं ढत्वं च ।

+चरचलपतवदोऽच्याकचस्य ॥ १५॥ चरादिनामच्चे द्वित्वं वा स्यात् चस्य चाक् । वदावदः । वदः।चराचरः।चरः।चलाचलः।चलः।पतापतः।पतः।

+घनाघनपाटूपटौ ॥१६॥एतौ वा निपात्यौ । घनाघनः । हंतेराचि चत्वं द्वित्वं च । चस्य चागागमः । घनः । पाटूपटः । पाटेराचि णेरलुप् द्वित्वं चस्याकोऽपवादः ऊगागमो दीत्वं च ।

*लिटीज्यणः साचोऽस्वर्योऽऽज्यां॥१७॥ आज्या इत्येतस्मात् पूर्वस्य धोर्लिटि चस्य साचो यणः इग् भवति अरेफयकारपरस्य । सुष्वाप । सुष्वपिथ । उवाच । उवचिथ । इयाज । इयजिथ । उवाच । उवयिथ । उवास । उवसिथ । विव्याध । विव्यधिथ । विव्याच । विव्याचिथ । जिज्यौ । जिज्यिथ । अर्ध्य इति किं?विव्याध । आज्यामिति किं?सस्याम ।

*न वा यः॥१८॥ वेञो यकारस्य लिटि इग् न भवति । ऊयतुः । ऊयुः ।

*वा ॥१९॥ वेञो यकारस्य लिटि वा नेग् भवति । ऊयतुः । ऊयुः । ऊवतुः । ऊवुः ।

प्ये च॥२०॥ वेञः प्ये लिटि चेग् न भवति । प्रवाय । ववतुः । ववुः । वविथ ।

ज्यः ॥२१॥ ज्या इत्येतस्य धोः प्ये इग् न भवति । प्रज्याय । उपज्याय ।

व्यः ॥२२॥ व्येञः प्ये नेग् भवति । संव्याय । उपव्याय ।

परेर्वा ॥२३॥ परेः परस्य व्येञः प्ये नेग् वा स्यात् । परिव्याय । परिवीय ।

*स्वप्वच्छ्याद्देः किति ॥२४॥ स्वप्वचोः स्यादीनां च किति साचो यणः इक् स्यात् । सुप्तः । सुप्तवान् । सुप्त्वा । सुप्तिः । उक्तः । उक्तवान् । उक्त्वा । उक्तिः । शूनः । शूनवान् । उषितः । उषितवान् । उदितः । उदितवान् । उदित्वा । उदितिः । इष्टः । इष्टवान् । इष्ट्वा । इष्टिः । उप्तः । उप्तवान् । उप्त्वा । उप्तिः । ऊतः । ऊतवान् । ऊत्वा ।

ऊदि० । उत: । उतवान् । उत्वा । उति: ।संवीत: । संवीतवान् । संवित्वा । संवीति: । हूत: । हूतवान् । हूत्वा । हूति: । किनीति किं ? स्वस: ।

* वशिव्यधिव्यचिज्याग्रहिव्रश्चिप्रच्छिभ्रस्जां क्ङिति ॥ २५॥ वश्यादीनां किति ङिति येग् भवति । उशित: । उशितवान् । उष्ट: । उशंति । विद्ध: । विद्धवान् । विध्यति । विचित: । विचितवान् । विचति । जिनाति । जीन: । जीनवान् । जीयते । गृहीत: । गृहीतवान् । गृह्णाति । वृश्चति । वृक्ण: । वृक्णवान् । पृष्ट: पृष्टवान् । पृच्छति । भृष्ट: । भृष्टवान् । भृज्जति । किनीति किं ? विव्येचि । अर्थीति किं ? वृश्च्यते ।

कचि स्वापे: ॥ २६ ॥ स्वापे: कचीग्भवति असूषुपत् । असूषुपतां । असूषुपन् । कचीति किं ? स्वाप्यते ।

*न श्वे: ॥ २७ ॥ श्वयते: कचीग् न भवति । आशिश्वियत् । आशिश्वियतां । अशिश्वियन् ।

*वशो यङि ॥ २८ ॥ वशेर्यङीक् न भवति । वावश्यते । वावश्येते । वावश्यंते । यङीति किं ? उशंति ।

*स्वप्स्यमव्य: ॥ २९ ॥ एषां यङीग् भवति । सोषुप्यते । सेसिम्यंते । वेवीयते ।

चाय: की ॥ ३० ॥ चायते: यङि परत: कीत्ययमादेशो भवति । चेकीयते, चेकीयेते । चेकीत: । चेकीथ: ।

*ह्वस्ये ॥ ३१ ॥ थसंज्ञानिमित्ते स्ये ह्वयतेरिग् भवति । जुहुवति । जोहूयते । जुहाव ।

*णौ सन्कचा: ॥ ३२ ॥ सन्परे णौ कच्परे च णौ ह्वयतेरिग् भवति । जुहावयिषति । अजूहवत् । अजूहवतां । अजूहवन् ।

न वा श्वे: ॥ ३३ ॥ श्वयते: सन्कच्परे णौ न वेग् भवति । शुशावयिषति । शिश्वायिषति । अशूशवत् । अशिश्वियत् ।

लिङ्यङो: ॥ ३४ ॥ श्वयतेर्लिटि यङि च न वेग् भवति । शुशाव । शुशुवतु: । शुशुवु: । शिश्वाय । शिश्वियतु: । शिश्वियु: । शोशूयते । शेश्वीयते ।

प्याय: ॥ ३५ ॥ प्यायीङो लिड्यङोरिग् भवति । आपिप्ये । आपिप्याते । आपेपीयते । आपेपीयेते ।

*तेऽगे: ॥ ३६ ॥ गिहीनस्य प्याय: इग् भवति तसंज्ञके परत: । पीनं मुखं । पीनावंसौ । पीनौ स्तनौ । पीनवंतौ स्तनौ । त इति किं ? प्यायते । अगेरिति किं ? प्रप्यानमूध: ।

*आङोऽन्धौ ॥ ३७ ॥ आङ: परस्य प्याय: इग् भवति अंधावर्थे । आपीनोऽधु: । आपीनमूध: । आपीनवानंधू: । आपीनवदूध: । आङ इति किं ? प्रप्यानमूध: । अंधाविति किं ? आप्यानश्चंद्रमा: ।

*स्फाय: ॥ ३८ ॥ स्फायतेरिग् भवति ते परत: । स्फीत: । स्फीतवान् ।

*प्रमाच:स्त्य: ॥३९॥ प्रपूर्वस्य स्त्यायतेरिग् भवति ते परत: । प्रस्तीत: । प्रस्तीतवान् । प्रस्तीम: । प्रस्तीमवान् । प्रमाच इति किं ? संस्त्यान: । संस्त्यानवान् ।

*द्रवमूर्तिस्पर्शे श्य: ॥ ४० ॥ द्रवमूर्तौ स्पर्शे च श्यङ: इग् भवति ते परत: । शीनं घृतं । शीतं तोयं । द्रवमूर्तिस्पर्श इति किं ? संस्त्यानो वृश्चिक: । शीतेन गत: संकुचितो वा ।

प्रते: ॥ ४१ ॥ प्रतिपूर्वस्य श्यायतेस्ते इग् भवति । प्रतिशीन: । प्रतिशीनवान् ।

*वाभ्यवमाच: ॥ ४२ ॥ अभिअवपूर्वस्य श्यायतेस्ते इग् वा भवति । अभिशीन: । अभिश्यान: । अभिशीनवान् । अभिश्यानवान् । अवशीन: । अवशीनवान् । अवश्यान: । अवश्या-

भवान् । अभ्यवक्षीनः । अभ्यवक्षानः ।

*हविःक्षीरे शृतं पाके ॥ ४३ ॥ श्राश्रप्योः के शृभावो निपात्यते हविःक्षीरयोः पकार्थे शृतं हविः । शृतं क्षीरं । हविःक्षीर इति किं? श्राणा यवागूः । श्रपिता यवागूः ।

एचोऽश्यपः ॥ ४४ ॥ एजंतस्य धोरात्वं भवति अशिति परतः । दाता । दातुं । दातव्यं । अवदाता । अवदातुं । अवदातव्यं । ध्याता । ध्यातुं । ध्यातव्यं । अशीति किं? वयति । अवद्यति । ग्लायति ।

*व्योऽकिटि ॥ ४५ ॥ व्येञः आ भवत्यकिटि परतः । संव्याता । संव्यातुं । संव्यातव्यं । उपसंव्यानं । अकिटि इति किं? विव्याय । विव्ययिथ ।

स्फुरिस्फुल्योर्घञि ॥ ४६ ॥ अनयोर्घञि आ भवत्येचः । विष्फारः । विस्फारः । विष्फालः । विस्फालः ।

*वाम्यपगुरः ॥ ४७ ॥ अपगुरीङः एचः आ वा स्यात् अमिपरे । अपगारमपगारं । अपगोरमपगोरं ।

*दीङः सनि ॥ ४८ ॥ दीङः आ वा स्यात् सनि परतः । दिदासते । दिदीषते ।

ल्ये च ॥ ४९ ॥ दीङो नित्यमा भवति ल्ये चैज्विषये च । उपदाय । उपदाता । उपदातव्यं । ल्ये चेति किं? अवदीयते ।

*मिग्मीगोरखलचि ॥ ५० ॥ अनयोरा भवति खलचं च मुक्त्वा ल्ये एज्विषये च । निमाय । निमाता । निमातुं । निमातव्यं । प्रमाय । प्रमाता । प्रमातुं । प्रमातव्यं । अखलचीति किं? ईषन्निमयः । दुष्प्रमयः । निमयः । प्रमयः ।

*वा लीङ्लिनात्योः ॥५१॥ अनयोरेचो-रा वा स्यात् ल्ये चाविषये, विलाय, विलीय । विलाता । विलेता । विलातुं, विलेतुं । विलातव्यं । विलेतव्यं । अखलचीति किं? ईषद्विलयः । विलयः

*अर्त्यादौ णौ ॥५२॥ अर्त्यादिविषयेषु लीङ्लिनात्योः णौ नित्यमा भवति । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । लोकमुल्लापयते ।

क्रीङ्जेः ॥ ५३ ॥ एषामेचो णौ आत्वं स्यात् । क्रापयति । अध्यापयति । जापयति ।

सिध्यतेरज्ञाने ॥ ५४ ॥ सिध्यतेरा भवत्यज्ञानेऽर्थे णौ परतः । अन्नं साधयति । अर्थं साधयति । अज्ञान इति किं? आचारः कुलं सेधयति । क्षमा धर्मं सेधयति ।

चिस्फुरोर्वा ॥५५॥ चिञ्स्फुरश्च णौ आ वा स्यात् । चापयति, चाययति धर्मं । स्फारयति स्फोरयति धनुः ।

प्रजने वेतेः ॥ ५६ ॥ प्रजनेऽर्थे वेतेर्णौ आ वा स्यात् । पुरो वातो गाः प्रवापयति । प्रवाययति । लवणं गाः प्रवापयति । लवणं गाः प्रवाययति ।

*बिभेतेर्दे ॥ ५७ ॥ बिभेतेर्णौ आ वा भवति दविषये । मुंडो भापयते । जटिलो भापयते । मुंडो भीषयते । द इति किं? कुंचिकयैनं भाययति ।

ईतः षुग् नित्यं ॥ ५८ ॥ ईकारांतस्य बिभेतेर्दे णौ नित्यं षुगागमो भवति । जटिलो भीषयते ।

स्मिङः ॥ ५९ । दे णौ परतः स्मिङः आत्वं स्यात् । मुंडो विस्मापयते । जटिलो विस्मापयते ।

झल्यकिति सृजिदृशोऽम् ॥ ६० ॥ झला-दावकिति परतः सृजिदृशोरमागमो भवति । स्रष्टा । स्रष्टुं । स्रष्टव्यं । स्रक्ष्यति । द्रष्टा । द्रष्टुं । द्रष्टव्यं । द्रक्ष्यति । अकितीति किं? सृष्टं

दर्शनं । अकितीति किं ! मृष्टः । दृष्टः ।

*स्पृशादिसृपो वा ॥६१॥ स्पृशादीनां सृपेश्च झल्यकिति अम् वा भवति । स्प्रष्टा । स्पष्टा । म्रष्टा । मर्ष्टा । क्रष्टा । कर्ष्टा । त्रप्ता । तप्ता । द्रप्ता । दर्प्ता । स्रप्ता । सर्प्ता ।

*ष्वादेः ष्णोऽष्ठ्य,ष्ठिवष्वष्कः स्नं ॥६२॥ धोरादयोः षकारणकारयोः सकारनकारादेशौ स्तः ष्ठ्यादीन् वर्जयित्वा । सहते । नयति । नह्यति । ष्वादेरिति किं ! षोडन् । लषति । मणति । अष्ठ्यादेरिति किं ! ष्ठ्यायति । निष्ठीवति । ष्वष्कते ।

*व्योः खं वल्क्यौ ॥ ६३ ॥ वकारयकारयोः खं भवति वलि क्यौ च परतः । देदिवः । देदिमः । सेसिवः । सेसिमः । ऊयी- ऊतः । क्नूयी- क्नूतं । क्ष्मायी क्ष्मातं । कंडूः । गोधूः । वल्क्यौ इति किं ! सेव्यते

हल्ङ्याब्भ्यः सुसिप्त्यनच् ॥ ६४ ॥ हलंतात् ङी चाप् च यो दीर्घस्तदंताच्च सुसिप्ति-पामनचां खं भवति । तक्षा । उखास्रत् । कुमारी । गौरी । प्रतिमा । बहुराजा । अभिनस्त्वं । अछि-नस्त्वं । अबिभर्भवान् । अजागर्भवान् । हल्-ङ्याब्भ्य इति किं ! जिनः । लक्ष्मीः । क्षीरपाः । निष्कौशाम्बिः । अतिखट्वः । सुसिप्तीति किं ! अभात्सीत् । अनजिति किं ! भिनत्ति ।

केरेङः ॥६५॥ एङन्तस्य केः खं भवति । हे मुने । हे साधो । एङ इति किं ! हेगौः ।

ह्रस्वात् ॥ ६६ ॥ ह्रस्वादुत्तरस्य केरनचः खं भवति । भोः धुर । हे जिनदत्त ।

पिति कृति तुक् ॥ ६७ ॥ ह्रस्वांतस्य तुगागमो भवति पिति कृति परतः । अग्निचित् । प्रस्तुत्य । पिति कृति इति किं ! चितं गुरुं । ह्रस्वेति किं ! प्रलूय । ग्रामणीः ।

संधौ ॥६८॥ संधावित्यधिकारो वेदितव्यः ।

संश्लेषः संनिकर्षो वा संधिरिति लोकत एव ज्ञेयं । वक्ष्यति "अचीको यण्,, दध्यशानसंधाविति किं ! दधि अशान ।

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा व्यपेक्षामपेक्षते ॥१

छेऽचः ॥ ६९ ॥ अचः छे परतः तुगागमो भवति । गच्छति । इच्छति । पृच्छति ।

आङ्माङोः ॥ ७० ॥ अनयोस्तुग् भवति छे परतः । आच्छादयति । आच्छिनत्ति । माच्छै-त्सीत् । माच्छिदत् । ङकारः किं ! आछत्रमान-यति आछत्रं । उपमाछत्रं । उपमाछत्रमानयति ।

*दो वा पदस्य ॥ ७१ ॥ पदस्य संबंधिनो दश्छो वा तुक् स्यात् । बदरीच्छाया । कुबलीच्छाया । द इति किं ? श्वेतच्छत्रं । पदस्येति किं ? ह्रीच्छति म्लेच्छति । अपच्छायते ।

*पस्य ॥ ७२ ॥ पदस्य संबंधिनो दीसंज्ञस्य स्थाने यः परतस्य तुग्वा स्यात् छे परतः । हे इंद्रभूते उच्छत्रमानय । हे इंद्रभूते उछत्रमानय ।

अचीको यण् ॥ ७३ ॥ अचि परे इकः यण् भवति ।

त्वं दध्यशान नंदन मध्वपनय रागबर्द्धनं धीर।
पित्रर्थः परिहार्यो राजकुले लाकृतिस्त्याज्या ॥

एचोऽयवायाव् ॥ ७४ ॥ एचोऽचि परे अयादयो भवंति । नयनं । पवनं । रायौ । नावौ ।

+गव्यूतिरध्वमाने ॥ ७५ ॥ गोरव् निपा-त्यते अध्वपरिमाणे यूतौ परतः । गव्यूतिः । अध्वमान इति किं ? गोयूतिः ।

ध्रु यि त्ये ॥ ७६ ॥ धकारांतो य आदेशः स यथास्थाने भवत्येचो यकारादौ त्ये परतः । गव्यति । नाव्यति । स्थानिग्रहणं किं ! स्वेयति । रैयति । त्यि इति किं ! गोभ्यां । त्य इति किं ! गोयानं ।

*योस्तत्रैव ॥ ७७ ॥ योर्यकारत्वानिमित्तस्यै-वैचो वकारांतादेशो भवति । हव्यं । लव्यं । अवश्यलाव्यं । अवश्यपाव्यं । योरिति किं ? वृत्तियमो मा भूत् । बाभ्रव्यो गव्यः । नाव्यं । तत्रैवेति किं ? उपोयते ।

क्षिज्योः शक्तौ ॥ ७८ ॥ शक्त्यर्थे क्षिज्योरेचोऽय् भवति । क्षेतुं शक्यः क्षय्यः । जय्यः शत्रुः । शक्ताविति किं ? क्षेयं । जेयं ।

क्रय्यः स्वार्थे ॥ ७९ ॥ क्रीणातेरेचः स्वार्थेऽय् निपात्यते यत्ये परे । क्रय्या गौः । क्रय्यः कंबलः । केयमन्यत् ।

द्वयोरेकः ॥ ८० ॥ द्वयोः पूर्वपरयोरेको भवतीत्ययमधिकारो ज्ञेयः । वक्ष्यत्यादेप्-देवेंद्रः ।

तद्वत् ॥ ८१ ॥ तयोरिव तद्वत् । तयोः पूर्वपरयोः यत् कार्यं तत्कनेऽप्येकादेशे यथा स्यात् । वामोरु इति मृत् । ऊरित्यमृन्मृदमृदोरेकादेशः मृद्वद्भवति । तथा च स्यादिविधि । अन्यथा वृक्षादा वेव स्यात् । देवावित्यत्र मुबौकारः । अमुबकारः । तयोरेकादेशः मुब्वद् भवति । तथा च मुबंतं पदमिति साधुः । अन्यथा साधुः पूज्यः इत्यादावेव स्यात् । अर्धात्य प्रेत्येत्यत्र पस्वद्भावात् मस्य तुक् ।

आदेप् ॥ ८२ ॥ अवर्णांतादच्येव भवति । सेयं । गंधोदकं । परमर्द्धिः । तवल्कारः । आदिति किं ? दध्यृणं ।

एच्यैप् ॥ ८३ ॥ अवर्णांतादेचि पर एकम-वति । सैषा । ममौषधिः । तवैश्यं । वरौषधं ।

*इणेधूठि ॥ ८४ ॥ अवर्णांतादैब्भवति एधू परतः । उपैति । प्रैधते । धौतः । धौतवान् । एत्यादीति किं ? प्रेतः ।

+अक्षादूहिन्यां ॥ ८५ ॥ अक्षादैब्भवत्यू-हिन्यां परतः । अक्षौहिणी सेना ।

स्वादीरेरे ॥ ८६ ॥ स्वादैब्भवति ईरी-रयोः परतः । स्वैरी । स्वैरिणी । स्वैरः ।

×प्रादूहोढोढ्येषैष्ये ॥ ८७ प्रादेप् अवरवू-हादिषु परतः । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ऊहादिषु इति किं ? प्रोतः ।

+प्रवत्सतरकंबलवसनदशार्णऋणे ॥ ८८ ॥ ऋणे परतः ऐप् भवति प्रादिभ्यः । प्रगतं ऋणं प्रार्णं । दशार्णं । ऋणार्णं । कंबलार्णं । वसनार्णं । वत्सतरार्णं ।

+ऋते भासे ॥ ८९ ॥ ऋते परे अवर्णांता-दैप् भवति भासे । सुखार्तः । ऋत इति किं सुखेतः । भास इति किं ? परमर्तः ।

*अटश्च धौ ॥ ९० ॥ अटश्चैब्भवति अ-जादौ धौ परतः । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत । औभत् । औभिष्यत । औभीत् । चकारो नियमार्थः-अट एवैब नान्यत् । ओंकारमैच्छत् ओंकारीयत् । औढीयत् ।

ऋत्येप गः ॥ ९१ ॥ अवर्णांताद्गेप् भवति ऋकारादौ धौ परतः । प्रार्च्छति । उपार्च्छति । प्रार्णोति । ऋतीति किं ? उपैतः । गेरिति किं ? नर्छति ॥ ।

*वा सुपि ॥ ९२ ॥ गोरवर्णांतादेव भवति ऋति सुपि धौ परे वा । प्रार्षभीयति । प्रर्ष-भीयति । उपाल्कारीयति । उपल्कारीयति ।

तयेकि परः ॥ ९३ ॥ गोरवर्णांताद् एकादौ धौ परतः परादेशो भवति । द्व्येरेकः । तथा मुख्यां तु वा । प्रेषयति । उपेक्ष्यति । उपोषति । प्रोषति । उपेलकीयति । उपैलकीयति । उपोदनीयति । उपौदनीयति । एकीति किं ? उपायते ।

+क्वेऽनियोगे ॥ ९४ ॥ अवर्णांतादेवे परतः परादेशो भवत्यनियोगे । क्वेव यासि ! इहेव तिष्ठ । अनियोगे इति किं ? क्वैव तिष्ठ ।

× वांडौतो से ॥ ९५ ॥ अवर्णांतादोडांत्यो: परतःसे वा परो भवति।बिंबांडी,बिंबौडी। स्थूलोतुः, स्थूलौतुः।से इति किं ? पच्यौडं । अपौतुं पश्य।

×सीमंतः केशे ॥ ९६ ॥ सीम्नोंऽते परः निपात्यः केशविषये । सीमंतः । केश इति किं ? सीमांतो ग्रामः ।

ओमाङोः ॥ ९७ ॥ अवर्णांताद् परो भवत्योमाङोः परतः । क्व ओमित्यवोचत् । कोमित्यवोचत् । सोमित्यवोचत् । आ–ऊढा। ओढा।अप·ओढा-अपोढा । कदा ओढा-कदोढा । सा ओसा–सोसा । सा ओढा–सोढा ।

*उस्यपदे ॥ ९८ ॥ अवर्णांतादुसि परतः परो भवति अपदे । अभिदुः । अयुः । अदुः । अपद इति किं ? कोषा नेमे ।

एप्यतः ॥ ९९ ॥ अकारस्य परो भवत्येप्यपदे परतः । पचे । पठंति । एपीति किं ? अपचे । अत इति किं ? यांति ।

*डाजहोंऽत इतौ ॥ १००॥ डाजंहस्याच्छब्दस्य परो भवतीतौ परतः। छमत् इति-छमिति। घटिति । डाजह इति किं ? जगदिति आह । अत इति किं ? छपिदिति। इताविति किं ? पटदत्र।

*न त्रेः ॥ १०१ ॥ त्रिसंज्ञकस्यातः इतौ परतः परो नास्ति । पटत्पटदिति । त्रेरिति किं ? पटिति ।

*तः ॥ १०२ ॥ त्रिसंज्ञकस्य यस्तकारः स परो भवति इतौ परे । पटत्पटेति ।

त्रौ डाचि ॥ १०३ ॥ डाजंते त्रौ परे तकारः परो भवति । पटपटाकरोति । दमदमा भवति । छमछमास्यात् ।

+ऋत्लृर्वा ऋः ॥१०४॥ ऋति लृति वा उः ऋवर्णस्य लृवर्णस्य च ऋर्वा भवति । पितॄषभः पितृर्षभः । पितृऋषभः । पितॄकारः । पितॢ्लृकारः पितृलृकारः ऋतीति किं ? आग्नार्थः ।

स्वेऽको दीः ॥ १०५ ॥ अकः स्वेऽचि परे दीर्भवति । देवाग्रे । विधांतः । दधीदं । मुनीशः। साधूदितं । वधूढरं । मातृकारः । होतॄ लृकारः । होतृकारः । स्व इति किं ? दध्यशान ।

*सुटीदुतः प्राक्स्वं ॥ १०६ ॥ पूर्वस्याकः इदुतः स्वं दीर्भवति अजादौ सुटि परतः । मुनी । साधू । सुटीति किं ? गुरून् । इदुत इति किं ? शुद्धे ।

शसि ॥ १०७ ॥ प्राक्स्वं दीर्भवति शसि परतः । मालाः । बुद्धीः । गौरीः ।

*न्पुंसि ॥ १०८ ॥ पुंसि शसो नकारादेशो भवति । कवीन् । जिनान् । मुनीन् । साधून् ।

पूर्वोऽमि ॥ १०९ ॥ अकः सुब्यमि परतो द्वयोरकः पूर्वो भवति । जिनं । मुनिं । साधुं । बुद्धिं । धेनुं । वधूं । नदीं । सुटीति किं ? अचिनवं।

*पदेऽत्येङः ॥ ११० ॥ एङः पदांतादकारादौ पदे परतः परः पूर्वो भवति। मुनेऽत्र । साधोऽत्र। पद इति किं?नयनं।लवनं। अतीति किं? ते इह।

ङसङस्योः ॥ १११ ॥ एङः परयोः ङस्ङसि इत्यंतयोरति परतः परः पूर्वो भवति। मुनेः स्वं । मुनेरागच्छति । धोः स्वं।धोरायाति।

ऋत उः ॥११२॥ ऋकारांतात् ङसङस्योरति उर्भवति द्वयोरकः।पितुःस्वं। पितुरागच्छति ।

*ख्यत्योऽतः ॥ ११३ ॥ ख्य त्य इत्येताभ्यामनच्काभ्यां परस्य ङसङस्योरत उर्भवति । सख्युः । पत्युः स्वमागच्छति वा । ख्यत्य ग्रहणं किं ? मुख्यस्य । मुख्यात् । अपत्यस्य । अपत्यात् ।

*हशि रेः ॥ ११४ ॥ अतः परस्य रेः हशि परे उर्भवति । को हसति । धर्मो भवति ।

हलीति किं ? कश्चित् । रेरिति किं स्वर्याहि । अत इति किं ? मुनिर्बूते । देवा यांति ।

*अति ॥ ११५ ॥ अतो रेरुर्भवति अकारे परे । सर्वज्ञोऽस्ति । अतीति किं ? स एषः ।

*गोर्वेङ् ॥ ११६ ॥ गोरेङ् पदे अति परतः एङ् वा स्यात् । गो अग्रं, गोऽग्रं, गवाग्रं । गोरिति किं ? चोऽग्रं । एङ इति किं ? चित्रग्वग्रं ।

+अवोऽनक्षेऽचि ॥ ११७ ॥ गोरेङः अवादेशो भवति वा अक्षवर्जितेऽचि परे । गवाग्रं, गोऽग्रं । गवेश्वरः, गवीश्वरः । गवर्णं । गवृणं । अनक्ष इति किं ? गो-अक्षं गोक्षं । पदे इति किं ? गवे–गवां ।

*इंद्रे ॥ ११८ ॥ गोरेङः अवो भवति इंद्रे परतः । गवेंद्रः ।

+वातायनेऽक्षे ॥ ११९ ॥ वातायनेऽर्थे गोरेङः अवो भवत्यक्षे परतः । गवाक्षः । वातायन इति किं ? गो–अक्षं–गोक्षं ।

*यान्नामिते ॥ १२० ॥ पसंज्ञकादिदिनिशब्द-वर्जितेऽचि परे यदुक्तं तन्न भवति । भो देव-दत्ता ३ इदमानय । अनिताविति किं ? सुमंगला ३ इति । सुमंगलेति ।

*देः ॥ १२१ ॥ दिसंज्ञकाद् यद् प्राप्नोति तन्नास्त्यचि परतः । मुनी अत्र । पटू इमौ । हे इमे । अमी अश्वाः ।

*येकोऽसेऽस्वे मः ॥ १२२ ॥ इकः अस्वेऽचि परतः मो वा भवत्यसे पदे । दधि अत्र । दध्यत्र । नदि एषा । नद्येषा । मधु इदं । मध्विदं । इक इति किं ? मुनयाचर व्रतं । अस इति किं ? वध्वानयं । नद्युदकं । पद इति किं ? नद्यौ । वध्वौ । अस्व इति किं ? नदीयं ।

ऋत्यकः ॥ १२३ ॥ अकः ऋकारे लृकारे च वा मो भवति । मह ऋषिः । महर्षिः । खट्व ऋश्यः । खट्वर्श्यः । मूकि ऋतुः, मूक्यृतुः । वधु ऋणं । वध्वृणं । कर्तृ ऋषभः । कर्तृषभः । कन्य लृकारः । कन्यल्कारः । ऋतीति किं ? दंडाग्रं । अक इति किं ? स्वाता वृक्षे ।

*दिवो हल्युत् ॥ १२४ ॥ दिवः पदस्य हलि परे उद् भवति । द्युभ्यां । द्युभिः । द्युभ्यः । द्युषु । हलीति किं ? दिवौकसः ।

*तोऽनञ्से सात्सोः खं ॥ १२५ ॥ तत्स्थानिनः सकारात् सोः खं भवति हल्यनञ्से । स ददाति । एष रक्षति । अनञ्स इति किं ? असो गच्छति । अनेषो गच्छति । सादिति किं ? सकः पचति । एषको हसति । हलीति किं ? सोऽर्थः । एषोऽत्र ।

*तदोऽद्विपूर्तौ ॥ १२६ ॥ तत्स्थानिनः स-कारात् सोः खं भवत्यचि परतः पादपूरणे । सैष दाशरथी रामः सैष राजा युधिष्ठिरः । सैष कर्णो महात्यागी, सैष पार्थो धनुर्धरः ॥ अद्विपूर्ताविति किं ? स एष भवतो राजा योऽस्माकं पथि वर्तते ।

+क्रीञ्तन्यवस्यादः प्रायः ॥ १२७ ॥ अव-गेरादेः खं भवति क्रीञ्तन्योः परतः प्रायः । वक्रयः । अवक्रयः । वतंसः । अवतंसः ।

+धाञ्नहोपः ॥ १२८ ॥ अपेरादेः खं भवति धाञ्नहोः प्रायः । पिहितं । अपिहितं । पिनद्धं । अपिनद्धं ।

संपर्युपात् कुः सुट् भूषे ॥ १२९ ॥ समा-दिभ्यः परस्य कृञः सुट् भवति भूषार्थे । संस्क-रोति । समस्करोत् । संचस्कार । परिष्करोति । परिचस्कार । उपस्करोति बालं । उपास्करोत् । उपचस्कार कन्यां । भूष इति किं ? उपकरोति ।

समवाये ॥ १३० ॥ संपर्युपात् कृञः सम-वायेऽर्थे सुट् भवति । तत्र नः संस्कृतं । संस्कृतो ब्राह्मणैर्यूपः ।

उपात् प्रतियत्नवैकृतवाक्याध्याहारे

॥ १३१ ॥ उपात् कृञः सुडागमो भवति प्रतियत्नाद्यर्थे । एधो दकस्योपस्कुरुते । उपस्कृतं भुंक्ते । उपस्कृतं जल्पति ।

किरतेर्लवे ॥ १३२ ॥ उपात् किरतेःसुड् भवति लवे लवनार्थे । उपस्कारं मद्रकाः लुनंति। लव इति किं ? उपकिरति धान्यं काकः ।

वधे प्रतेश्च ॥ १३३ ॥ प्रतेरुपाच्च किरते- र्वधेऽर्थे सुट् स्यात् । प्रतिस्कीर्णं उपस्कीर्णं ह ते वृषल भूयात् । वध इति किं ? प्रतिकीर्णं बीजं।

* चतुष्पद्यषाद्धर्षात् ॥ १३४ ॥ अपात् किरतेः सुट् भवति हर्षाच्चतुष्पद्यर्थे । अपस्किरते वृषभो हृष्टः । चतुष्पदीति किं ? अवाकिरति बालो हृष्टः । हर्षादिति किं ? अपकिरति श्वा।

*विशुनि भक्ष्याश्रयार्थे ॥१३५॥ अपात् किरतेःसुड् भवति वौ शुनि च भक्ष्याश्रयाय चेत्। अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी ।

*विष्किरो वौ वा ॥१३६॥ विकिरतेः कत्ये वाच्यर्थे सुड् वा निपात्यः । विस्किरः । विकिरः शकुनिः ।

*प्रात्तुंपेर्गवि ॥१३७॥ प्रात्परस्य तुंपतेर्गवि गम्यमाने सुट् भवति । प्रस्तुंपति गौः । गवीति- किं ? प्रतुंपति स्त्री ।

*कुस्तुम्बुर्वास्पदाश्चर्यावस्करापस्करावर- स्परमस्करमस्करितस्करबृहस्पतिरथस्या जाति- प्रतिष्ठाद्भुतवर्चस्करथांगक्रियासातत्यवेणुपारि- व्राट्चौरदेवतानदीषु ॥ १३८ ॥ कुस्तुंबुरु प्रभृतयः ससुट्का निपात्यंते जात्यादि- ष्वर्थेषु । कुस्तुंबुरुः धान्याकतृणजातिः । आस्पदं प्रतिष्ठा । आश्चर्यमद्भुतं । अवस्करोऽ वर्चस्कं । अपस्करो रथावयवः । अवरस्परा भुंजंते क्रियासातत्ये । मस्करो वेणुः। मस्करी परिव्राजकः। तस्करश्चौरः। बृहस्पतिर्देवता । रथस्या नदी । अ- न्यत्र—कुतुंबुरुःवृक्षः।आपदं । आचर्यं व्रतं । अव- करः । अपकरः। अवरपरः। मकरो ग्राहः। मकरी समुद्रः। तत्करः । बृहत्पतिः । रथपाः ।

*प्रस्कण्वहरिश्चंद्रावृषी ॥१३९॥ एतौ ससु- ट्कौ निपात्यौ ऋषी चेत् । प्रस्कण्वः । हरिश्चंद्रः ऋषिः । प्रकण्वो देशः । हरिचंद्रो राजाऽन्यत्र ।

*पारस्करो देश ॥१४०॥ पारात् करे सुण्निपात्यते देशे गम्यमाने । पारस्करो देशः । पारकरोऽन्यः ।

*नगरे ॥१४१॥ नगरे च पारस्करो निपा- त्यते । पारस्करो नगरं ।

*कास्तीराजस्तुंदास्कथं ॥ १४२ ॥ एषां घोः सुण्निपात्यते नगरे । कास्तीरं । अजस्तुंदं । आस्कथं । अन्यत्र- कातीरं । अजतुंदं । आकथं ।

*कारस्करं ॥१४३॥अस्य घोः सुण्निपात्यः । कारस्करं नगरं । कारकरमन्यत् ।

*वृक्षे ॥१४४॥वृक्षे च कारस्करं निपात्यते । कारस्करो वृक्षः । कारकरोऽन्यः ।

*करस्करोऽद्रौ च ॥ १४५ ॥ करस्करो निपात्योऽद्रौ वृक्षे च । कारस्करो गिरिर्वृक्षश्च । करकरोऽन्यः ।

*किष्कादयः ॥ १४६ ॥ किष्कुप्रकाराः स- सुट्का निपात्यंते । किमष्कौ मलं प्रमाणे । किष्कुः वितस्तिः हस्तो वा । किष्किंधः पर्वतः । किमो द्वित्वमले । वनस्पतिः । प्रायश्चित्तमित्यादि ।

*श्रिताश्रितप्रमाणे गोष्पदं ॥ १४७ ॥ एष्वर्थेषु गोः परस्य पदस्य घोः सुट् षत्वं च निपात्यं । गोष्पदो देशः—गोभिः सेवितः । गोष्पदमरण्यं तैरसेवितं । गोष्पदपूरं वृष्टो देवः । गोपदमन्यत्र ।

धावनुप ॥ १४८ ॥ धौ अनुविति च

एतद् द्वयमधिकृतं ज्ञेयं । वक्ष्यति—कायाः स्तोकादेः । स्तोकान्मुक्तः । याविति किं ? निःस्तोकः । प्राग्गोः यावधिकारः । अनुबधिकारश्च प्राकानेकादेशात् ।

कायाः स्तोकादेः ॥१४९॥ स्तोकादिभ्यः परस्याः कायाः अनुप् भवति । स्तोकान्मुक्तः कतिपयान्मुक्तः । अल्पान्मुक्तः । अंतिकादागतः अभ्यासादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्राल्लब्धः । स्तोकादेरिति किं ? वृकाद् भयं वृकभयं ।

ब्राह्मणाच्छंसी ॥ १५० ॥ अत्र कानुप् निपात्यः । ब्राह्मणाच्छंसी ।

ट ओजःसहोऽम्भस्तपोऽञ्जसः ॥१५१॥ एभ्यो भेकस्यानुप् भवति । ओजसाकृतं । सहसाकृतं । अंभसाकृतं । तपसाप्राप्तं । अंजसाकृतं ।

+पुंसानुजजनुषांधौ ॥ १५२ ॥ एतौ कृतटानुपौ निपात्यौ । पुंसानुजा कन्या । जनुषा जन्मनांधः-जनुषांधः ।

ङश्चात्मनः ॥ १५३ ॥ ङइंते धौ परे आत्मनः टोऽनुब्भवति । आत्मनापंचमः । आत्मनाषष्ठः ।

* मनसश्चाज्ञायिनि ॥१५४॥ मनःशब्दादात्मनश्चाज्ञायिनि परे टानुब्भवति । मनसाज्ञायी । आत्मनाज्ञायी ।

खौ ॥१५५॥ मनसष्टानुब्भवति खुविषये । मनसागुप्ता । मनसागता ।

* ङेः परात्मनः ॥ १५६ ॥ परात्मभ्यां ङेरनुब्भवति खौ । परार्थं पदं परस्मैपदं । परस्मैभाषः । आत्मनेपदं । आत्मनेभाषः । परात्मन इति किं ? तद्धितं ।

ईपोऽद्धलः ॥ १५७ ॥ अदंतात् हलंताच्च परस्या ईपोऽनुप् भवति । वनेहरिद्रकाः । कूपेपिशाचकाः । त्वचिसारः । दृषदिमाषकः । अद्धल इति किं ? नदीकुक्कुटिका । खाविति किं ? अक्षशौंडः ।

*कारे प्राचां हलि ॥ १५८ ॥ अद्धल्भ्यां ईपोऽनुप् भवति हलादौ प्राचां देशे कारविषये । हलेद्विपदिका । समिधिमाषकः । कार इति किं ? अभ्याहितपशुः । प्राचामिति किं ? यूथेयूथः । हलीति किं ? अविकटोरणः ।

मध्यांताद् गुरौ ॥ १५९ ॥ मध्यांताभ्यां ईपोऽनुप् भवति गुरौ यौ परतः । मध्येगुरुः । अंतेगुरुः ।

अकामेऽमूर्धमस्तकात् स्वांगात् ॥ १६० ॥ मूर्धमस्तकवर्जिताद् स्वांगात् अकामे यौ परतः ईपोऽनुप् भवति । कंठेकालः । उरसिलोमा । उदरेमणिः । शिरसिशिखः । अकाम इति किं ? मुखे कामोऽस्य मुखकामः । अमूर्धमस्तकादिति किं ? मूर्धशिखः । मस्तकशिखः । स्वांगादिति किं ? पानशौंडः ।

*बंधे घञि वा ॥ १६१॥ अद्धलंतादीपोऽनुब्भवति वधाती घञंते परे । हस्तेबंधः । हस्तबंधः । चक्रेबंधः । चक्रबंधः । घञीति किं ? चक्रपदः ।

ये कृति बहुलं ॥ १६२॥ अद्धलंतात् यसे कृदंते यौ बहुलं ईपोऽनुप् भवति । प्रवाहेमूत्रितं भस्मनिहुतं । उदकेविशीर्णं । पात्रेसमिताः । क्वचिन्न भवति- ग्रामकारकः । क्वचिद् विभाषा । सरसिरुहं, सरोरुहं । क्वचिदन्यदेव—हृदयं स्पृशतीति हृदिस्पृक् । य इति किं ? धन्वनि कारकोऽस्य धन्वकारकः । कृतीति किं ? अक्षधूर्तः ।

+ययोनिमतिचरेऽपः ॥ १६३ ॥ अप्शब्दादीपोऽनुप् भवति यादिषु परतः । अप्सव्यः । अप्सुयोनिः । अप्सुमतिः । अप्सुचरः ।

+खे ॥ १६४ ॥ अपः ईपोऽनुब्भवति खे

धौ परत अप्सुजः ।

+गुप्रावृड्वर्षाशरत्कालात् ॥ १६५ ॥ एभ्य ईपोऽनुप् भवति जे धौ परतः । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेजः ।

+शरवरशरवर्षात् वा ॥ १६६ ॥ शरादिभ्य ईपो जे वाऽनुब्भवति । शरेजः । शरजः । वरेजः । वरजः । शरेजः । शरजः । वर्षेजः । वर्षजः ।

+शयवासिवासेऽकालात् ॥ १६७ ॥ अकालवाचकादीपो वाऽनुब् भवति शयादिषु परतः । बिलेशयः । बिलशयः । वनेवासी । वनवासी । ग्रामेवासः । ग्रामवासः । अकालादिति किं ? पूर्वाह्णशयः । अपराह्णशयः ।

*कालात्तरतमकालतने ॥ १६८ ॥ कालवाचकादीपो वानुब्भवति त्रादिषु परतः । पूर्वाह्णेतरां । पूर्वाह्णतरे । पूर्वाह्णेतमां । पूर्वाह्णतमे । अपराह्णेतमां । अपराह्णतमे । पूर्वाह्णेकाले । पूर्वाह्णकाले । अपराह्णेकाले । अपराह्णकाले । पूर्वाह्णेतनः । पूर्वाह्णतनः । अपराह्णेतनः । अपराह्णतनः । कालादिति किं ? शुक्लतरे । शुक्लतमे ।

×नेन्सिद्धस्थे ॥ १६९ ॥ इन्सिद्धस्थेषु परेषु ईपोऽनुप् नास्ति । स्थंडिलशायी । कांपिल्यसिद्धः । सांकाश्यसिद्धः । पर्वतस्थः । कूटस्थः ।

+गोषुचरः ॥ १७० ॥ अत्रेपोऽनुप् निपात्यः । गोषुचरः ।

तायाः शापे ॥ १७१ ॥ तानुप् भवति शापे आक्रोशे गम्यमाने । चोरस्यकुलं । चोरस्यभार्या । दासस्य कुलं । दासस्य भार्या । शाप इति किं । दासकुलं ।

पुत्रे वा ॥ १७२ ॥ शापे ताया वानुब् भवति पुत्रे धौ । दास्याःपुत्रः, दासीपुत्रः ।

+वाक्दिक्पश्यतो युक्तिदंडहरे ॥ १७३ ॥ एभ्यो युक्त्यादिषु तानुब् भवति । वाचोयुक्तिः । दिशोदंडः । पश्यतोहरः । वाचस्पतिरित्यपि वृश्यते ।

+शेफपुच्छलांगूलेषु सौ शुनः ॥ १७४ ॥ शुनश्शब्दात्तानुब् भवति शेफादिषु सौ । शुनःशेफः । शुनःपुच्छः । शुनोलांगूलः । स्वाविति किं ? श्वशेफं ।

*धुदेवाद्दासप्रिये ॥ १७५ ॥ दिवदेवाभ्यां तानुभवति दासप्रिययोः परतः सौ । दिवोदासः । देवानांप्रियः ।

ऋतां विद्यायोनिसंबंधात् ॥ १७६ ॥ ऋकारांतानां विद्यासंबंधात् योनिसंबंधाच्च वर्तमानानां तानुप् भवति । होतुःपुत्रः । होतुरंतेवासी । पोतुःपुत्रः । पोतुरंतेवासी । मातुःपुत्रः । मातुरंतेवासी । ऋतामिति किं ? उपाध्यायपुत्रः । विद्यायोनिसंबंधादिति किं ? भर्तृगृहं ।

वा स्वसृपत्योः ॥ १७७ ॥ ताया वाऽनुब्भवति अनयोः परतः । मातुःष्वसा । मातुःस्वसा । मातृष्वसा । ननांदुःपतिः । ननांदृपतिः । योनिसंबंधादिति किं ? भ्रातृष्वसा ।

*कान् द्वंद्वे ॥ १७८ ॥ ऋकारांतानां द्वंद्वे कान् भवति धौ परतः । होतापोतारौ । नेष्टोद्गातारौ । मातादुहितरौ । याताननांदरौ ।

*पुत्रे ॥ १७९ ॥ ऋतां पुत्रे धौ कान् भवति । पितापुत्रौ । मातापुत्रौ ।

* अग्नेंद्रादिषु देवतानां ॥ १८० ॥ द्वंद्वे पूर्वस्य कान् भवति अग्नेंद्रादिषु सुपु परतः । इंद्रासोमौ । इंद्राबृहस्पती । सूर्याचंद्रमसौ । अग्नेंद्रादिष्विति किं ? ब्रह्मप्रजापती । दिवाकरनिशाकरौ । स्कंदविशाखौ । शिववैश्रवणौ । देवतानामिति किं ? अग्नींद्रौ माणवकौ ।

षोमवरुणेऽग्नेरीः ॥ १८१ ॥ अग्नेः षोमवरुणयोः परयोर्देवताद्वंद्वे ईत्वं स्यात् । अग्नीषोमौ । अग्नीवरुणौ ।

* वेष्वविष्ण्वंद्वे ॥ १८२ ॥ ...

विष्ण्विंद्रहीने यो ङानीस्वे न स्तः। आग्निमारुतः। आग्निवारुणी । ऐपीति किं ? अग्नामरुतौ । अविष्ण्विंद्र इति किं ? आग्नावैष्णवं । आग्नेंद्रं ।

उषासोषसः ॥ १८३ ॥ उषस उषासा इत्ययमादेशो भवति देवताद्वंद्वे । उषश्च नक्तं च उषासानक्तं । उषासानक्ते ।

दिवो द्यावा ॥१८४॥ दिवो द्यावा इत्ययमादेशो भवति देवताद्वंद्वे । द्यौश्च क्षमा च द्यावाक्षमे । द्यावाभूमी ।

दिवस् पृथिव्यां वा ॥१८५॥ दिवः दिवस् भवति पृथिव्यां देवताद्वंद्वे वा । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

मातरपितरौ ॥ १८६ ॥ मातृपित्रोर्द्वंद्वे द्वयोररादेशो वा निपात्यः । मातरपितरौ । मातापितरौ ।

*स्न्यसुपि सर्वं पुंवत् ॥१८७॥ स्निसंज्ञकं सर्वं पुंवद् भवति असुपि परतः । सर्वासां प्रियः सर्वप्रियः । भवत्याः पुत्रः भवत्पुत्रः । एकक्षीरं । सर्वकाम्यति । स्नीति किं ? विद्यानिवासः । असुपीति किं ? सर्वस्यै । यस्याः । तस्याः । सर्वमिति किं सर्वा प्रिया अस्य सर्वप्रियः । सर्वमनोज्ञः । इत्यादिनिषेधविषयेऽपि यथा स्यात् ।

*स्न्युक्तपुंस्कादनूरेकार्थेऽदृप्रियादौ स्त्रियां ॥ १८८ ॥ स्त्री उक्तपुंस्कात् परः स्त्रीत्यः ऊत्यवर्जितः एकार्थे ढदंतप्रियादिवर्जिते स्त्रियां वर्तमाने यो पुंवत् पुलिंगवद् भवति । दर्शनीया भार्या यस्यासौ दर्शनीयभार्यः । शोभनभार्यः । बालजंघः । प्रसूतभार्यः । स्त्रीति किं ग्रामणि कुलं दृष्टिरस्य ग्रामणिदृष्टिः । उक्तपुंस्कादिति किं खट्वाकुंदारिकः । तनुकेशीभार्यः । अनूरिति किं वामोरूभार्यः एकार्थ इति किं कल्याण्याः माता कल्याणीमाता। अदृप्रियादाविति किं कल्याणी पञ्चमी आसां कल्याणीपञ्चमा रात्रयः । कल्याणीमनोज्ञः । कल्याणीभक्तीः । स्त्रियामिति किं कल्याणीप्रधानः ।

तसादौ ॥१८९॥ तसादिषु परतः स्त्री पुंवद् भवति । तस्यास्तत । तस्यां-तत्र । यथा प्रकृत्या यथा । तथा । अजघ्या । आढ्यतरा । आढ्यतमा इत्यादि ।

*इति यो जातिश्च ॥१९०॥ स्त्री जातिरन्या च असंज्ञा इति पुंवद् भवति । गार्ग्यायण्याः अपत्यं-गार्ग्यो जाल्मः । गार्गिको जाल्मः । एन्यां साधुः एत्यः । हस्तिनीनां समूहः हास्तिकं । म इति किं? कठीरूप्यं ॥

×डेऽग्निः ॥ १९१ ॥ अग्निः पुंवद् भवति डे परतः । अग्नायी देवताऽस्य आग्नेयः । नियमार्थोऽयं योगः । डेऽग्नेरेव पुंवद् नान्यः । श्येनेयः । रौहिणेयः ।

*गुणस्त्वतलि ॥ १९२ ॥ गुणवचनं त्वतलौ परतः पुंवद् भवति । पट्व्याः भावः पटुत्वं, पटुता । मृदुत्वं । मृदुता । गुण इति किं ? कठीत्वं ।

+बह्वल्पार्थः शसि ॥ १९३ ॥ बह्वर्थोऽल्पार्थश्च शसि इति पुंवद् भवति । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि ।

+मृगक्षीरादिषु ॥ १९४ ॥ एषु इत्तिपदेषु यत्पूर्वपदं तदन्स्त्रियामनेकार्थे च यो पुंवद् भवति। मृग्याः क्षीरं मृगक्षीरं । कुक्कुटांडं । मृगपदं ।

क्यङ्मानिनोः ॥ १९५ ॥ क्यङि मानिनि च परतः स्त्री पुंवद् भवति। एनीवाचरति एतायते। हरितायते । दर्शनीयां मन्यते दर्शनीयमानी । शोभनमानी ।

न बुद्धृत्कोङ् ॥ १९६ ॥ योऽवृतश्च यः ककारस्तदुङ् स्त्री पुंवन्न भवति । पाचिकाभार्यः । पाचिकातः । पाचिकायते । पाचिकामानिनी । काशिकीशाटिकः । काशिकातः । काशिकायते । काशिकामानिनी । बुद्धृद्ग्रहणं किं ? बहुभार्यः ।

अस्याकभार्यः ।

वट्‌त्सु: ॥ १९७ ॥ वट्‌दंता त्सुश्च स्त्री पुंवं- त्रास्ति । पंचमीभार्यः । दशमीभार्यः । पंचमीतः । पंचमीयते । पंचमीमानिनी । दत्ताभार्यः । गुप्ताभार्यः । दत्तात: । दत्तायते । दत्तामानिनी ।

*ऐप्भृदरक्तविकारे ॥ १९८ ॥ रक्तविकार- वर्जितेऽर्थे ऐप्निमित्तं यद् हृत् तदंता स्त्री पुंवन्न भवति । आत्सीभार्यः । माथुरीभार्यः । माथुरीतः । माथुरीयते । माथुरीमाननी । ऐबिति किं ? धन्यभार्यः । त्रिपृष्टायनिभार्यः । हृदिति किं ? कुंभकारभार्यः । पुष्पलावभार्यः । अरक्त- विकारे इति किं ? काषायी बृहतिका अस्य काषायबृहतिकः । लौही ईषा यस्य लौहेषो रथः ।

अमानिनीत्स्वांगात् ॥ १९९ ॥ स्वांगाद् य ईत्तदंता स्त्री पुंवन्नाम्त्यमानिनी यौ परतः । दीर्घकेशीभार्यः । दीर्घकेशीतः । दीर्घकेशीयते । अमानिनीति किं ? दीर्घकेशमानिनी । ईदिति किं ? पृथुजघनभार्यः । स्वांगादिति किं ? पटुभार्यः ।

जातिः ॥ २०० ॥ जातिश्च स्त्री पुंवन्न भवति अमानिनि यौ परतः । कठीभार्यः । कठीतः । कठीयते । शूद्राभार्यः । शूद्रातः । शूद्रायते ।

पुंवद् यजातीयदेशीये ॥२०१॥ स्त्री पुंवद् भवति यसंज्ञके से जातीयदेशीययोश्च परतः । वुहृत्कोऽपि पुंवद् भवति । पाचकवृंदारिका । पाचकजातीया । पाचकदेशीया । काक्षिकवृंदा- रिका । वट्‌त्सुरपि—पंचमवृंदारिका । पंचमजा- तीया । पंचमदेशीया । दत्तवृंदारिका । दत्तजा- तीया । दत्तदेशीया । ऐप्भृदरक्तविकारेऽपि पुंवद् भवति । माथुरवृंदारिका । माथुरजातीया । माथुरदेशीया । स्वांगादीतोपि—दीर्घकेशवृंदा- रिका । दीर्घकेशजातीया । दीर्घकेशदेशीया । जातिरपि—कठवृंदारिका । कठजातीया । कठदेशीया ।

प्ररूपकल्पचेलड्ब्रुवगोत्रनुतमतहते भोऽने- काच: ॥ २०२ ॥ ईत्स्त्रीत्यांतस्यानेकाचः प्रादिषु परतः प्रो भवति । गौरितरा । गौरि- तमा । गौरिरूपा । गौरिकल्पा । गौरिचेली । गौरिब्रुवा । गौरिगोत्रा । गौरिनुता । गौरिमता । गौरिहता । कुमारितरा । कुमारितमा । कुमारि- रूपा । इत्यादि । अनेकाच इति किं ? श्रितरा । श्रीतरा । ईदिति किं ? दत्तातरा ।

+गौरिभोगान्मतः स्वौ ॥ २०३ ॥ गौरि- भोगाभ्यां मत्वंताभ्यां स्वौ ईतः प्रो भवति प्रा- दिषु परतः । गौरिमतितरा " गौरिमतितमा । भोगवतितरा । भोगवतितमा । एवं रूपादिष्वपि योज्यं । स्वौ" इति किं ? गौरिमतिरूपा, गौरीमतीरूपा ।

*वा मो: ॥ २०४ ॥ मुमंज्ञकस्य प्रादिषु परत प्रो वा स्यात् । स्त्रितमा । स्त्रीतमा । लक्ष्मितमा लक्ष्मीतमा । वामोरुतरा । वामो- रूतरा । एवं—रूपादावपि । मोरिति किं ? कारिकातरा ।

वोगितः ॥ २०५ ॥ उगितः परस्य मोः प्रो वा स्यात् प्रादिषु परतः । विदुषितरा, विदु- षीतरा । विद्वत्तरा । पचतितमा, पचंतीतमा । पचत्तमा । एवं--सर्वत्र । उगित इति किं ? कुमारितरा । पुनर्वाग्रहणमुभयविकल्पार्थं ।

आङ् महतो जातीये च ॥२०६॥ आका- देशो भवति महतो जातीये एकार्थे च यौ परतः महाजातीयः । महामुनिः । महापुरुषः । महा- प्राणाः । महाबाहुः । महात्मा । जातीये चेति- किं ? महतः पुत्रः-महत्पुत्रः ।

+करपासविशिष्टे वा ॥ २०७ ॥ महतः करादिषु परेषु आङ् वा स्यात् । महतः-करः महा- करः । महत्करः । महापासः । महत्पासः । महाविशिष्टः । महद्विशिष्टः

*स्था: ॥ २०८ ॥ कीत्यांतस्य महत: करादिष्वाङ् भवति । महत्याः करः-महाकरः। महाघासः । महाविशिष्टः ।

*अष्टनोऽव्याशीत्योःस्यौ प्राक्शतात् त्रेस्त्रयः ॥२०९॥ द्वि अष्टन् इत्येतयोराङ् भवति । स्यिसंज्ञे यौ परत, शतात् प्राक् त्रेस्त्रयस् बसमशीतिं च वर्जयित्वा । द्वादश । द्वाविंशति: । द्वात्रिंशत् । अष्टादश । अष्टाविंशति: । अष्टात्रिंशत् । त्रयोदश । त्रयोविंशति: । त्रयस्त्रिंशत् । व्यष्टन: त्रेरिति किं? चतुर्दश । अबाशीत्योरिति किं ? द्वित्रा: । अष्टदशाः । त्रिदशाः । द्वयशीति: त्र्यशीति: । प्राक्शतादिति ।किं ? द्विशतं । द्विसहस्रं । अष्टशतं । अष्टसहस्रं । त्रिशतं । त्रिलक्षं ।

वा चत्वारिंशदादौ ॥२१० ॥ व्यादीनामाङ् वा भवति चत्वारिंशदादौ परतः । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् । द्वापंचाशत् । द्विपंचाशत् । अष्टापंचाशत् । अष्टपंचाशत् । त्रय:पंचाशत् । त्रिपंचाशत् । द्वानवति: । द्विनवति: । अष्टानवति: । अष्टनवति । त्रयोनवति: । त्रिनवति: ।

*दश्न्येका ॥२११॥ दशनि यौ एकस्य दीर्घो निपात्यते । एकादश । दशनीति किं? एकविंशति: ।

+षष उर्दन्तरे चादेर्ष्टोऽण्डु: ॥२१२॥ षष उर्भवति दन्शब्दे दशिन च परे धारादेष्टुश्च । षोडन् । षोडश ।

÷ धात्ये वा ॥२१३॥ षष उत्वं वा धात्ये धोरादेः टुश्च नित्यं स्यात् । षोढा । षड्ढा ।

+नस् नासिकायास्तस्क्षुद्रे ॥ २१४ ॥ नासिकाशब्दस्य नस् भवति तस्त्ये क्षुद्रे च परत:। नस्तः । नसक्षुद्रः ।

+येऽवर्णे ॥२१५॥ नासिकाया नस् भवति अवर्णे यत्ये परे । नस्य: । अवर्ण इति किं ? नासिक्यो वर्णः ।

हृदयस्य हृल्लेखाण्यलासे ॥ २१६ ॥ हृदयस्य हृद् भवति लेखादिषु परतः । हृल्लेखः। हार्द । हृद्यं । हृल्लासः ।

*पदं पादस्याज्यातिगोपहते ॥ २१७ ॥ पादस्य पदादेशो भवति आज्यादिषु परतः । पदाजिः । पदातिः। पदगः । पदोपहतः ।

पद् ये ॥२१८॥ पादस्य पदित्ययमादेशो भवति यत्ये परतः । पद्यं ।

हिमकाषिहतौ ॥ २१९ ॥ पादस्य पद् भवति हिमादिषु परतः । पद्धिमं । पत्काषी । पद्धतिः

*शस्यृचः ॥२२०॥ ऋचः संबंधिनः पादस्य पदादेशो भवति शसि त्ये परे । पच्छः गायत्री शंसति । ऋच इति किं ? पादशः श्लोकं कथयति ।

वा निष्कघोषमिश्रशब्दे ॥२२१॥ पादस्य पद् वा भवति निष्कादिषु परत: । पन्निष्क: । पादनिष्कः । पद्घोषः । पादघोष: । पन्मिश्र: । पादमिश्र: । पच्छब्दः । पादशब्द: ।

*उदकस्योदेकहलि पूर्वे ॥ २२२ ॥ उदकस्य उद इत्ययमादेशो भवति वा पूर्वस्थे एकहलादौ यौ परत: । उदकुंभ: । उदककुंभ: । उदपात्रं । उदकपात्रं । एकहलीति किं ? उदकस्थाली । पूर्व इति किं ? उदकगिरि: ।

मंथौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे ॥२२३॥ उदकस्योदो भवति वा मंथादिषु परत: उदमंथ: । उदकमंथ: । उदौदन: । उदकौदन: । उदसक्तु: । उदकसक्तु: । उदबिंदु: । उदकबिंदु:। उदवज्रः। उदकवज्रः। उदभार: । उदकभार: । उदहार: । उदकहार: । उदवीवधः । उदकवीवधः । उदगाह: । उदकगाह: ।

*पिपेषंवासवाहने ॥ २२४ ॥ ध्यादिषु-

कम्बोदो भवति । उदधिः । उदपेषं पिनष्टि । उदवासः । उदवाहनः ।

*वोऽस्य स्तौ ॥ २२५ ॥ उदकस्य प्राक्-परस्य वोऽस्य स्तावुदो भवति । उदमेघः औदमेघिः । उदवाहः । औदवाहिः । क्षीरोदा । क्षीरोदा । लवणोदः । कालोदः । स्ताविति किं ? उदकपर्वतः ।

*वोप्र ॥ २२६ ॥ पूर्वपदस्य वोऽस्य उत्वा स्यात् । देवदत्तः । देवः । दत्तः । भीमसेनः भीमः । सेनः । सत्यभामा । सत्या । भामा ।

*इकःप्रोऽङ्गीयुष्यणक्षे: ॥ २२७ ॥ इगंतस्य प्रो वा स्यात् वौ स चेदिक् ङ्यन्त्यः इयुवोः स्थानी यणादेशो क्षिश्च न भवति । लक्ष्मीपुत्रः । लक्ष्मिपुत्रः । ग्रामणीपुत्रः।ग्रामणिपुत्रः।यवलूपुत्रः । यवलुपुत्रः।खलपुपुत्रः। खलपूपुत्रः।इक इति किं ? खट्वापादः । अङ्यादेरिति किं ? गार्गीपुत्रः । श्रीकुलं, भ्रूकुलं । कौमुदगंधीपतिः । वृषलीभूतं ।

ङ्यापोः काचित्स्तौ ॥ २२८ ॥ ङी आप् इत्येवमंतस्य कचित् प्रो भवति । रेवतिमित्रः महित्राता । शिलवहः । मंदुरजं । कचित्र स्यात् । नांदीमुखं । गंगाद्वारं।कचिद्द्वयं । पृथिवीदत्तः, पृथिविदत्तः । गंगादेवी । गंगदेवी । कचिदन्यत्-तीर्थकरः तीर्थंकरः । ङ्याप इति किं । श्रीपुरं । स्ताविति किं ? नदीस्रोतः ।

त्वे ॥ २२९ ॥ ङ्यापोस्त्वे कचित् प्रो भवति । रोहिणित्वं । रोहिणीत्वं । अजत्वं । अजात्वं ।

*माळेषीकेष्टकस्यांतस्य च भारितूलचिते ॥ २३० ॥ मालादीनां तदंतानां च भारादिषु परतः प्रो भवति । मालभारी । मालभारिणी । उत्पलमालभारिणी । इषीकतूलं । मुंजेषीकतूलं । इष्टकचितं । पक्वेष्टकचितं ।

+भ्रुवः कुटिकुंसस्य ॥२३१॥ कुटिकुंसयोः परतो भ्रुवः प्रो भवति अध्यांतादेशः । भ्रुकुटिः । भ्रकुटिः । भ्रुकुंसः । भ्रकुंसः ।

खित्यखे: कृति ॥ २३२ ॥ अजंतस्याखेः प्रो भवति खित्कृति परतः । खट्वंमन्या । हरिणिंमन्या । कालिंमन्या । रोहिणिंमन्या । अखेरिति किं ? दोषामन्यमहः। दिवामन्या रात्रिः

मुमचः ॥ २३३ ॥ अजंतस्याखेः मुम् भवति खित्कृति परतः । जनमेजयः । स्तनंधयः । प्रियंवदः । क्षेमंकरः । अच इति किं ? विद्वन्मन्यः ।

अमेकाचोऽम्वत् ॥ २३४ ॥ एकाचोऽजंतस्याम् भवति खित्कृति अमीव चास्मिन् कार्यं स्यात् । गांमन्यः । स्त्रींमन्यः । नरंमन्यः । एकाच इति किं ? लेखाभ्रमन्या । अच इति किं ? विन्मन्यः ।

सत्यागदास्तोः कारे ॥ २३५ ॥ सत्यादीनां कारे परे मुम् भवति । सत्यंकारः । अगदंकारः । अस्तुंकारः ।

*भ्राष्ट्राग्न्योरिंधे ॥ २३६ ॥ इंधे वो मुम् भवति भ्राष्ट्राग्न्योः । भ्राष्ट्रमिंधः । अग्निमिंधः ।

×भद्रोष्णयोः करणे ॥ २३७ ॥ अनयोः करणे वो मुम् भवति । भद्रंकरणं । उष्णंकरणं ।

+गिलगिलगिलयोरगिलस्य ॥ २३८ ॥ गिलांतमुक्तस्याजंतस्य गिलगिलगिलयोः मुम् भवति । तिमिंगिलः । तिमिंगिलगिलः । अगिलस्येति किं ? तिमिंगिलं गिलतीति तिमिंगिलगिलः ।

+धेनुभव्यामध्यंदिनलोकंपृणानभ्यासमित्याः ॥२३९॥ धेन्वादीनां भव्यादिषु मुम् निपात्यः । धेनुंभव्या । मध्यंदिनं । लोकंपृणः । अनभ्यासमित्यः ।

*रात्रेः प्रभाचंद्रस्य॥ २४० ॥ रात्रेः कृदंते खौ मुम् भवति प्रभाचंद्रस्याचार्यस्य मतेन । रात्रिंचरः । रात्रिचरः । रात्रिमाटः । रात्र्याटः

नञोऽन् ॥ २४१ ॥ नञः अन् भवति खौ परतः । अधर्मः, अहिंसा । अस्तेयं ।

आचि ॥ २४२ ॥ नञः अजादौ परे अन् भवति । अनुपमो निजः । अनंतः अनादिः । पुनः सूत्रं नकारश्रवणार्थं ।

+क्षेपे मिङि ॥ २४३ ॥ नञोऽन् भवति क्षेपेऽर्थे मिङि । अपचसि त्वं जाल्म । क्षेप इति किं ? नपचसि छात्र ।

*एकादद्रुनाऽक्षौ ॥ २४४ ॥ एकशब्दाद् नञोऽद्र अक्षौ स्तः खौ परे । एकेन न विंशतिः एकाद्रविंशतिः । एकान्नविंशतिः । एकाद्रत्रिंशत् । एकान्नत्रिंशत् ।

नगो वाऽजीवे ॥२४५॥ नग इति निपात्यतेऽजीवेऽर्थे वा।न गच्छन्तीति नगाः।अगाः वृक्षाःपर्वताः। वा । अजीव इति किं ? अगः पुत्रः शीतेन ।

सहस्य सः खौ ॥ २४६ ॥ सहस्य स आदेशो भवति खौ । साश्वत्थं । सपलाशं । खाविति किं ? सहकृत्वा ।

*ग्रंथांताधिकादह्येऽपि ॥ २४७॥ ग्रंथान्तेऽधिकेऽद्दृश्ये च वर्तमानस्य सहस्य सो भवति खौ परतः । ज्योतिषमधीते । सद्रोणा खारी।साग्निः कपोतः । सपिशाचा वात्या ।

इऽकाले ॥ २४८॥ इसे सहस्य सो भवति अकाले । सचक्रं धेहि । सधुरं प्राज । अकाल इति किं ? सहपूर्वाह्णं । सहापराह्णं भुंक्ते ।

वा नीचः ॥ २४९ ॥ नीचः सहस्य सो भवति खौ वा । सपुत्रः । सहपुत्रः पिता । सच्छात्रः । सहच्छात्रः आगतः । नीच इति किं ? सहकृत्वानी ।

नाशिष्यगोवत्सहले ॥ २५० ॥ सहस्य सो नास्ति आशिषि अगोवत्सहलेषु परतः । स्वस्ति सह सेवाय गुरवे।स्वस्ति राज्ञे सहलोकाय। आशिषीति किं ? सच्छात्रः । अगोवत्सहल इति किं?स्वस्त्यस्तु सगवे सहगवे तुभ्यं।सवत्साय,सहवत्साय तुभ्यं । सहलाय सहहलाय तुभ्यं ।

*समानस्य धर्मादिषु॥२५१॥समानस्य सादेशो भवति धर्मादिषु परेषु । सधर्मा । सपक्षः । सजातीयः । सरूपः । सस्थानः । सवर्णः । सवयः । सनामा । सबंधुरित्यादि ।

सब्रह्मचारी ॥ २५२ ॥ समानस्य सो निपात्यो ब्रह्मचारिणि खौ । समानो ब्रह्मचारी सब्रह्मचारी ।

*घदृगहृगहक्षे ॥२५३॥ समानस्य सो भवति घत्वादिषु परतः । सदृक् । सदृशः । सदृक्षः । घग्रहणमुत्तरार्थं ।

किमिदमः कीश ॥ २५४ ॥ किमिदमोः कीश इत्येतावादेशौ भवतः घत्वादिषु परतः । कियान् । कीदृक् । कीदृशः । कीदृक्षः । इयान् इदृक् । इदृशः । इदृक्षः ।

*आः ॥ २५५ ॥ पूर्वपदस्यार्थात् त्यदादेरा-कारादेशो भवति घत्वादिषु परतः । अन्यादृक् । अन्यादृशः । अन्यादृक्षः । तावान् । तादृक् । तादृशः । तादृशी । तादृक्षः। यावान् । यादृक् । यादृशः । यादृशी । यादृक्षः । भवादृक् । भवादृशः । त्वादृशः । मादृशः । युष्मादृशः । अस्मादृशः ।

*विष्वग्देवयोष्टेरद्र्यंचौ क्वौ ॥ २५६ ॥ विष्वग्देवयोः सर्वस्य टेरद्रिरादेशो भवत्यंचतौ क्वयंते परतः। विष्वद्र्यक् । देवद्र्यक् । सर्वद्र्यक् । तद्र्यक् । कद्र्यक् । युष्मद्र्यक् । अस्मद्र्यक् । भवद्र्यक् । देवद्रीची । सर्वद्रीची । विष्वग्देव-

स्नोरिति किं ? पात्राङ् ।

*संसहयोः समिसध्री ॥ २५७ ॥ संसह-स्थाने समिसध्रि इत्येतावादेशौ भवतः अंचतौ कौ परतः । सम्यक् । सध्र्यङ् । समीची । सध्रीची ।

*तिरसः तिर्ये ॥ २५८ ॥ तिरसः तिरि इत्ययमादेशो भवति अकारादावंचतौ परतः । तिर्यङ् । तिर्यंचौ । तिर्यञ्चः । तिरश्च्या । प् इति किं ? तिरश्चः । तिरश्चा ।

*द्व्यंतर्गेरीदपोऽनात् ॥ २५९ ॥ द्व्यंत-र्भ्यां अनवर्णांतात् गेश्चापः ईत्वं स्यात् । द्वीपः । अंतरीपं । समीपं । नीपं । वीपं । अनादिति किं ? प्रापं । परापं ।

देशेऽनोरुः ॥ २६० ॥ देशार्थेऽनोः पर-स्यापः उर्भवति । अनूपः । देशे इति किं ? अन्वीपो ग्रामः ।

छकारकेऽन्यस्य दुक् ॥२६१॥ छे कारके चान्यस्य दुगागमो भवति । अन्यदीयं । अन्यत्कारकं ।

* रागोत्सुकोत्यास्थितास्थाशाशिष्यताभस्य ॥ २६२ ॥ तांतभांतवर्जितस्यान्यस्य दुगागमो भवति रागादिषु परतः । अन्यद्रागः । अन्य-दुत्सुकः । अन्यदूतिः । अन्यदास्थितः । अन्य-दास्था । अन्यदाशा । अन्यदाशीः । अताभस्येति किं ? अन्यस्यान्येन वा रागः---अन्यरागः ।

वाऽर्थे ॥ २६३॥ अताभांतस्यान्यस्यार्थे वा दुग् भवति । अन्यदर्थः । अन्यार्थः ।

+प्यस्येङ्श वेऽदृत्के मातरि ॥२६४॥ प्यांत-स्य षसे अकार ऋकार ककारांते मातरि घौ वा ईङ्श भवति । कारीषगंध्या माता अस्य कारीषगं-धीमातः । कारीषगंध्यामातः । कारीषगंधीमाता । कारीषगंध्यामाता । कारीषगंधीमातृकः । कारी-षगंध्यामातृकः । प्यस्येति किं ? इभ्यामाता । व इति किं ? कारीषगंध्यामाता ।

*बंधौ ॥ २६५ ॥ प्यस्य वे बंधौ परे ईङ्श भवति । कारीषगंधीबंधुः । कौमुदगंधीबंधुः ।

*षे पुत्रपत्योः ॥ २६६ ॥ षसे पुत्रपत्योः प्यस्य ईङ्श भवति । कारीषगंधीपुत्रः । कारीष-गंधीपतिः । कौमुदगंधीपुत्रः । कौमुदगंधीपतिः । ष इति किं ? कारीषगंध्यापतिर्ग्रामः । पुत्रपत्यो-रिति किं ? कारीषगंध्याकुलं ।

कत्कोः षेऽचि ॥२६७॥ कोः कद् भवति षसे अजादौ घौ परं । कदजः । कदश्वः । कद्-शनं । ष इति किं ? किमो राजा । कूष्ट्रः । कश्वः । अचीति किं ? कुभोजनं ।

रथवदे ॥ २६८॥ कोः कद् भवति रथ-वदयोः परतः । कद्रथः । कद्वदः । बसेऽपि-कद्रथो राजा । कद्वदः खलः ।

तृणे जातौ ॥ २६९ ॥ कोः कद् भवति तृणे घौ जात्यर्थं । कत्तृणं । कुतृणान्यन्यत्र ।

कत्रिः ॥ २७० ॥ कोः किमो वा त्रौ घौ परे कान्निपात्यः । कत्त्रयः । कात्रिः ।

का पथ्यक्षे ॥ २७१ ॥ कोः का भवति पथ्यक्षयोः परतः । कापथः । काक्षः ।

*अल्पे ॥ २७२ ॥ ईषदर्थे कोः का भवति । ईषन्मधुरं--कामधुरं । काकटुकं । कालवणं ।

पुरुषे वा ॥ २७३ ॥ कोर्वा का स्यात् पुरुषे परतः । कापुरुषः, कुपुरुषः ।

कवं चोष्णे ॥ २७४ ॥ कोः कवादेशो भवति का च वा उष्णे परे । कवोष्णं । कोष्णं । कदुष्णं ।

×मांस्पाकमांस्पचने ॥ २७५ ॥ मांसस्य पाकपचनयोः परतः खं वा निपात्यते । मांस्पाकः । मांसपाकः । मांस्पचनं । मांसपचनं ।

×समः खं तते ॥ २७६ ॥ समस्तते परतः खं वा स्यात् । सततं । संततं ।

*स्कुसि ॥ २७७ ॥ समुट्कम्य कृतोऽवयवे सकारे परे समः सं वा भवति।सस्कर्ता।संस्कर्ता। सीति किं ? संचस्कार ।

*सम्तुमोर्मनःकामे ॥ २७८ ॥ सम्तुमोः सं भवति मनसि कामे च परतः । समनाः । सकामः । भोक्तुमनाः । भोक्तुकामः ।

*व्येऽवश्यमः ॥२७९॥ अवश्यमः म्वं भवति व्यसंज्ञे परतः । अवश्यकर्तव्यं । अवश्यदेयं ।

*पृषोदरादयः ॥ २८० ॥ पृषोदरप्रकाराः शब्दाः साधवो भवंति। पृषदुदरमस्य पृषोदरः। तलमत्र । वारिणो वाहकः— बलाहकः । महीं रौति मयूरः । शवानां शयनं- श्मशानं । पिशितमश्नाति पिशाचः । उर्ध्वौ कर्णौ अस्य उलूकः । मेहनस्य खस्य माला मेखला । जीवनस्य मूतः बंधः जीमूतः । उर्ध्वं खमस्य उलूखलं । मुहुः स्वनं लाति मुशलः । दिवि ओको येषां ते दिवौकसः । कौ जीर्यतीति कुंजरः । मह्यां शेते महिषः । बलं वर्द्धयति बलीवर्द्दः । हलस्य ईषा हलीषा । लांगलीषा । कुलान्यटतीति कुलटा । न स्त्री न पुमान् नपुंसकः । नास्मिन्नकं दुःखमस्तीति नाकः । न आप्यतेऽसौ नापितः । न मीयतेऽसौ नमेरुः । नांतरेण भवतीति नांतरीयकं । शकस्यांधुः शकंधुः । कर्कंधुः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं ॥

+दिग्भ्यस्तीरस्य तारः ॥२८१॥ दिग्भ्यः परस्य तीरस्य तारादेशो भवति । दक्षिणतारं । उत्तरतारं । पूर्वतारं । दिग्भ्य इति किं? गंगातीरं । उत्तरसूत्रस्थवाग्रहणेन सिंहावलोकितन्यायेन दक्षिणतीरमपि स्यात् ।

*स्विविसायाह्नस्याहन् ङौ ॥२८२॥ स्विंवसाद् विसायाभ्यां चाह्नस्याहन् वा स्यात् ङौ परतः। द्व्यहनि।द्व्यह्नि।द्व्यह्ने।यावदहनि।यावदह्नि। यावदह्ने । व्यहनि । व्यह्नि । व्यह्ने । सायाहनि । सायाह्नि । सायाह्ने । स्विविसायादिति किं ? पूर्वाह्णे । मध्याह्ने ।

*स्वचिह्नस्याविष्टाष्टपंचमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य दीः कर्णे ॥२८३॥ स्वचिह्नवाचकस्य कर्णे दीर्घो भवति विष्टादीन् मुक्त्वा । दात्राकर्णः । द्व्यङ्गुलाकर्णः । शंकुकर्णः । स्वचिह्नस्येति किं ? शोभनकर्णः । लंबकर्णः । अविष्टादेरिति किं ? विष्टकर्णः । अष्टकर्णः । पंचकर्णः । भिन्नकर्णः । छिन्नकर्णः । छिद्रकर्णः । स्रुवकर्णः । स्वस्तिककर्णः ।

नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ वाग्गेः ॥२८४॥ नहादिषु क्विबंतेषु परेषु वाचो गेश्च दीर्घो भवति । उपानत् । प्रावृट् । मर्माविध् । नीरुक् । जलासट् । परीतत् ।

*हविर्युक्ते कपालगवेऽष्टनः ॥ २८५ ॥ अष्टनः कपाले गवे च हविषि युक्तार्थे च दीर्घो भवति । अष्टाकपालं हविः । अष्टागवं शकटं । हविर्युक्त इति किं ? अष्टकपालः । अष्टगुः ।

*स्वौ ॥२८६॥ अष्टनः दीर्घो भवति स्वौ। अष्टापदः कैलासः । अष्टाचक्रं । अष्टाविटपः । स्वाविति किं ? अष्टकर्मच्छिन्न जिनः ।

*गिरिवनेऽञ्जनकोटरादेः ॥२८७॥ गिरिवनयोः परतः अंजनादीनां कोटरादीनां च दीर्घो भवति स्वौ। अंजनागिरिः । किंशुलकागिरिः । कुक्कुटागिरिः । इत्यादि । कोटरावणं । मिश्रकावणं । इत्यादि । अंजनकोटरादेरिति किं ? कृष्णगिरिः । नंदनवनं । स्वाविति किं ? अंजनगिरिः । कोटरवनं ।

*बह्वच्शरादीनां मत्वनजिरादेः ॥२८८॥ बह्वचां शरादीनां च मतौ स्ते दीर्घो भवति अजिर- वीरलवता । उदुंबरावती । मशकावती । पुष्क-

रावती । अमरावती । शरावती । मुनीवती । कणीवती । वंशावती । बहच्कादीनामिति किं ? इक्षुमती । मधुमती । अनजिरादेरिति किं ? अजिरवती । खदिरवती ।

चितेः कपि ॥२८९॥ चितेः कपि त्ये दीर्घो भवति । एकचितीकः। द्विचितीकः । त्रिचितीकः।

*विश्वस्य नरं ॥ २९० ॥ विश्वस्य दीर्घो भवति नरे परे खौ । विश्वानरः । विश्वनरो राजान्यत्र । नर इति किं ? विश्वसेनः ।

ऋषौ मित्रे ॥२९१ ॥ विश्वस्य मित्रे परे दीर्घो भवति ऋष्यर्थे खौ । विश्वामित्रः ऋषिः । विश्वमित्रोऽन्यः ।

*वसुराटोः ॥२९२॥ विश्वस्य वसुराटोः परो दीर्घो भवति । विश्वावसुः। विश्वाराट् । राडिति विकृतनिर्देशादिह न भवति । विश्वराजौ । विश्वराजः ।

*वहेऽपील्वादीकः ॥२९३॥ अपील्वादीनामिकः वहे परतः खौ दीर्घो भवति । ऋषीवहं । मुनीवहं । अपील्वादीति किं ? पीलुवहं । चारुवहं । इक इति किं ? पिंडवहं ।

गेः काशे ॥२९४॥ गेरिगंतस्य काशे घौ दीर्घो भवति । नीकाशः । वीकाशः । अनूकाशः । गेरिति किं ? साधुकाशः । इक इत्येव—प्रकाशः ।

*ति ॥२९५॥ दा इत्येतस्मिन् द्वितकारादेशे परतो गेरिगंतस्य दीर्घो भवति । वीत्तं । नीत्तं । परीत्तं । प्रणीत्तिमं । तीति किं ? सुदत्तं । इक इति किं ? प्रत्तं । अवत्तं ।

*घञि प्रायः ॥२९६॥ घञंते घौ परतो गेर्दीं भवति प्रायः । नीक्लेदः । नीमार्गः । अपामार्गः । प्राकारः । प्रासादः । प्रावारः । क्वचिन्न स्यात्—विवादः । प्रहारः । प्रकारः । प्रसादः । निषेधः । निषादः । क्वचिद्विकल्पः । प्रतिहारः । प्रतीहारः ।

बले ॥२९७॥ पूर्वस्य दीर्घो भवति बलत्ये प्रायः। कृषीबलः । आसुतिवलः ।

*इच्यात् ॥२९८॥ इजंते घौ पूर्वस्याकारादेशो भवति । केशाकेशि । कचाकचि । दंडादंडि । मुशलामुशलि । मुष्टामुष्टि । प्राय इति किं? अस्यसि।

*शुनः ॥२९९॥ शुनःप्रायो दीर्घो भवति । श्वादंतः । श्वाकर्णः श्वादंष्ट्रा । श्वावराहं । श्वाकुटं । न चास्ति । श्वमुखः। द्वयमपि । श्वपदं । श्वापदं ।

अन्यस्यापि ॥ ३०० ॥ अन्यस्यापिशब्दस्य यावद्यावपि दीर्घो भवति । दक्षिणापथः । उत्तरापथः । पूरुषः । नारकः ।

चौ ॥३०१॥ अचंतौ लुप्तनकाराकारे परतः पूर्वस्य दीर्घो भवति । प्राचः । प्राचा । प्रतीचः । प्रतीचा । प्राची । प्रतीची । दधीचः । मधूचः । दधीची । मधूची ।

*दूलेऽणः ॥३०२॥ ढ्रोः खं यस्मिन् तत् दूलं तस्मिन् दूले पूर्वस्याणो दीर्घो भवति । लीढं । उपगूढं । अर्म्नारथेन याति । इंदूरथमारोहति । नीरक्तं । नीरदः । दूरक्तं । अण इति किं? वृढः ।

सहवहोऽस्यौः ॥३०३॥ सहिवहोरस्य दूले ओत्वं स्यात् । सोढा । सोढुं । सोढव्यं । वोढा । वोढुं वोढव्यं । अस्येति किं? ऊढः । ऊढवान् ।

इति शब्दार्णवापरनाम्नि जैनेंद्रमहाव्याकरणे शब्दार्णवचंद्रिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पादः । ३॥

## चतुर्थःपादः

गोः ॥ १ ॥ गोरित्ययमधिकारो वेदितव्य आचतुर्थपादपरिसमाप्तेः । वक्ष्यति—केऽणः प्रवेशः । कुमारिका । गोरिति किं ? कुमारी चापलीति कुमारीकः ।

*इको यणिकः ॥ २ ॥ गोरवयवाद्धलः परस्य यणिगंतस्य दीर्घो भवति । संवीतः । शूनः । आहूतः । जीनः । हल इति किं ? उतः । उतवान् । उतिः । उत्वा । गोरिति किं ? निरुतं । दुरुतं ।

नाम्यतिसृचतसृ ॥३॥ तिसृ चतसृवर्जितस्य गोर्दीर्घो भवति नामिपरे । सर्वज्ञानां । मुनीनां । साधूनां । नामीति किं ? चर्मणां । अतिसृचतसृ इति किं ? तिसृणां । चतसृणां । गोरिति किं ? क्रिमिणां पश्य । परमनां पश्य ।

नुर्वा ॥ ४ ॥ नुर्नामि परे वा दीर्घो भवति । नृणां पतिः । नृणां पतिः ।

नोङः ॥ ५ ॥ नकारांतस्य गोरुङः दीर्घो भवति नामि परतः । पंचानां । सप्तानां । अष्टानां । नवानां ।

धेऽक्रौ ॥ ६ ॥ क्रिवर्जिते धे नोङो दीर्घो भवति । धनानि । राजा । राजानौ । राजानः । राजानं । तक्षा । तक्षाणौ । अक्राविति किं ? हे राजन् ।

*स्महतोः ॥ ७ ॥ सकारांतस्य महतश्च धेऽक्रौ नोङो दीर्घो भवति । श्रेयांसि । यशांसि । सर्पींषि । धनूंषि । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसं । श्रेयांसौ । महान् । महांतौ । महांतः । महांतं । महांतौ । अक्राविति किं ? हे श्रेयन् । हे महन् ।

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृतृपां ॥ ८ ॥ स्वस्रादीनां तृजंतानां अपश्च धेऽक्रौ दीर्घो भवति । स्वसारौ । स्वसारः । स्वसारं । स्वसारौ । नप्तारौ । नेष्टारौ । । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । वदितारौ जनापवादान् । कर्तारौ । कर्तारः । आपः । स्वापि तडागानि । स्वस्रादिग्रहणं नियमार्थं । उणादिसिद्धानामेषामेव दीर्घो नान्येषां । मातरौ । पितरौ । जामातरौ । दुहितरौ ।

इन्हन्पूषार्यम्णां शौ ॥ ९ ॥ एषामुङो दीर्घो भवति शौ परे । बहुदंडीनि । बहुवाग्मीनि कुलानि । बहुभ्रूणहानि । बहुपूषाणि । बह्वर्यमाणि । धेऽक्राविति सिद्धे नियमार्थोऽयं योगः । एषां शावेव दीर्घो नान्यत्र । दंडिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

सौ ॥ १० ॥ इन्नादीनामुङो दीर्घो भवति सौ परे । दंडी । छत्री । वाग्मी । तपस्वी । वृत्रहा । ब्रह्महा । पूषा । अर्यमा ।

अत्वसोऽभ्वादेः ॥ ११ ॥ अत्वंतस्यासंतस्य चाभ्वादेः सावक्रौ दीर्घो भवति । भवान् । गुणवान् । भुक्तवान् । सुपयाः । वेधाः । चन्द्रमाः । अभ्वादेरिति किं ? पिंडग्रः । चर्मवः । इषुमस्यामीति इष्वः । अक्रावित्येव हे भवन् । हे सुपयः ।

हस्य झल्क्ङोः क्ङिति ॥१२॥ हसंज्ञकस्य गोरुङो दीर्घो भवति झलादौ क्ङिति कौ च परतः । शांतः । संशांतः । दांतः । ददान्तः । तांतः । तंतांतः । प्रतान् । प्रशान् । प्रदान् । हस्येति किं ? पक्तिः । झल्क्ङोरिति किं ? शम्यते । दम्यते । क्ङितीति किं ? यंता ।

*हन्यचां सनि ॥ १३ ॥ हंतेरिणिगिकादेशस्य गमेरजंतानां च दीर्घो भवति झलादौ सनि परतः । जिघांसति । जिगांस्यते । अधिजिगांस्यते । अधिजिगांसते । चिचीषति । चिकीर्षति ।

तनो वा ॥ १४ ॥ तनोतेः सनि झलादौ वा दीर्घो भवति । तितांसति । तितंसति । झलीति किं ? तितनिषति ।

क्रमः क्त्वि ॥१५॥ क्रमः क्त्वि तें वा दीर्घो भवति । क्रंत्वा । क्रांत्वा । झलादावित्येव क्रमित्वा ।

छ्वः शूठ् ऊठ् वा ॥१६॥ छकारवकारांतयोः

पृठावादेशो स्तः क्सेशे झलादौ क्विति कौ च परतः । प्रश्नः विश्नः । पृष्टः । पृष्टवान् । पृष्ट्वा । पृष्टिः । शब्दप्राट् । स्योमा । स्यूतः । स्यूतवान् । स्यूत्वा । स्यूतिः । पटस्यूः । सूतः । सूतवान् । सूत्वा । सूतिः । अक्षयूः । अक्षयुवौ, अक्षयुवः । हिरण्यपूः । हिरण्यपुवौ । हिरण्यपुवः ।

ज्वरत्वरस्रिव्यविमवां वोऽनोः ॥ १७ ॥ ज्वरादीनां वकारस्योकश्च ऊर्भवति झलादौ कौ च । जूर्तिः । जूः । जुरौ । जुरः । तूर्तिः । तूः । तुरौ । तुरः । तूर्णः । तूर्णवान् । स्रोमा । स्रूतः । स्रूतवान् । स्रूः स्रुवौ । स्रुवः । ऊतिः । ऊः । उवौ । उवः । मूर्तिः । मूः । मुवौ । मुवः ।

रः खं ॥ १८ ॥ रेफात्परयो छ्वोः खं भवति । हुर्छा—हूर्णः। हूर्णवान्। हूः। हुरौ। हुरः हूर्तिः।मूर्छा—मूः। मुरौ मुरः । मूर्तः । मूर्तवान् । मूर्तिः । तुर्वी—तूर्णः । तूर्णवान् । तूः । तुरौ । तुरः । धुर्वी—धूः । धुरौ । धुरः । धूर्णः । धूर्णवान् । धूर्तिः ।

*ईटीटः ॥ १९ ॥ इटः परस्य ईटि परे अर्थात् सेः खं भवति । अदेवीत् । असेवीत् । अकोपीत् । अमोषीत् । ईटीति किं ? अलविषुः। इट इति किं ? अकोपीत् ।

*असिद्धोऽत्राभाद्युग्वुक् ॥ २०॥ असिद्धं भवत्याभाच्छास्त्रं अत्र शास्त्रे युग्वुग्वर्जिते कर्तव्ये।एधि, शाधि इत्यत्र एत्वशाभावयोः कृतयोः झलक्षणं धित्वमप्राप्तमसिद्धत्वात् भवति । जहीत्यत्र जभावे कृतेऽतो हेरुप् प्राप्तःसिद्धत्वान्नास्ति। अत्रेति किं ? अभाजि । रपि वलं नासिद्धं । आभादिति किं ? ररंधिव । ररंधिम । युग्वले वुग्नासिद्धं । अयुग्वुगिति किं ? उपादिदीये । बभूव । यदि उवि च कर्तव्ये वु वुकौ नासिद्धौ।

भाच्चः खं ॥ २१ ॥ भात्परस्य नकारस्य खं भवति । अनाक्ति धर्मं । भनक्ति पापं । भादिति किं ? नंदनः । सानुबंधग्रहणं किं ? यत्नानां ।

हलुङः क्ङित्यनिदितः ॥ २२ ॥ हलुङो नकारस्य खं भवति अनिदितो गोः क्ङिति परे। ध्वस्तः । ध्वस्तवान् । दनीध्वस्यते । सृस्यते । सनीसृस्यते । हल्ग्रहणं किं ? नीतं। उङः इति किं ? नद्धः । क्ङितीति किं ? ध्वंसित्वा। स्रंसित्वा। अनिदित इति किं? शंक्यते । शाशंक्यते । मंक्यते । मामंक्यते ।

+कंपलंगोंगविकारोपतापे ॥ २३ ॥ कंपिलंग्योर्नखं भवति अंगविकारोपतापयोः क्ङिति । विकपितः। विलगितः। विकंपितो विलंगितोऽन्यत्र ।

गमहनजनखनघसोऽनाङि ॥ २४ ॥ गमादीनां हलुङः खं भवति क्ङिति अनङ्परे । जग्मतुः । जग्मुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जज्ञिरे । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः । अनङीति किं?अगमन् । अघसत् ।

*दंशसंजः शपि ॥ २५ ॥ दंशिसंज्योर्नखं भवति शपि परे । दशति । दशतः । दशंति । सजति । सजतः । सजंति ।

रंजेः ॥२६॥ रंजेर्नकारस्य शपि परतः खं भवति । रजति । रजतः ।

णौ मृगरमणे ॥२७॥ रंजेर्नस्य णौ परे खं स्यात् मृगरमणार्थे । रजयति मृगान् व्याधः। मृगरमण इति किं?रंजयति सभां नटः ।

घञि भावकरणे ॥२८॥ रंजेर्नखं भवति भावे करणे च घञि परतः । रंजनं रज्यतेऽनेन वा रागः।भावकरण इति किं?रंज्यतेऽस्मिन्निति रंगः।

स्यदो जवे ॥ २९ ॥ स्यंदेर्घञि नखमवृद्धिश्च निपात्यते जवेऽर्थे । गोस्यदः। अश्वस्यदः ।

वच इति किं ? घृतम्बदः ।

● दशनावोदैधौद्मप्रश्रथहिमश्रथाः ॥२०॥ दशनादयो निपात्यंतेऽनकादौ परतः । दशनः । दंशेर्नलं । अवोदः । उंदेर्घञि नलं । एधः । इंधेर्घञि नलेपो । ओद्मः । उंदेर्मनि नलेपो । प्रश्रथः । हिमश्रथः । प्राहिमाभ्यां श्रंथेर्घञि नलभेवभावौ निपात्यौ ।

नांऽचोऽर्च्ये ॥२१॥ अंचेः पूजायामर्थे नलं न भवति । अंचितः शांतिनाथः । अंचितवान् । जिनं । अंचित्वा गुरून् गतः । अर्च्य इति किं ? उदक्तमुदकं कूपात् ।

क्त्वि स्कंदस्यंदोः ॥२२॥ अनयोः क्त्वा परे नलं न स्यात् । स्कंत्वा । स्यंत्वा । क्त्वीति किं ? प्रस्कद्य । प्रस्यद्य ।

●नशाजोर्वा ॥ २३ ॥ नशेर्जकारांतस्य च क्त्वि परे नलं वा स्यात् । नष्ट्वा । नंष्ट्वा । रक्त्वा रंक्त्वा । भक्त्वा । भंक्त्वा ।

भंजर्ञौ ॥ २४ ॥ भंजर्ञौ परतः नलं वा स्यात् । अभाजि । अभंजि पापं मुनिना ।

●शासोऽङ्हलीत् ॥ २५ ॥ शासो गोरुकः इद्भवति अङि हलादौ च क्ङिति परतः । आशिषत् । शिष्टः । शिष्टवान् । शिष्ट्वा । शिष्टिः । शिष्यः । शिष्मः । अङ्हलीति किं ? शशासतुः । शशासुः ।

कौ ॥ २६ ॥ शास उकः कावित्त्वं स्यात् । आर्यशीः ।

शा हौ ॥ २७ ॥ शासः शा इत्ययमादेशो भवति हौ परे । प्रशाधि । अनुशाधि ।

हंतेर्जः ॥ २८ ॥ हंतेर्ज इत्ययमादेशो भवति हौ परतः । जहि मन्युं पापं वा ।

●हन्मन्यमरमनमगमवनाततनादेर्ङस्लं झकि ॥ २९ ॥ हनादीनां वनतेस्तनादीनां च झकादौ क्ङिति परे ङस्लं स्यात् । हतः । हतवान् । हत्वा । हतिः । मतः । मतवान् । मत्वा । मतिः । यतः । यतवान् । यत्वा । यतिः । रतः । रतवान् । रत्वा । रतिः । नतः । नतवान् । नत्वा नतिः । गतः । गतवान् । गत्वा । गतिः । वतः । वतवान् । वत्वा । वतिः । ततः । ततवान् । तत्वा । ततिः । क्षतः । क्षतवान् । क्षत्वा । क्षतिः । क्षितः । क्षितवान् । क्षित्वा । क्षितिः । ऋतः । ऋतवान् । ऋत्वा । ऋतिः । तृतः । तृतवान् । तृत्वा । तृतिः । घृतः । घृतवान् । घृत्वा । घृतिः । वतः । वतवान् । वत्वा । वतिः हनादीनामिति किं ? तांतः । दांतः । झकीति किं ? हन्यते । मन्यते ।

प्ये ॥ ४० ॥ हनादीनां प्ये परे ङस्लं भवति । प्रहत्य । प्रमत्य । प्रतत्य । प्रयत्य । प्रक्षत्य ।

वा मः ॥ ४१ ॥ हनादीनां मांतानां प्ये परे ङस्लं वा भवति । नियत्य, नियम्य । वियत्य, वियम्य । प्रणत्य, प्रणम्य । आगत्य, आगम्य ।

●गमादीनां कौ ॥ ४२ ॥ एषां ङस्लं भवति कौ परतः । जनगत् । कलिंगगत् । मोक्षगतो मुनयः । संयत् । सुमत् । परीतत् । सुसत् ।

न क्तिचि दीर्घ ॥ ४३ ॥ हनादीनां क्तिचि परे ङस्लं दीर्घ न भवति । हन्यादिति हंतिः । मंतिः । यंतिः । रंति । नंतिः । गंतिः । तंतिः ।

वन्याः ॥ ४४ ॥ कांतस्य गोः वनि परे आत्वं भवति । विजावा । अग्रेगावा, दधिक्रावा ।

जन्सन्खनां ॥ ४५ ॥ एषां ङस्य झकादौ क्ङित्याकारादेशो भवति । जातः । जातवान् । जात्वा । जातिः । सातः सातवान् सात्वा । सातिः । खातः । खातवान् । खात्वा । खातिः ।

सनि ॥ ४६ ॥ जनादीनां सनि झकादौ

आत्वं स्यात् । सिषासति । झलीति किं? सिस-निषते । सिसनिषति । चिखनिषति ।

ये वा ॥ ४७॥ तेषां यकारे क्ङित्यात्वं वा स्यात । जायते । जन्यते । जाजायते । जंज-न्यते । सायते । सन्यते । सासायते । संसन्यते खायते । खन्यते । चाखायते । चंखन्यते ।

तनेर्यकि ॥ ४८ ॥ तनोतेर्यकि आत्वं वा स्यात् । तायते । तन्यते ।

सनः क्तिचि खं च ॥४९॥ सनः खमात्वं च वा स्यात् क्तिचि परतः।सातिः सातिः संतिः ।

अगे ॥ ५० ॥ अगे इत्ययमधिकारो ज्ञेयः। वक्ष्यति–हलो यः । बेभिदिता । चेछिदिता । अग इति किं? बेभिद्यते । चेछिद्यते ।

* भ्रस्जोरसोऽड् ॥ ५१ ॥भ्रस्जेः फेसकारयो-रगेऽड् भवति वा। भ्रष्टा । भर्ष्टा । भ्रष्टुं । भर्ष्टुं भर्ष्टव्यं । भ्रष्टव्यं । भर्जनं । भ्रज्जनं । भर्गःभ्रज्जः

*दरिद्रः खं लुङि ॥ ५२ ॥ दरिद्रातेः खं वा स्यात् लुङि परतः ।अदरिद्रात् । अदरिद्रासीत्

असन्वुण्ण्वने ॥ ५३ ॥ दरिद्रातेरगे खं स्यात् सकारादिसनं वुणं ण्वुं अनटं च विहाय दरिद्यात् । दरिद्यते । असन्वुण्ण्वने इति किं ? दिदरिद्रासति । दरिद्रायको व्रजति । दरिद्रा-यकः । दरिद्राणं । सकारादिविशेषणं सनः किं? दिदरिद्रिषति ज्ञापकमिदमेव दरिद्रातेः सनीड्वि-कल्पस्य ।

हलो यः ॥ ५४ ॥ हलः परस्य यकारस्य खं भवत्यगे परतः । बेभिदिता । बेभिदितुं । बेभिदितव्यं । मरीमृजिता । मरीमृजकः । हल इति किं ? कंडूयिता । लोलूयिता ।

वा क्यः ॥ ५५ ॥ हलः क्यक्यङ्क्यषोः खं वा स्यात् अगे परतः । समिधिता। समि-ध्यिता । समिधितुं । समिध्यितुं । दृषदिता । दृषदियिता । दृषदितुं । दृषदियितुं । दृषदितव्यं । दृषदियितव्यं ।

*अतः ॥ ५६ ॥ अकारांतस्य खं भवत्यगे परतः । चिकीर्षिता । चिकीर्षितुं । चिकीर्षि-तव्यं । प्रचिकीर्ष्य ।

णेः ॥ ५७ ॥ णेः खं भवत्यगे परतः । अततक्षत् । कार्यते । कारणं । कारकः ।

तं सेटि ॥ ५८ ॥ तसंज्ञके सेटि परे णेः खं भवति अगे परतः । कारितः । कारितवान् । हारितः । हारितवान् । गणितं । लक्षितं । नियमार्थोऽयं योगः त एव सेटि नान्यस्मिन् । कारयिता । हारयिता ।

*नामंताल्वाय्येत्न्वौ ॥ ५९ ॥ आमादिषु परतो णेः खं न स्यात् । कारयांचकार । हारयांचकार । गंडयंतः । मंडयंतः । स्पृह-यालुः । महयाय्यः । स्तनयित्नुः । गदयित्नुः ।

य्येऽय् घिपूर्वात् ॥ ६० ॥ घिपूर्वाद-वर्णाद् परस्य णेरयादेशो भवति य्ये परतः प्रकथय्य । प्रगणय्य । प्रबेभिदय्य । य्य इति किं ? प्रबेभिदिनः । घिपूर्वादिति किं ? प्रति-पाद्य गतः ।

वाऽऽपः ॥ ६१ ॥ आपः परस्य णेरय् भवति वा य्ये परे । प्रापय्य । प्राप्य ।

क्षेर्दीः ॥ ६२ ॥ क्षेः य्ये परे दीर्भवति । प्रक्षीय । परिक्षीय ।

तेऽण्ये ॥ ६३ ॥ अण्यार्थे तसंज्ञे क्षेर्दीर्भ-वति । क्षीणो देवदत्तः । अक्षीणो यज्ञदत्तः । अण्य इति किं ? क्षितमस्य ।

वा दैन्याक्रोशे ॥ ६४ ॥ क्षेर्वा दीर्भवति दैन्ये आक्रोशे च तेऽण्ये परतः । क्षितोऽयं । क्षीणोऽयं । क्षितोऽसि जाल्म । क्षीणोऽसि जाल्म ।

*सिच्वसीड्रुट्लासां कौ ग्रहाद्हन्दृशां चिट् ॥

॥ ६५ ॥ ग्रहेरजंतेभ्यो हनदृशिभ्यां च परेषां स्यादीनां कावर्षे भिट् वा स्यात् । अग्राहिषातां । अग्रहीषातां । ग्राहिष्यते । ग्रहीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । अग्लाविषातां । अग्लासातां । ग्लाविष्यते । ग्लास्यते । ग्लाविषीष्ट । ग्लासीष्ट । ग्लाविता । ग्लाता । अचायिषातां । अचेषातां । अस्ताविषातां । अस्तोषातां । चायिष्यते । चेष्यते । स्ताविष्यते । स्तोष्यते । अघानिषातां । अहसातां । अवधिषातां । घानिष्यते । हनिष्यते । घानिषीष्ट । वधिषीष्ट । घानिता । हंता । अदर्शिषातां । अदृक्षातां । दर्शिष्यते । द्रक्ष्यते । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । स्यादीनामिति किं ? ददे दानं । कवितव्यः कदारः । काविति किं ? कविष्यति केदारं । पविष्यति यवराशिं । ग्रहादिग्रहणं किं ? पक्ष्यते ओदनः ।

दीङोऽचि क्ङिति युक् ॥ ६६ ॥ दीङः क्ङित्यजादौ परे युगागमो भवति । उपदिदीयेथे । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । अचीति किं ? उपदीयते । क्ङितीति किं ? उपदानं ।

इटि चात्त्वं ॥ ६७ ॥ इट्यजादौ च क्ङित्यगे परे आकारांतस्य खं भवति । पपिथ । जज्ञिथ । पपतुः । पपुः । आहत् । प्रपा ।

ईचे ॥ ६८ ॥ आकारांतस्य चे परे ईत्वं भवति । देयं । धेयं । स्थेयं ।

घुमास्थागापाहाक्सां हलि ॥ ६९ ॥ एषां हलादौ क्ङिति ईत् भवति । दीयते । देदीयते । धीयते । देधीयते । धीतं वत्सेन । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । गीतः । गीतवान् । पीयते । पेपीयते । पीतं । पीतवान् । पीत्वा । हीयते । हीनः । हीनवान् । अवसीयते । अवसेषीयते । हलीति किं ? ददतुः ।



लिङ्येत् ॥ ७० ॥ घ्वादीनामेत्वमपि क्ङिति परे । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् ।

वाऽन्यः स्कादेः ॥ ७१ ॥ आकारांतस्य स्कादेः घ्वादीनन्यस्य लिङ्येत्वं वा स्यात् । ग्लेयात् । ग्लायात् । म्लेयात् । म्लायात् । स्नेयात् । स्नायात् । अन्य इति किं ? स्थेयात् । स्कादेरिति किं ? पायात् ।

न ल्ये ॥ ७२ ॥ घ्वादीनामीत्वं न स्यात् ल्ये परे । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । अवहाय । अवसाय ।

वेर्मेङः ॥ ७३ ॥ मेङः ल्ये इत्वं वा स्यात् । अपमित्य । अपमाय ।

*लुङ्लङ्लृङ्क्ष्वमाङाऽट् ॥ ७४ ॥ गोरडागमो भवति लुङादिषु परतः माङ्योगं विहाय । अकार्षीत् । अकरोत् । अकरिष्यत् । अहार्षीत् । अहरत् । अहरिष्यत् । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत । औब्जीत् । औब्जत् । औब्जिष्यत् । अमाङा इति किं ? मा हार्षीत् । मा भवान् कार्षीत् । मा स्म करोत् । मेक्षिष्ट । मा स्मेक्षत । मोब्जीत् । मानिरसीत् । मास्म निरटीत् । मानिरटत् । अग इति निवृत्तं ।

*इण्श्नुधुभ्रुवोऽचीयुव्यो: ॥ ७५ ॥ एषां इवर्णोवर्णयोरियुवौ स्तः अजादौ परे । आप्नुवंति । शक्नुवंति । चिक्षियतुः । चिक्षियुः । तुष्टुवतुः । तुष्टुवुः । भ्रुवौ । भ्रुवः । श्नुधु इति किं ? चिन्वंति । सुन्वंति । अचीति किं ? नीः । लूः ।

चस्यास्ये ॥ ७६ ॥ चस्य य्वोः इयुवौ स्तः असेऽपि परतः । इयर्ति । इयर्तः । इयूति । इयेष । उवोष । असे इति किं ? ईयतुः । ईयुः । ऊषतुः । ऊषुः ।

स्त्रियाः ॥ ७७ ॥ स्त्रीशब्दस्येय् भवत्यचि परतः । स्त्रियौ । स्त्रियः ।

वाऽम्वसोः ॥७८॥ स्त्रिया वा इय् भवति अम्वसोः परतः। स्त्रियं । स्त्रीं । स्त्रियः। स्त्रीः।

औतः ॥ ७९ ॥ ओतः आकारो भवति अम्वसोः परतः । गां । गाः । द्यां । द्याः ।

*यणिणः ॥ ८० ॥ इणोऽचि यण् भवति । यंति । यंतु । यन् ।

×वेकः ॥ ८१॥ इको यण् वा भवति अचि परतः।अधीयंति । अधियंति । अधीयन्।अधियन्।

एर्गिवाक्वाद्धुकोऽसुधियः ॥८२ ॥ गिवाक्वाद्व परस्माद् उकः परस्य इवर्णस्य यण् भवत्यचि सुधीशब्दं त्यक्त्वा । सुन्यौ । सुन्यः । परिण्यौ । परिण्यः। ग्रामण्यौ । ग्रामण्यः । सेनान्यौ । सेनान्यः । चिच्ये । चिच्याते । निन्युः । निन्युः । गिवाक्वादिति किं ? नियौ । नियः । उकः इति किं ? ववक्रियौ । असुधिय इति किं ? सुधियौ । सुधियः ।

सुप्योः ॥ ८३ ॥ गिवाक्वादुकः परस्योवर्णस्य सुप्यजादौ परे यण् भवति । सुल्वौ । सुल्वः।खलप्वः।सुपीति किं ? लुलुवतुः।लुलुवुः ।

दृन्करपुनर्वर्षाभ्यो भ्वः ॥ ८४ ॥ एभ्यो भवतेर्यण् भवति अजादौ सुपि परं । दृन्भ्वौ । दृन्भ्वः। करभ्वौ । करभ्वः। पुनर्भ्वौ। पुनर्भ्वः । वर्षाभ्वौ । वर्षाभ्वः । नियमोऽयं—एभ्य एव भ्वो यण् भवति नान्यस्मात्।स्वयंभुवौ। स्वयंभुवः ।

लुङ्लिटोर्वुक् ॥ ८५ ॥ भुवो वुक् भवति लुङ्लिटोरचि परे । अभूवम् । अभूवन् । बभूव । बभूवतुः ।

होर्गे घः ॥ ८६ ॥ होरुकारस्य वकारादेशो भवत्यजादौ गे परतः। जुहुवतु । ग इति किं ? जुहुवतुः । जुहुवुः ।

गोहेरूदुकः॥ ८७ ॥ गोहेरुकः ऊद् भवति अचि परतः । निगूहते । निगूहयति । निगूहकः । साधुनिगूही । निगूहं निगूहं निगूहो वर्तते । गूहति । उपगूहकः । गोहेरिति किं? निर्देशः,किं?निजुगुह । निजुगूहतुः,। अचीति किं ? निगोढा । निगोढुं । निगोढव्यं ।

दोषो णौ ॥८८॥ दोषः उको णौ परतः ऊद् भवति । दूषयति । दूषयतः । दूषयंति । णौ इति किं?दोषः ।

वा चित्ते ॥८९॥ दोषो णावुकःऊद्वा स्यात् चित्तार्थे । चित्तं दूषयति चित्तं दोषयति । प्रज्ञां दोषयति । प्रज्ञां दूषयति । चित्त इति किं?एकांतवादप्रयोगं दूषयति ।

* घटादिकगेवनुजनीजृष्वसस्नक्नसरंज्यमोऽपर्यपस्खलतृकमुयमूयमः मोऽमुञ्योस्तु दीर्घो ॥ ९० ॥ पर्यपपूर्वस्खलादिवर्जितानां घटादीनां कगेवनुजनीजृष्वसस्नक्नसरंजीनां अमंतानां च कमुयम्यामिवर्जितानां योकः प्रो भवति णौ अमुञिपरे तु दीर्घो । घटयति । घटंघटं । घाटंघाटं । अघटि । अघाटि । व्यथयति । व्यथंव्यथं । व्याथंव्याथं । अव्यथि । अव्याथि । कगयति । कगंकगं । कागंकागं । अकगि । अकागि । वनयति । वनंवनं । वानंवानं । अवनि । अवानि । जनयति ।जनंजनं । जानंजानं । अजनि । अजानि । जरयति । जरंजरं । जारंजारं । अजरि । अजारि । स्नसयति । स्नसं स्नसं । स्नासं । स्नासं । अस्नसि । अस्नासि । क्नसयति । क्नसंक्नसं । क्नासं क्नासं । अक्नसि । अक्नासि । रजयति । रजं रजं । राजं राजं । अरजि । अराजि । गमयति । गमंगमं । गामंगामं । अगमि अगामि । दमयति । दमंदमं । दामंदामं । अदमि । अदामि । शम-

सुनुमः । सुन्वः, सुनुवः । सुन्महे, सुनुमहे । तन्मः, तनुमः । तन्वः, तनुवः । तन्वहे, तनुवहे । तन्महे, तनुमहे ।

*कुर्व्यं च ॥१०६॥ कृञः परस्यातः खं भवति वकारादौ म्योश्च परतः । कुर्यात् । कुर्वीतां । कुर्युः। कुर्वः। कुर्मः । कुर्वहे। कुर्महे। यि येति किं ? कुरुतः ।

*गेऽतः क्ङित्युत् ॥१०७॥ कृञोऽत उद्भवति गे क्ङिति परतः । कुरुतः । कुर्वंति । क्ङितीति किं ? करोमि ।

भऽसः खं ॥१०८॥ भसः अस्तेश्चातः खं स्यात् वा गे क्ङिति परतः । बभ्संति । स्वः। स्मः। स्थः। स्तः।संति । क्ङितीति किं ? बभस्मि । अस्मि। असि । अस्ति ।

श्नस्नोरातः ॥१०९॥ श्नस्नोराकारस्य खं भवति गे क्ङिति परतः । संजिहते । मिमते । मिमतां । क्रीणंति । क्रीणते । लुनंति । लुनते । श्नस्नोरिति किं ? यांति । आत इति किं ?बिभ्रति।

हल्यघोरीः ॥ ११० ॥ घुसंज्ञकवर्जितस्य श्नस्य आ इत्येतस्य च ईत्वं स्यात् हलादौ क्ङिति परतः । मिमीवहे । मिमीमहे । मिमीषे । मिमीध्वे । मिमीते । लुनीवः । लुनीमः। लुनीतः । हलीति किं ? मिमते । लुनति । अघोरिति किं ? दद्वः । दद्मः । दध्वः । दध्मः ।

इद् दरिद्रः ॥१११ ॥ दरिद्रातेरात इत्वं स्यात् हलादौ क्ङिति गे परतः । दरिद्रिवः । दरिद्रिमः । दरिद्रिथः । दरिद्रितः। दरिद्रियात्।

भ्यो वा ॥११२॥ बिभेतेर्वा इद् भवति हलादौ क्ङिति गे परतः । बिभिवः ।बिभीवः। बिभिमः । बिभीमः । बिभिथः । बिभीथः । बिभितः । बिभीतः । बिभियात् । बिभीयात् । गे इति किं ? भीतः । भीतवान् ।

हाकः ॥११३॥ ओहाको वा इत्वं भवति हलि क्ङिति गे परतः । जहिवः । जहीवः । जहिमः । जहीमः । जहिथः । जहीथः । जहितः । जहीतः ।

आ च हौ ॥११४॥ हाको हौ परे आत्वं भवति इच्च वा । जहाहि, जहिहि, जहीहि ।

यि खं ॥११५॥ हाकः खं भवति वकारादौ गे क्ङिति परतः। जह्यात्। जह्यातां ।जह्युः।

*घ्वसो रेऽच्खले ॥११६॥ घुसंज्ञानामस्तेश्च हकारादौ हौ परे एत्वं स्यात् तस्य चस्य च खं । देहि । धेहि । एधि । हकारादाविति किं ? दद्यात् । धत्तात् । स्तात् ।

* हल्मध्ये लिट्यतः ॥ ११७ ॥ हलोर्मध्ये वर्तमानस्यातः एत्वले खःक्ङिति परतः। नेमतुः। नेमुः । पेचतुः । पेचुः । शेकतुः । शेकुः । हल्मध्य इति किं ? आटतुः । आटुः । अत इति किं । दिदिवतुः । दिदिवुः । तकारः किं ? शशासतुः । शशासुः ।

सेटि ॥ ११८ ॥ सेटि लिटि परतः हल्मध्ये वर्तमानस्यातःएत्वले खः। येमिथ । पेचिथ । शेकिथ । सेटीति किं ? पपक्थ ।

फणभजोः ॥ ११९ ॥ फणभजोरेत्वले स्तः क्ङिति लिटि सेटि च परतः । फेणतुः। फेणिथ। भेजतुः । भेजिथ । भेजे । भेजाते । भेजिरे । नियमार्थोऽयं योगः । एतयोरेव आदेशादेरे-त्वले नान्यस्य । चकणतुः। चकणुः। चकणिथ । बभणतुः । जमदिथ । ऊवसिथ । इयजिथ ।

तृत्रपोः ॥ १२० ॥ तृत्रपोरत एत्वले स्तः । तेरुः । तेरे । त्रेपाते । त्रेपिरे । तेरतुः । तेरुः । तेरिथ । इदमपि नियमार्थं—अनेकहल्मध्यस्थ-स्यातः यथेव एत्वखले स्यातां ... नान्यस्य । तत्रसतुः । तत्रसिथ । ... । ...

चकरुः । विचकरिथ । चकरतुः । चकरिथ ।

वधे राधेः ॥ १२१ ॥ वधेऽर्थे राधेः किंङ्येत्वखे स्तः । रेधतुः । रेधुः । रेधिथ । वध इति किं ? आरराधतुः ।

*न शसददवादेः ॥ १२२ ॥ शसदवादीनां च क्ङिटयेत्वखे न स्तः । विशशसतुः । विशशसुः । विशशसिथ । दददे । दददाते । दददिरे । ववणतुः । ववणुः । ववणिथ । ववके । ववकाते । ववकिरे । ववसे । ववसाते । ववसिरे ।

*वा भ्रम्वम्त्रसॄज्राम् ॥ १२३ ॥ भ्रमादीनां किटयेत्वखे वा स्तः । भ्रेमतुः । भ्रेमुः । भ्रेमिथ । बभ्रमतुः । बभ्रमुः । बभ्रमिथ । वेमतुः । वेमुः । वेमिथ । ववमतुः । ववमुः । ववमिथ । त्रेसतुः । त्रेसुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ । जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रमेरादेशादित्वाद् वमेर्वादित्वात् त्रसेरनेकहल्त्वात् जॄष एपनिर्वृत्ताकारत्वादप्राप्तेर्विकल्पः ।

*फणां ॥ १२४ ॥ फणादीनां सप्तानामेत्वखे वा स्तः क्ङिति लिटि सेटि च परतः । फेणतुः । फेणुः । फेणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेसे । भ्रेसाते । भ्रेसिरे । बभ्रासे । बभ्रासाते । बभ्रासिरे । भ्लेसे । भ्लेसाते । भ्लेसिरे । बभ्लासे । बभ्लासाते । बभ्लासिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमुः । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ ।

*श्रंथिग्रंथ्योर्नखं च ॥ १२५ ॥ श्रंथिग्रंथ्योः क्ङिति लिटि सेटि च परत एत्वखे वा स्तः नखं च । श्रेथतुः । श्रेथुः । श्रेथिथ । शश्रंथतुः । शश्रंथुः । शश्रंथिथ । ग्रेथतुः । ग्रेथुः । ग्रेथिथ । जग्रंथतुः । जग्रंथुः । जग्रंथिथ ।

*दंभेः ॥ १२६ ॥ दंभेः क्ङिति किटयेत्वखे स्तः नखं च । देभतुः । देभुः ।

*थे वा ॥१२७॥ दंभेरेत्वखे स्तो नखं च थे परे वा । देभिथ । ददंभिथ ।

× पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासंश्छाये ॥ १२८ ॥ पादादीनां पदादयो भवन्त्यघे सुपि वा । पदा, पादेन । दद्भिः । दंतैः । नसा । नासिकया । मासि । मासे । हृदि । हृदये । निशि, निशायां । अस्ना, असृजा । यूष्णा, यूषेण । दोष्णा, दोषा । यक्ना, यकृता । शक्ना, शकृता । उद्ना, उदकेन । आसनि, आसने । अघ इति किं ? पादः ।

अनञोऽर्वणोऽसौ ॥१२९॥ अनञ अर्वणः तृभावो भवत्यसौ सुपि परे । अर्वन्तौ । अर्वन्तः । अर्वत्सु । अनञ इति किं ? अनर्वाणौ । । असाविति किं ? अर्वा ।

भस्य ॥ १३० ॥ भस्येत्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

पादः पत् ॥ १३१ ॥ पादान्तस्य भस्य पदादेशो भवति । द्विपदः पश्य । द्विपदा । द्विपदी । त्रिपदः । त्रिपदा । त्रिपदे । त्रिपदी । चतुष्पदः । चतुष्पदी । व्याघ्रपदः । व्याघ्रपदी । वैयाघ्रपद्यः । भस्येति किं ? द्विपादौ । द्विपादः ।

* वसोर्वस्योट् ॥ १३२ ॥ भस्य वसोर्वकारस्योड् भवति । विदुषः पश्य । विदुषा । विदुषी । पेचुषः । पेचुषा । पेचुषे । पेचुषी ।

श्वयुवमघोनोऽहृति ॥ १३३ ॥ श्वादीनां वस्योड् भवति अहृति परे । शुनः । शुना । शुने । शुनी । यूनः । यूना । यूने । [illegible] । मघोनः । मघोना । अहृतीति किं ?

शुनो विकारः शौवं मांसं । यूनो भावः—यौवनं वर्तते । मघोन इदं—माघवनं रूपं ।

अनोऽत्यमन्वस्फाद् ॥ १३४ ॥ अनंतस्य भस्याकारस्य खं भवति मकारवकारांतात् परं मुक्त्वा । राज्ञः पश्य । राज्ञा । राज्ञी । अम्व-स्फादिति किं ? अश्मनः । वर्मणः । पर्वणः । तत्त्वदृश्वनः ।

पूषाहन्धृतराज्ञोऽणि ॥ १३५ ॥ पूषन् इत्येतदंतस्यानःधृतराज्ञश्चाखं भवत्यणि परे भस्य । पूष्णोऽपत्यं पौष्णः । ताक्ष्णः । भ्रूणघ्नोऽपत्यं भ्रौणघ्नः । वार्त्रघ्नः। धृतराज्ञोऽपत्यं—धार्तराज्ञः ।

वा ङिङ्योः ॥ १३६ ॥ अनोऽकारस्य खं वा स्यात् ङौ ङीशब्दे च परे भस्य । राज्ञि । राजनि । कोम्नि । कोमनि । कोम्नी । कोमनी । दाम्नी । दामनी ।

अचः ॥ १३७ ॥ अंचेर्लुप्तनकारस्य खं भवति । प्रतीचः। प्रतीचा । प्रतीची । दधीचः । दधीचा । दधीची । मधूचः-मधूचा । मधूची । अच इति किं ? साध्वंचः । साध्वंचा ।

ईदुदः ॥ १३८ ॥ उदः परस्याच ईत्त्वं स्यात् । उदीचः । उदीचा । उदीची ।

*आतोऽनापः ॥ १३९॥ आप्वर्जितस्यातः भस्य खं भवति । कीलालपः पश्य । कीला—लपा । कीलालपे । शुभंयः पश्य । शुंभया । टाःपत्यः । अनाप इति किं ? मालाः कुरु ।

*डिति टेः ॥ १४० ॥ टिसंज्ञकस्य खं भवति डिति परे । मुनौ । साधौ ।

*इति विंशतेस्त्वेः ॥ १४१ ॥ विंशतेर्भस्य तिशब्दस्य डिति इति खं स्यात् । विंशतेः पूरणः विंशः । विंशं शतं । इतीति किं ?विंशती ।

*नः ॥ १४२ ॥ नकारांतस्य टेः खं भवति इति परतः । आग्निशर्मिः । दैवशर्मिः । औडुमिः। औडुलोमिः ।

*ईः भावः ॥ १४३ ॥ ईसंज्ञकस्य टेः खं भवति इति परतः । स्वर्भवः सौवः । बहिर्भवो बाह्यः । अकस्माद् भवः-आकस्मिकः । पौनः-पुन्यं । न चास्ति—शाश्वतिकः । शाश्वतं । आरातीयः ।

सब्रह्मचारादेः ॥ १४४ ॥ एषां टेः खं भवति इति परतः । सब्रह्मचारिणः शिष्यः साब्रह्मचारः । पीठसर्पिणोऽयं—पैठसर्पः । शिकाकिन इमे शैकाकाः । शैलंडाः । सुपर्वण इमे सौपर्वाः ।

*चर्मणः संकोचकोशे ॥ १४५॥ अच-र्मणोः संकोचे कोशे चार्थे टेः खं स्यात् इति परतः । शुनोऽयं शौवः संकोचः। चर्मणो विकारः चार्मः कोशः।संकोचकोश इति किं ? शौवनः । चार्मणः ।

*वाऽश्महितनाम्नो विकारापत्ये ॥१४६॥ अश्मन् हितनामनित्येतयोः विकारेऽपत्ये चार्थे वा टिखं भवति इति परतः । अश्मनो विकारः आश्मः । आश्मनः । हितनाम्नोऽपत्यं हैतना-मः । हैतनामनः । अन्यत्र—आश्मनः । हैतनामनः ।

*टलेऽह्नः ॥ १४७ ॥ अन्हऽट लयोरेव टेः खं भवति । उत्तमाहः । द्वे अहनी भूतो भावी वा द्व्यहीनः । त्र्यहीनः । टल इति किं ? अन्हा निर्वृत्तमाह्निकं ।

कद्रोरोऽस्वयंभुवः ॥ १४८ ॥ कद्रूशब्दस्य उवर्णांतस्य च स्वयंभूवर्जितस्य ओत्वं भवति इति परतः । कद्र्वाः अपत्यं काद्रवेयः । शंडो-रपत्यं शांडव्यः । औपगवः । कापटवः । स्वयं-भुव इति किं ? स्वयंभुव इदं स्वायंभुवं ।

टे सं ॥ १४९ ॥ उवर्णान्तस्य सं भवति टे परे । भद्रबाहाः अपत्यं भाद्रबाहेयः । जंब्वा अपत्यं जांबेयः ।

*एः ॥ १५० ॥ अवर्णान्तस्य च भस्य सं भवति इति परे । दाक्षिः । चौडिः । नाभेयः । रौहिणेयः । कमंडलेयः ।

ङ्यां ॥ १५१ ॥ अवर्णेवर्णयोः सं भवति ङीत्वे परतः।गौरी।कुमारी।कुरुचरी । दाक्षी । प्लाक्षी।

*मत्स्योक्य: ॥१५२॥ मत्स्यस्योको यकारस्य सं भवति ङ्यां परतः । मत्सी ।

सूर्यागस्त्ययोश्छे च ॥१५३॥ अनयोश्छो यकारस्य सं भवति ङ्यां छे च परतः । सूर्यस्य भार्या सूरी । अगस्ती । सौरीयः । आगस्तीयः । छे चेति किं ? सौर्यं तेजः ।

हलो हृतः ॥१५४॥ हलः परस्य हृतो यकारस्य सं भवति ङ्यां परतः । गार्गी । वात्सी । हल इति किं ? वासुदेवी । हृत इति किं ? कात्सी ।

क्यच्व्यनावृत्यापत्यस्य ॥ १५५ ॥ क्ये च्वौ अनकारादौ च इति हलः परस्यापत्यस्य यकारस्य सं भवति । गार्गीयति । गार्गायते । वात्सीयति । वात्सायते । गार्गीभूतः। वात्सीभूतः। गर्गाणां समूहः गार्गकं । वात्सकं । वात्सस्यायं वात्सीयः । गार्गीयः । क्यच्व्यनादिति किं ? गार्ग्यायणः । वात्स्यायनः । आपत्यस्येति किं ? सांकाश्ये भवः सांकाश्यकः । कांपिल्यकः । हल इत्येव—आत्रेयकः ।

राजन्यमनुष्यस्याके ॥ १५६ ॥ राजन्य मनुष्ययोर्यकारस्य सं नास्त्यके परतः । राजन्यानां समूहः राजन्यकं । मानुष्यकं ।

*तैषपौषं वे ॥ १५७ ॥ तिष्यपुष्ययोर्यकारस्य सं निपात्यते नक्षत्रविषये । तिष्येण युक्तश्चेन्द्रः तैषः । पौषः । भ इति किं ? तिष्यो देवताऽस्य तैष्यः । पौष्यः ।

*आंतमांतितमांतितोंतियांतिषट् ॥१५८॥ अंतमादयः शब्दाः क्वतिकाद्विलाशा वा निपात्यंते । अतिशयेनांतिकः अंतमः । अंतितमः । अंतिकतमः । तमेऽतिकस्य तिशब्दस्य कशब्दस्य च सं निपात्यते । अंतिकादागतः अंतितः । अंतिकतः । तसि वा कोप् । अंतिके साधुः अंतियः । अंतिक्यः । यः कोप् । अंतिके सीदतीत्यंतिषत् । अतिकसत् । क्विपि सदि कलोपत्वे षत्वं सः ।

*बिल्वकादेश्छस्य ॥ १५९॥ बिल्वकादीनां छकारस्य सं भवति छि परतः। बिल्वाः अस्यां संति बिल्वकीया नदी । तस्यां भवः बैल्वकः । वैणुकीया । वैणुकः । वैत्रकीया । वैत्रकः । त्रिकीया । त्रैकः ।

तुरिष्ठेमेयस्सु ॥ १६० ॥ तृशब्दस्य सं स्यात् इष्ठ इमनीयसौ परतः । अतिशयेन कर्तृमान् करिष्ठः । हरिष्ठः । करीयान् । हरीयान् । इमन्ग्रहणमुत्तरार्थं ।

टेः ॥ १६१ ॥ टेश्च सं भवति इष्ठेमेयस्सु परतः । पटिष्ठः । पटोर्भावः पटिमा । पटीयान्। लघिष्ठः । लघिमा । लघीयान् ।

णाविष्ठवन्मृदः ॥ १६२ ॥ मृदः इष्ठे इव कार्यं भवति णौ परतः । पटुमाचष्टे—पटयति । लघयति । साधुमाचष्टे—साधयति । म्रदयति । कर्तृमंतं—करयति । हर्तृमंतं—हरयति ।

स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यण् एक् ॥ १६३ ॥ स्थूलादीनां यणः सं भवति इक् एप् च इष्ठेमेयस्सु परतः । स्थविष्ठः । स्थविमा । स्थवीयान् । दविष्ठः । द्रविमा । दवीयान् । यविष्ठः। यविमा । यवीयान्। ह्रसिष्ठः ।

ह्रसिमा । ह्रसीयान् । क्षेपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । स्थूलमाचष्टे—स्थवयति । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति ।

प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृंदारकाणां ॥ १६४ ॥ प्रियादीनामिकारादेर्वर्णसंघातस्यास्त्वं स्यादिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान् । स्थेष्ठः स्थेमा । स्थेयान् । स्फेष्ठः । स्फेमाः स्फेयान् । प्रापयति । स्थापयति ।

बहुलगुरुवृद्धतृप्रदीर्घवृंदारकाणां बंहिगर्वर्षित्रप्द्राघवृंदाः ॥ १६५ ॥ बहुलादीनां बंहादयो भवति इष्ठेमेयस्सु परतः । बंहिष्ठः । बंहिमा । बंहीयान् । गरिष्ठः । गरिमा गरीयान् । वरिष्ठः । वरिमा । वरीयान् । वर्षिष्ठः । वर्षिमा । वर्षीयान् । त्रपिष्ठः । त्रपिमा । त्रपीयान् । द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृंदिष्ठः । वृंदिमा । वृंदीयान् । बंहयति । गरयति । इत्यादि ।

बहोर्भूर्वस्मात्त्वं ॥ १६६ ॥ बहोर्भूभावो भवति अस्माच्चेमेयसोरादेः त्वं । बहोर्भावः—भूमा । अतिशयेन बहुः भूयान् ।

*भूयिष्ठे ॥ १६७ ॥ बहोर्भूयादेशो भवतीष्ठे परतः । भूयिष्ठः ।

*ज्यायान् ॥ १६८ ॥ प्रशस्यस्य वृद्धस्य वा ज्यादेशात्परस्येयसोरात्त्वं निपात्यं । अतिशयेन प्रशस्यः वृद्धो वा ज्यायान् । ज्यायांसौ । ज्यायांसः । ज्यायसी । ज्यायः ।

* रः पृथुमृदुकृशभृशदृढपरिवृढस्यो:॥१६९॥ पृथ्वादीनां ऋकारस्य रेफादेशो भवतीष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथिमा । प्रथीयान् । म्रदिष्ठः । म्रदिमा । म्रदीयान् । क्रशिष्ठः । क्रशिमा । क्रशीयान् । भ्रशिष्ठः । भ्रशिमा । भ्रशीयान् । द्रढिष्ठः । द्रढिमा । द्रढीयान् । परिव्रढिष्ठः । परिव्रढिमा । परिव्रढीयान् । प्रथयति । म्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादेरिति किं ? ऋजिष्ठः । ऋजिमा । ऋजीयान् । ऋजयति । कृष्णिष्ठः कृष्णिमा । कृष्णीयान् । कृष्णयति ।

नैकाचः ॥ १७० ॥ एकाचः टिखं न भवतीष्ठेमेयस्सु परतः । अतिशयेन स्रग्वान्—स्रजिष्ठः स्रग्वतो भावः—स्रजिमा । स्रजीयान् । स्रग्वंतमाचष्टे—स्रजयति । स्रजिष्ठः स्रजिमा । स्रजीयान् । स्रजयति । एकाच इति किं ? अतिशयेन वसुमान् वसिष्ठः ।

अनपत्येऽणीनः ॥ १७१ ॥ इन्नंतस्यानपत्यार्थे अणि परे टिखं न स्यात् । समंततः कुटनं सांकोटिनं । सांराविणं । सांमार्जिनं । गुणिन इदं गौणिनं । दांडिनं । छात्रिणं । अनपत्यं इति किं ? बाहुबालिनोऽपत्यं बाहुबलः ।

गाथिविदथिकेशिपाणिगणिस्फादेः॥१७२॥ गाथ्यादीनां स्फादेश्चेनो यदुक्तं तन्न भवत्याणि परे । गाथिनोऽपत्यं गाथिनः । वैदथिनः । केशिनः । पाणिनः । गाणिनः । शाङ्गिणः । माद्रिणः चाक्रिणः ।

*म्नोऽवर्मणः ॥ १७३ ॥ मन्नंतस्यावर्मणोऽनपत्य एवाणि यदुक्तं तन्न स्यात् । चर्मणा छन्नः चार्मणो रथः । साम देवता अस्य—सामनः वेम्न इदं वैमनं । अनपत्य इति किं ? सुषाम्नोऽपत्यं—सौषामः । अवर्मण इति किं ? सौवर्णवर्मणः । हैरण्यवर्मणः ।

ब्राह्मं ॥१७४॥ ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्रह्मणोऽयं—ब्राह्मो मंत्रः । ब्राह्ममस्त्रं ।

जातौ ॥ १७५ ॥ जात्यर्थे ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्राह्मी ओषधिः । अनपत्य

इति किं ? ब्रह्मणोऽपत्यं ब्राह्मणः ।

*औक्षं ॥ १७६ ॥ उक्ष्णोऽनपत्येऽणि टिखं निपात्यते । उक्ष्ण इदं–औक्षं पदं । अनपत्य इति किं ? उक्ष्णोऽपत्यं–औक्ष्णः ।

अनः ॥ १७७ ॥ अन्नंतस्याणि यदुक्तं तन्न स्यात् । सुत्वनोऽपत्यं सौत्वनः । याज्वनः । कर्मणो विकारः कार्मणः ।

येऽकौ ॥ १७८ ॥ अकावर्थे येऽनो यदुक्तं तन्न स्यात् । सामनि साधुः–सामन्यः । वेमन्यः । मूर्धनि भवः मूर्द्धन्यः । राज्ञोऽपत्यं-राजन्यः । अकाविति किं ? राज्ञो भावः कर्म वा–राज्यं ।

खेऽध्वनः ॥ १७९ ॥ अध्वनः खे परतः टिखं न भवति । अध्वानमलंगामी- अध्वनीनः ।

*ठाकेऽथर्वयूनः ॥ १८० ॥ अथर्वन् युव नित्येतयोर्यदुक्तं तन्न स्यात् ठाकयोः परतः । अथर्वाणं वेत्त्यधीते वा आथर्वणिकः । यूनो भावो यौवनिका । ठाक इति किं ? अथर्वणोऽयं आथर्वः । युवा प्रयोजनमस्य–यौविकं ।

दंडिहस्तिनोः फे ॥ १८१ ॥ एतयोः फत्ये टिखं न भवति । दंडिनोऽपत्यं-दांडि- नायनः । हास्तिनायनः ।

वासिजिह्मासिनःफिढे ॥१८२॥ एतयोः फौ ढं च परे टिखं न भवति । वासिनोऽपत्यं– वासिनायनिः । जैह्मासिनेयः ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयं ॥१८३॥ भ्रौणहत्यादयो निपात्यंते । भ्रूणहन् धीवन् इत्येतयोष्यणि तत्वं निपात्यं । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्यं । धैवत्यं । सारव्यां भवः सारवं जलं । सरयूशब्दस्यायूलमणिपरे । इक्ष्वाकोरपत्यं ऐक्ष्वाकः । अन्युलं । मित्रयोर- पत्यं–मैत्रेयः । ढणि योः खं । हिरण्यस्य विकारः हिरण्मयं जिनगृहं । मयटि यखं ।

÷शीर्षन् शिरसोऽप्ये यि ॥१८४॥ शिरसः शीर्षन् भवति अप्युक्ते यत्ये इति परे । शिरसि भवः-शीर्षण्यः स्वरः । अप्य इति किं ? हा- स्तिशीर्ष्या ।

÷वा केशे ॥ १८५ ॥ शिरसः केशार्थे शीर्षन् वा भवति यत्ये परतः । शीर्षण्याः शिरस्याः केशाः ।

÷शीर्षोऽचि ॥ १८६ ॥ शिरसश्शीर्षादेशो भवति अजादौ इति परतः । हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । स्थूलशिरस इदं स्थौलशीर्षं । अचीति किं ? शिरस्कल्पं । इतीति किं ? शिरसा नमामि शांतिनाथं ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां
लघुवृत्तौ चतुर्थाध्यायस्य
चतुर्थः पादः ।
समाप्तश्चायमध्यायः ॥४॥

# अथ पंचमोऽध्यायः ।

* वोरकः ॥ १ ॥ वोर्गुनिमित्तभूतस्य अक इत्ययमादेशो भवति । नंदकः । वर्द्धकः । कारकः । भांगकः ।

* फढखछघ आयनेयीनीयियः ॥ २ ॥ फादीनां निरर्था गुनिमित्तानामायनादयो भवंति । नडादिभ्यः फण्–नाडायनः । ढण् दितेश्च–दैतेयः । कुलात् खः—कुलीनः । स्वमुद्रछः—स्वसीयः । क्षत्राद् घः–क्षत्रियः । गुनिमित्तानामिति किं ? फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते ।

झोऽन्तः ॥३॥ झकारस्यांता देशो भवति । भवंति । एधंते । अदंति । दीव्यंति । गोर्निमित्त-

स्येति किं ? उज्झन् । उज्झिता ।

थादृत् ॥ ४ ॥ थात्परस्य झस्य अद् भवति । ददति । ददतु । जाग्रति । जाग्रतु ।

देऽनतः ॥ ५ ॥ दविषयेऽनतः परस्य झस्याद् भवति । चिन्वते । चिन्वतां । अचिन्वन् । विक्रीणते । द इति किं ? पुनंति । अनत इति किं ? च्यवंते । उत्प्लवंत ।

* शीङो रत् ॥ ६ ॥ शीङः परस्य झो रद् भवति । शेरते । शेरतां । अशेरत ।

वेत्तेः सिद्धमेवस्य ॥ ७ ॥ वेत्तेः परस्य झो रद् भवति दे सिद्धसेनस्याचार्यस्य मतेन । संविद्रते । संविद्रतां । समविद्रत । संविदते । संविदतां । समविदत ।

भिसोऽत ऐस् ॥ ८ ॥ अकारांतात् भिस ऐस् भवति । जिनैः । सुरैः । असुरैः । नरैः । अत इति किं ? यतिभिः । विद्याभिः । एस्करणादतिजरसैः ।

* नेदमदसोऽकः ॥ ९ ॥ आभ्यां ककाररहिताभ्यां भिस ऐस् न स्यात् । एभिः।अमीभिः। अक इति किं ? इमकैः । अमुकैः ।

स्येनात्स्थाङसे: ॥१०॥ अतो ङसादीनां स्यादयो भवंति । जिनस्य । जिनेन । जिनात् । अतिजरसेन । आत्करणात्–अतिजरसात् ।

ङेर्य्यः॥ ११ ॥ अतो ङेर्यो भवति । देवाय । जिनाय । दानाय ।

स्नेः स्मैः ॥ १२ ॥ स्नेः परस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । अन्यस्मै । तस्मै । यस्मै । कस्मै । अस्मै । अत इति किं ? भवते ।

* ङ्यसेः स्मिन्स्मात् ॥ १३ ॥स्नेरकारांतात्परयोर्ङिङसोः स्मिन्स्मातौ स्तः । सर्वस्मिन् । सर्वस्मात् । विश्वस्मिन्।विश्वस्मात्। अन्यस्मिन् । अन्यस्मात्।तस्मिन् । तस्मात्।यस्मिन् । यस्मात् । कस्मिन् । कस्मात् ।

जसः शी ॥ १४ ॥ स्नेरकारांतात्परस्य जसः शी इत्ययमादेशो भवति । सर्वे । विश्वे । अन्ये । ये । ते । के ।

आप औतः ॥ १५ ॥ आबंतात्परस्यौतः शी भवति । कन्ये पश्य । दामे तिष्ठतः। दामे पश्य ।

नपः ॥ १६॥ नपः परस्य औतः शी भवति । दधिनी स्तः । दधिनी पश्य । पापे स्तः । पापे त्यज । फले । धने । वने । कुले । माले ।

जस्शसोः शिः ॥ १७ ॥ नपः परयोः जस्शसोः शिर्भवति । ज्ञानानि संति । ज्ञानान्याश्रय । एवं–दधीनि । मधूनि । कुलानि । मालानि । जसा सहचरितस्य शसो ग्रहणादिह नेष्यते—पात्रशो ददाति । वनशः प्रविशति ।

*अष्ट औश् ॥१८॥अष्टन्शब्दात् कृताकारात् परयोर्जस्शसोः औश् भवति । अष्टौ यांति । अष्टौ पश्य।कृताकारपरिग्रहादिह न भवति । अष्ट तिष्ठंति ।अष्ट पश्य । ज्ञापकमिदमेवात्वाविकल्पस्य-प्रधानसंप्रत्ययादिह न भवति। प्रियाष्टानस्तिष्ठंति । प्रियाष्टनः पश्य। ओशा सिद्धेऽप्यौशग्रहणमष्टावाचक्षत अष्टयनीति किवंतेऽपि श्रवणार्थमष्टाविति ।

उब्विलः ॥ १९ ॥ इलसंज्ञकात् जस्शसोः उप् भवति । षट् । पंच । सप्त । अष्ट । नव । दश कति संति वीक्षस्व वा । प्रधाने कार्यसंप्रत्ययादिह न भवति । प्रियषषः प्रियपंचानः तिष्ठंति । प्रियकतीन् पश्य ।

नपः स्वमोः ॥ २० ॥ नपः स्वमोरुप् भवति । दध्यस्ति । दधि पश्य । एवं– त्रपु । जतु । मधु । उदश्वित् । यत्कुलं, तत्कुलमित्यत्र कृताकृतप्रसंगादानित्यं त्यदाद्यत्वं बाधते । यस्य च लक्षणांतरेणाप्रभावेन निमित्तं विहन्यते न तदनित्यमिति ।

अरसो वा ॥२१॥ जरसन्ताज्जरो वा स्वमोरुक् भवति । अतिजरः, अतिजरसं आस्ते पश्य वा ।

इकः ह्रस्वं ॥ २२ ॥ इगंतान्नपो वा स्वमोः वा ह्रस्वं भवति । हे वारे । हे वारि । हे त्रपो, हे त्रपु । प्रियतिसृ । प्रियत्रि ।

अतोऽम् ॥ २३ ॥ अकारांतान्नपः स्वमोरम् भवति । दर्शनं । धनं । वनं । कुलं । जलमस्ति पश्य वा ।

*पंचतोऽनेकतरस्यान्यादेर्दुक् ॥ २४ ॥ एकतरवर्जितस्य पंचकस्यान्यादेर्दुगागमो भवति स्वमोः परतः । अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् तिष्ठति, पश्यति वा । पंच इति किं ? समं, सिमं । अनेकतरस्येति किं ? एकतरं । नप इति किं ? अन्यः । इतरेण सिद्धेऽन्यतरग्रहणं किं ? अन्यतमं वनं ।

युष्मदस्मदो ङसोऽश् ॥ २५ ॥ आभ्यां ङसोऽश् भवति । तव । मम ।

ङेसुटोऽम् ॥२६॥ ताभ्यां ङेसुटोरम् भवति । तुभ्यं । मह्यं । त्वं । अहं । युवां । आवां । यूयं । वयं । त्वां । माम् । युवां । आवां ।

शसोऽन् ॥ २७॥ ताभ्यां शसोऽन् भवति । युष्मान् । अस्मान् ।

* भ्यसोऽपोऽभ्यम् ॥ २८ ॥ ताभ्यामपो भ्यसोऽभ्यम् भवति । युष्मभ्यं । अस्मभ्यं ।

* भ्योऽसोऽत् ॥२९॥ ताभ्यामर्थात् कायाः भ्यसो ङसेश्चात् भवति । युष्मत् । अस्मत् । त्वत् । मत् ।

साम आकम् ॥३०॥ ताभ्यामुत्तरस्य साम आकम् भवति । युष्माकं । अस्माकं ।

ष्यास्तिवाकसे क्त्वः ॥ ३१ ॥ क्त्वात्यस्य तिसे वाकसे च प्यो भवति । प्रकृत्य । प्रहृत्य । उच्चैःकृत्य । नीचैःकृत्य । तिवाकस इति किं ? अकृत्वा । परमकृत्वा ।

* लौल्येऽसुक्सुक् क्यचि ॥३२॥ गोः क्यचि परे असुक्सुकौ भवतः लौल्येऽर्थे । दध्यस्यति । दधिस्यति । मध्वस्यति । मधुस्यति । क्षीरस्यति । लवणस्यति । लौल्य इति किं ? दधीयति । मधूयति । क्षीरीयति । लवणीयति ।

याभेऽश्ववृषयोः ॥३३॥ अश्ववृषयोर्याभेऽर्थेऽसुकसुकौ स्तः क्यचि । अश्वस्यति वडवा । वृषस्यति गौः । याभ इति किं ? अश्वीयति । वृषीयति देवदत्तः ।

आम्सात् स्नः सुट् ॥३४॥ स्नेरवर्णांतात् परं आमः सुडागमो भवति । सर्वेषां । तेषां । येषां । केषां । सर्वासां । यासां । कासां ।

त्रेस्त्रयः ॥ ३५ ॥ त्रेस्त्रयो भवत्यामि परे । त्रयाणां । परमत्रयाणां । त्रेरप्रधानत्वादिह न भवति । अतित्रीणां । त्रिमूर्णामित्यत्र परेण बाध्यते ।

प्रेन्स्वापचतुरो नुट् ॥३६॥ एभ्यो नुड् भवत्यामि परतः । जिनानां । षण्णां । पंचानां । अष्टानामित्यत्रापि परत्वाद्दीर्घे "ष्णांतां चेत् इत्यत्र ग्रहणस्योपदेशार्थत्वादिक् इति नुट् । श्रीणां । कुमारीणां । वधूनां । मासानां । पूजानां । वारीणां । चतुर्णां ।

इदितो नुम् ॥ ३७ ॥ इदितो धोर्नुमागमो भवति । वंदति । वंदते । वंदिता । वंदितुं । वंदितव्यं । निंदितः । निंदितवान् । इदित इति किं ? पचति । पच । धोरिति किं ? अभैत्सीत् । भिदिकृत्स्वोरिति निर्देशात्स्योन्यत्र प्रागेव नुम । तेन संदेहः, इत्यः सिद्धः । कुंठा । हुंडा । कुन्डिरिति सनकारोच्चारणं ज्ञापकं–इदितो धोर्नुम न भवति—भेदनं ।

शे मुचां ॥ ३८ ॥ मुचादीनां शे परे नुम् भवति । मुंचति । लुंपति । विंदति । लिंपति ।

सिंचति । कृंतति । खिंदति । पिंशाति । अष्टौ मुचादयः । श इति किं ? मोक्ता । मोक्तुं ।

+ तृफदृफगुफोभशुभां ॥ ३९ ॥ तृफादीनां शे नुम् भवति । तृंफति । दृंफति । गुंफति । उंभति।शुंभति।श इति किं ? तर्फिता। तर्फितुं ।

नशमज्जोर्झलि ॥ ४० ॥ अनयोर्झलि नुम् भवति । नंष्टा । नंष्टुं । नंष्टव्यं । नशू अदर्शने । टुमस्जौ शुद्धौ । मंक्ता । मंक्तुं । मंक्तव्यं । मंक्त्वा । मंक्ष्यति । मिमंक्षति । मस्जेर्नुमि कृते द्वयोः स्फसंज्ञायां स्फादिखं । झलीति किं ? नशनं । मज्जनं ।

* जभोऽचि ॥ ४१ ॥ जभेर्नुम् भवत्यचि परतः । जंभति । जंभकः । साधुजंभी । जंभंजंभं । जंभो वर्तते । नित्यत्वादैपः प्रागेव नुम् । अचीति किं ? जभ्यते । जाभ्यं । जंजभिषः ।

* रधः ॥ ४२ ॥ रधेरचि नुम् भवति । रंधयति । रंधकः । साधुरंधी । रंधं रंधं । रंधो वर्तते । अचीति किं ? रद्धा । पृथग्वचनमुत्तरार्थं ।

* नेट्यालिटि ॥ ४३ ॥ रधेर्न नुम् भवति इडादावलिटि परतः । राधिष्यति । राधिता । राधितुं । राधितव्यं । इटीति किं ? साधुरंधी । अलिटीति किं ? ररांधिव । ररांधिम । रेधिवानित्यत्र—कसः कित्त्वसामर्थ्यान्नुमः खं । लिटीटि इति कर्तव्ये पूर्वेणैव सिद्धत्वान्नियमो भवति । तत्र च लिटीट्येवेत्यवधारणमाहोस्विल्लिट्येवेटीत्युभयथा संभवेऽन्यतरपरिग्रहो दुर्लभः ।

* रभः ॥ ४४ ॥ रभेरजादावलिटि परे नुम् भवति । आरंभयति । आरंभकः । साधुरंभी । आरंभमारंभं । आरंभो वर्तते । अलिटीति किं ? आरेभे । अचीति किं ? आरब्धा । आरभते इति तुदादित्वाच्छे हलुङ्नखं ।

लभेः ॥४५॥ लभेरलिट्यजादौ नुम् भवति । लंभयति । लंभकः । साधुलंभी । अलिटीति किं ? लेभे । अचीत्येव—लब्धा । लभते—इति तुदादित्वाच्छे नखं । न च लभेः शतास्ति । यस्य शतुर्नुम्विकल्पः स्यात् । लंभतीति प्रयोगभावेऽपि "वा नपः" इति वाग्रहणात् व्यवस्था विज्ञास्यते पृथगारंभ उत्तरार्थः ।

य्याङः ॥ ४६ ॥ आङः परस्य लभेर्नुम् भवति यकारादौ परतः । आलंभ्या गौर्ब्राह्मणेन । यीति किं ? आलब्धा । आङ इति किं ? लभ्यं । आलभ्यागत इत्यत्र नुमोऽन्यत्र सावकाशस्य खं ।

उपात्स्तुतौ ॥ ४७ ॥ उपाल्लभेर्नुम् भवति स्तुत्यां यत्ये परतः । उपलंभ्यं धनं भवता । स्तुताविति किं ? उपलभ्यमस्माद् वृषलात्किंचित् ।

* वाऽमञ्ख्योः ॥ ४८ ॥ लभेर्वा नुम्भवति अमञ्ख्योः परतः । लंभंलंभं । लाभं लाभं । अलंभि । अलाभि ।

* घञ्खे च गेः ॥ ४९ ॥ गेः परस्य लभेर्नुम् भवति घञि खेऽमि औ च परे । उपलंभः । सुप्रलंभः । प्रलंभं प्रलंभं । प्रालंभिः । गेरिति किं ? लाभः । ईषल्लभं । अम्ख्योर्नित्यार्थं घञ्खे तु गेरेवेति नियमार्थं वचनं जिज्ञासोपलंभेनेति निर्देशान्न विपरीतो नियमः । गेः घञ्ख्व एवेति ।

* सुदुर्भ्यः ॥ ५० ॥ सुदुर्भ्यां व्यस्तसमस्ताभ्यां गिभ्यां गेः पराभ्यां लभेर्घञि खे च नुम् भवति । अतिसुलंभः । अतिदुर्लंभः । अतिसुदुर्लंभः । गेरिति किं ? सुलाभः । सुलभः । दुर्लाभः । दुर्लभः । सुलभिः । दुर्लभिः । सुदुर्लभं । अतिसुलभमिति पूजायामतिक्रमे चार्थेऽतिः । सुदुर्भ्यो गेरेवेति नियमार्थं वचनं ।

उगिदचां घेऽम्वादेः ॥ ५१ ॥ उगितामम्वादीनां अंचतेश्च घे नुम् भवति । गोमान् । गोमंतौ । गोमंतः । गोमंतं । गोमंतौ । धनवान् ।

धनवंतौ । धनवंतः । पचन् । पचतौ । पचंतः । प्राङ् । प्रांचौ । प्रांचः । अम्वादीनीति किं ? उखास्रत् । पर्णध्वत् । म्वादिप्रतिषेधाद्भवत्येवेह । गोमत्यते—गोमान् । गोमंतौ ।

युजिरोऽसे ॥ ५२ ॥ युजिरो नुम् भवति असे घे परतः । युङ् । युञ्जौ । युञ्जः । युञ्जं । युञ्जौ । अस इति किं ? अश्वयुक् । अश्वयुजौ । अश्वयुजः ।

नपोऽचः ॥ ५३ ॥ नपोऽजंतस्य घे नुम् भवति । वनानि । दधीनि । मधूनि । चारित्राणि । अच इति किं ? विमलदिवि । बहुगिरि । अहानि ।

*झलां ॥ ५४ ॥ अचः परा या झल् जातिस्तदंतस्य नपो घे नुम् भवति । सर्पींषि । धनूंषि । उदश्विति । काष्ठतक्षि ।

÷ प्राग्वाऽन्त्यः ॥ ५५ ॥ झलंतस्य नपोऽन्तोऽन्त्य झल्जातेः प्राक् नुम् भवति वा । महोर्ञ्जि । महोर्जि ।

सुपीकोऽचि ॥ ५६ ॥ इगंतस्य नपः सुप्यजादौ परे नुम् भवति । वारिणी । त्रपुणी । वारिणा । त्रपुणा । सुपीति किं ? तुंबुरुणी विकारः तौंबुरवं चूर्णं । इक इति किं ? वने । अचीति किं ? वारिभ्यः ।

भादौ वोक्तपुंस्कं पुंवत् ॥ ५७ ॥ इगंतं नवुक्तपुंस्कं भादावजादौ पुंवत् वा स्यात् । शुचिः । साधुः । शुचि । साधु वृत्तं । शुचये । शुचिने वस्त्राय । ग्रामण्या । ग्रामणिना कुलेन । चारवे । चारुणे वस्त्राय । कर्त्रा । कर्तृणा कुलेन । अतिरिया अतिरिणा । चित्रगवे । चित्रगुणे । भादाविति किं ? चारुणी । उक्तपुंस्कमिति किं ? जनुने ।

सक्थ्यस्थिदध्यक्ष्णोऽनङ् ॥ ५८ ॥ सक्थ्यादीनामनङ् भवति भादावजादौ परतः । सक्थ्ना । सक्थ्ने । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । अक्ष्णा । अक्ष्णे । अक्ष्णां । नपीति किं ? दधि नाम कश्चित् धानशीलो वा दधिस्तेन दधिना

विदेः शतुर्वसुः ॥ ५९ ॥ विदः परस्य शतुर्वसुर्भवति । विद्वान् । विद्वांसौ । विद्वांसः ।

न वात् ॥ ६० ॥ वात्परस्य शतुर्नुम् न भवति । ददत् । ददतौ । ददतः । जाग्रत् । जाग्रतौ । जाग्रतः ।

वा नपः ॥ ६१ ॥ नपुंस्यात्परस्य शतुर्वा नुम् भवति । ददंति, ददति । जाग्रंति, जाग्रति कुलानि ।

शीम्योरवात् ॥ ६२ ॥ शीम्योरवर्णांतात् शतुर्वा नुम् भवति । तुदती, तुदंती । पाती, पांती कुले । तुदंती, तुदती । पाती, पांती स्त्री । आदिति किं ? अदती । जानती स्त्री ।

शपश्यात् ॥ ६३ ॥ आभ्यां शतुर्नुम् भवति शी म्व इत्येतयोः परतः । नित्यार्थं वचनं । पचंती कुले । पचंती कन्या । दीव्यंती कुले । दीव्यंती कन्या ।

सावनडुहः ॥ ६४ ॥ अनडुहः सौ परे नुम् भवति । अनड्वान् ।

*द्यौः ॥ ६५ ॥ दिवः औत्वं निपात्यते सौ परे । द्यौराकाशं पुण्येन ।

पथिमथ्यृभुक्षामात् ॥ ६६ ॥ एषामाद्भवति सौ परे । पंथाः । मंथाः । ऋभुक्षाः ।

एर्द्धे ॥ ६७ ॥ तेषामिकारस्याद्भवति घे परतः । पंथानौ । पंथानः । पन्थानं । पंथानौ । मंथानौ । मंथानः । ऋभुक्षाणौ । ऋभुक्षाणः ।

थो न्थः ॥ ६८ ॥ तेषां थकारस्य न्थादेशो भवति घे परे । पंथाः । मंथाः ।

भस्य टेः खं ॥ ६९ ॥ तेषां भसंज्ञकानां टेः खं भवति । पथः पश्य । पथा । पथे । मथः । मथा । ऋभुक्षः । ऋभुक्षा ।

पुंसोऽसुङ् ॥ ७० ॥ पुंसः असुङ् भवति घे परतः । पुमान् । पुमांसौ । पुमांसः । पुमांसं । पुमांसौ ।

+ ओतो णित् ॥ ७१ ॥ ओतः परं घं णिद्भवति ।

गौः । गावौ । गावः । द्यौः । द्यावौ । द्यावः ।

वाऽस्मण्णशः॥७२॥अम्मदो णशः वा णिद्भवति। चकार । चकर । विललाप।विलप ।

* सखितोऽकौ ॥ ७३ ॥सखितः परं धं णिद्भवति अकौ परतः । सखायौ । सखायः । सखायं । सखायौ । तकार इति किं!इमे सख्यौ। अकाविति किं ! हे सखे ।

* क्न्सौ ॥ ७४ ॥ तस्य क्न् भवति अकौ सौ परतः । सखा ।

ऋदुशनस्पुरुदंशोऽनेहसां ॥ ७५ ॥ ऋकारांतानां उशनसादीनां च क्न् भवति धे अकौ सौ परतः । कर्त्ता । दाता । पिता । माता । उशना । पुरुदंशा । अनेहा । अकाविति किं ! हे दातः । हे मातः । हे पुरुदंशः । हेअनेहः ।

÷ तृज्वत् क्रोष्टुः ॥ ७६ ॥ क्रोष्टुः तृजंतवद्भवति अकौ धे परतः।क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारं । क्रोष्टारौ । अकाविति किं ! हे क्रोष्टो । ध इति किं ! क्रोष्टून् ।

+स्त्रियां ॥ ७७ ॥ क्रोष्टुः स्त्रियां तृज्वत् भवति । क्रोष्ट्री ।

✓÷वाऽच्यापि ॥ ७८ ॥ क्रोष्टुः तृज्वद्वा भवति अजादावापि भादौ परतः । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे। क्रोष्टवे क्रोष्ट्रः। क्रोष्टुः। क्रोष्ट्रोः। क्रोष्ट्वोः। क्रोष्टूनां।क्रोष्टरि,क्रोष्टौ। अचीति किं ! क्रोष्टुभ्यां। क्रोष्टुभिः । आपीति किं ! क्रोष्टून् ।

चतुरनडुहोर्वाः ॥ ७९ ॥ अनयोरुकारस्य वा भवति धे परतः । चत्वारः। चत्वारि। अतिचत्वाः । अतिचत्वारौ । अतिचत्वारः । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहं । अनड्वाहौ ।

वःकौ ॥ ८० ॥ तयोरुकारस्य वो भवति कौ परतः । हे अतिचत्वः । हेअनड्वन् ।

+ पुत्रेऽर्हे मातुः कपोऽड्॥८१॥ बसे मातृशब्दात् परस्य कपो वा अड् भवति कौ परतःपुत्रेऽर्हे पुत्रप्रशंसायां। हेगार्गीमातः। पुत्र इति किं ! हेगार्गीमातृके पुत्रि । अर्हे इति किं ! गार्गीमातृक ।

+वोशनोशनन् ॥८२॥ एतौ निपात्यौ कौ वा। हे उशन। हेउशनन्। हे उशनः। उशनसः सखं नत्वं च निपात्यते ।

ऋतामिद्धोः॥८३॥ ऋकारांतस्य धोरिकारादेशो भवति । किरति। गिरति । विस्तीर्णे । गीर्य्यते । धोरिति किं ! मातॄणां ।

उकः धोः ॥ ८४ ॥ उकः ऋत इर्भवति । कीर्त्तयति । कीर्त्तयतः । कीर्त्तयंति ।

पुवादुत् ॥८५॥पवर्गाद्वकाराच्च परस्य धोःऋतः उद्भवति। पूर्त्तः । प्रपुपूर्षति । बुभूर्षति । मुमूर्षति वुवूर्षति । मुनीन् ।

साऽनेम्म ॥८६॥ मपरे सौ परे गोरैप् भवति। अनैर्षीत् । अहौषीत् । अकार्षीत् । अहार्षीत् । म इति किं ! अकविष्ट ।

व्रज्वल्लोऽतः ॥ ८७ ॥ व्रजिवद्योर्लकाररेफांतस्य च गोरत ऐप् भवति मपरे सौ परतः । प्राव्राजीत् । अवादीत् । अचालीत्। अचारीत् । व्रज्वल्ल इति किं ! मानिरशीत् । मानिरटीत् । अत इति किं ! न्यमीलीत् । न्यखोटीत् ।

हलामचः ॥ ८८॥ हलंतानामच ऐप् भवति मपरे सौ परतः । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् । हलामिति किं ! गौरिवाचारीत्-अगवीत् । अच इति किं ? अघाक्षीत् । अनिकोऽपि यथा स्यात् ।

नेटि ॥ ८९ ॥ इडादौ मसौ परे हलंतस्य गोरच ऐप् भवति । अदेवीत् ।अकोषीत्।अकर्षीत्।

*ह्म्यक्षणश्वसृक्ष्येदितां ॥ ९० ॥ हकार मकारवकारयकारांतानां क्षणादीनां च इडादौ

मसावेव स्यात् । अग्रहीत् । अरहीत् । अवमीत् । अव्यथीत् । अक्षणीत् । अश्वसीत् । अश्वयीत् । अरगीत् । अलगीत् ।

वोर्णुवः ॥ ९१ ॥ ऊर्णुञो मसौ वेड्भवति । प्रौर्णावीत् । प्रौर्णुवीत् ।

अतोऽनादेर्घेः ॥ ९२ ॥ अनादेरतो घेर्वेड्भवति हलादौ मसौ परतः । अकणीत् । अकाणीत् । अरणीत् । अराणीत् । अचणीत् । अचाणीत् । अत इति किं! असेवीत् । अनादेरिति किं ! मातिरूढीत् । घेरिति किं ! अरक्षीत् ।

*वलादेर्गस्येट् ॥९३॥ वलादेर्गस्य इडागमो भवति । पठिता । पठितुं । पठितव्यं । भविता । भवितुं । भवितव्यं । एधितव्यं । वलादेरिति किं! कार्यं । लवनीयम् । अगस्येति किं ! आस्ते । शेते ।

+ ग्रहादेः क्तेः ॥९४॥ ग्रहादिभ्यः परस्य वलादेः क्तेरिड् भवति । निगृहीतिः । उदितिः । भणितिः । दीपितिः । मथितिः । लिखितिः । पठितिः ।निकुचितिः ।ग्रहादेरेव क्तेरिति नियमोऽयं । तेन—विभूतिः । दीप्तिरित्यादि ।

*ग्रहोऽलिट्येकाचो दीः ॥९५॥ ग्रहेरेकाचः परस्य इटो दीर्भवत्यलिटि परतः । ग्रहीष्यति । ग्रहीता । ग्रहीतुं । ग्रहीतव्यं । अलिटीति किं ! जगृहिव । जगृहिम । एकाच इति किं ! जरीगृहिता जरीगृहितुं ।

* वृतो वाऽलिमसौ ॥ ९६ ॥ वृङ्वृञ्भ्यां ऋकारान्तेभ्यश्च वा इटो दीर्भवति अलिङ्किटि मसिषु परतः । वरिता । वरीता । प्रावरिता । प्रावरीता । तरिता । तरीता । जरिता । जरीता । निगरिता । निगरीता । अलिमसाविति किं! वरिषीष्ट । प्रावरिषीष्ट । निगरिषीष्ट । प्रावरिथ । तेरिथ, तेरिम । प्रावारिष्टां ।अतारिष्टां । अस्तारिष्टां । न्यगारिष्टां । न्यगारिषुः ।

सनीट् ॥९७॥ सनि परे वृत इड् वा भवति । वुवूर्षते । विवरिषते । विवरीषते । प्राबुवूर्षति । प्राविवरिषति । प्राविवरीषति । तितीर्षति । तितरीषति । तितरिषति । आतिस्तीर्षति । आतिस्तरिषति । आतिस्तरीषति ।

लिङ्स्योर्दे ॥९८॥ वृतः परयोर्लिङ्स्योरिड् वा भवति दे । लिङ्—वृषीष्ट । वरिषीष्ट । आस्तीर्षीष्ट । आस्तरिषीष्ट । अवृत । अवरिष्ट । अवरीष्ट । प्रावृत । प्रावरिष्ट । प्रावरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट । द इति किं! प्रावारिषुः । अतारीत् ।

* स्फायतेऽस्कुः ॥ ९९ ॥ स्फायतेरस्कुपरादृकारान्ताल्लिङ्स्योर्दे वेड् भवति । स्मृषीष्ट । स्मरिषीष्ट । ध्वृषीष्ट । ध्वरिषीष्ट । अस्मृषातां । अस्मरिषातां । अध्वृषातां । अध्वरिषातां । अस्कुरिति किं! संस्कृषीष्ट । समस्कृत ।

* ऊदिद्धृञः ॥१००॥ ऊकारेद्भ्यो धूञश्च परस्य वलादेर्वेड् भवति । रद्धा । रधिता । नंष्टा । नशिता । नंक्ष्यति । नशिष्यति । उपगोढा । उपगूहिता । विधोता । विधविता । धोष्यति । धविष्यति ।

निष्कुषः ॥१०१॥ निष्पूर्वात् कुष इड् वा स्यात् । निष्कोषिता । निष्कोष्टा ।

इट् ते ॥१०२॥ निष्कुषः तसंज्ञे परे इड् भवति। निष्कुषितः।निष्कुषितवान् ।

तीषसहलुभरुषरिषः ॥१०३॥ एभ्यो वेड् भवति तकारादौ परतः । एष्टा । एषिता । एष्टुं । एषितुं।एष्टव्यं।एषितव्यं । सोढा।सहिता । लोब्धा । लोभिता । रोष्टा । रोषिता । रेष्टा । रेषिता । तीति किं ! सहिष्यते ।

सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपि

संतन्यते: ॥१०४॥ इवंतादीनां ऋधादीनां च सनि परे वेड् भवति। दुयूषति। दिदेविषति। सुस्यूषति। सिसेविषति। ईर्त्सति। अर्दिधिषति। बिभ्रक्षति। बिभर्क्षति। बिभ्रज्जिषति। बिभर्जिषति। धिप्सति। धीप्सति। दिदंभिषति। मुम्वूर्षति। सिस्वरिषति। शिश्रीषति। शिश्रयिषति। युयूषति। यियविषति। प्रोर्णुनूषति। प्रोर्णुनविषति। प्रोर्णुनुविषति। बुभूर्षति। बिभरिषति। ज्ञीप्सति। जिज्ञपयिषति। सिपासति। सिषनिषति। तितंसति। तितनिषति। पित्सति। पिपातिषति।

पूङ्क्लिशस्तक्त्वो: ॥ १०५ ॥ पूङ्क्लिशूभ्यां परयोस्तक्त्वो वेड् भवति। पूतः। पवितः। पूतवान्। पवितवान्। पूत्वा। पवित्वा। क्लिष्टः। क्लिशितः। क्लिष्टवान्। क्लिशितवान्। क्लिष्ट्वा। क्लिशित्वा।

क्षुधवस इट् ॥ १०६ ॥ आभ्यां तक्त्वोरिड् भवति। क्षुधितः। क्षुधितवान्। क्षुधित्वा। क्षोधित्वा। उषितः। उषितवान्। उषित्वा।

* अंचोऽर्चे ॥ १०७ ॥ अंचेरर्चायां तक्त्वोरिड् भवति। अंचितः। अंचितवान्। अंचित्वा गुरून् गतः। अर्च इति किं? उदक्तमुदकं कूपात्। अक्त्वा।

स्वार्थे लुभात् ॥ १०८ ॥ स्वार्थे विमोहने वर्तमानाल्लुभात् तक्त्वोरिड् भवति। विलुभिताः सीमंताः। विलुभिताः केशाः। लोभित्वा। लुभित्वा। स्वार्थ इति किं? लुब्धो न लभते पुण्यं।

जृव्रश्चः क्त्वः ॥ १०९ ॥ आभ्यां क्त्वास्यस्य इड् भवति। जरित्वा, जरीत्वा। व्रश्चित्वा।

वोदितः ॥ ११० ॥ उदितः परस्य क्त्वास्यस्य वेड् भवति। शांत्वा। शमित्वा। दांत्वा। दमित्वा।

* क्स्यैकाज्घसः ॥ १११ ॥ आकारांतात् एकाचो घसश्च क्सौ इड् भवति। पपिवान्। तस्थिवान्। आटिवान्। पेठिवान्। जक्षिवान्। एकाजिति किं? बभूवान्। बिभिद्वान्।

* गम्हन्विदृदृशिशो वा ॥ ११२ ॥ गमादेः क्सौ परतो वेड् भवति। जग्मिवान्। जगन्वान्। जघ्निवान्। जघन्वान्। विविदिवान्। विविद्वान्। ददृशिवान्, ददृश्वान्। विविशिवान्। विविश्वान्।

स्यसौ कृच्चृच्छृतृन्नृतः ॥ ११३ ॥ एभ्यः सिवर्जितसकारादावगे परतः वेड् भवति। कर्त्स्यति। कर्तिष्यति। अकर्त्स्यत्। अकर्तिष्यत्। चिकृत्सति। चिकर्तिषति। चर्त्स्यति। चर्तिष्यति। अचर्त्स्यत्। अचर्तिष्यत्। चिचृत्सति। चिचर्तिषति। छर्त्स्यति। छर्दिष्यति। अछर्त्स्यत्। अच्छर्दिष्यत्। चिच्छृत्सति। चिछर्दिषति। तर्त्स्यति। तर्दिष्यति। अतर्त्स्यत्। अतर्दिष्यत्। तितृत्सति. तितर्दिषति। नर्त्स्यति। नर्तिष्यति। अनर्त्स्यत्। अनर्तिष्यत्। निनृत्सति। निनर्तिषति। सीति किं? कर्तिता। नर्तिता। असाविति किं? अछर्दीत्। अनर्तीत्।

गमेः ॥ ११४ ॥ गमेः सकारादावगम्य वेड् भवति। संजिगमिषिता। संजिगंसिता। अधिजिगमिषिता। अधिजिगांसिता व्याकरणस्य। सीति किं? गंता।

* मस्य ॥ ११५ ॥ गमेर्मनिमित्तस्य सकारादेरिड् भवति। गमिष्यति। अगमिष्यत्। जिगमिषति। अधिजिगमिषति। म इति किं? संजिगंसते वत्सो मात्रा।

न वृद्भ्यः ॥ ११६ ॥ वृतादेः परस्य मस्य नेड् भवति। वर्त्स्यति। विवृत्सति। सर्त्स्यति। सिसृत्सति। स्यंत्स्यति। सिस्यंत्सति। कल्प्स्यति। चिक्लृप्सति। कल्प्तासि। म इति किं? वर्तिष्यते। कल्पिष्यते। कल्प्स्यते।

*वास्त्वदश्वसृजदृशोऽनित्वानिट्तासस्थेऽस्क-

म्रार्चे: ॥ ११७ ॥ नित्यानिट्तास्भ्य: अकारवद्भ्योऽजंतेभ्य: सृजदृशिभ्यां च थे वेट् भवति स्कादीन्विहाय । पक्ता । पपक्थ । पेचिथ । शक्ता । शशक्थ । शेकिथ।याता । ययाथ । ययिथ । नेता । निनेथ । निनयिथ । स्रष्टा । ससृष्ट । ससर्जिथ । द्रष्टा । ददृष्ट । ददर्शिथ । अत्वदृश सृजदृश इति किं ? भेत्ता । बिभेदिथ । नित्यग्रहणं किं ? अक्ता । अंजिता । आनंजिथ । अनिट्ग्रहणं किं ? लविता । लुलविथ । तास्ग्रहणं किं ? जघसिथ । थ इति किं?पचिव । पेचिम । अस्कद्व्यार्तंगिति किं?संस्कर्त्ता । संस्करिथ । अत्ता । आदिथ । व्याता । विव्यायिथ । अर्त्ता । आरिथ ।

ऋत: ॥ ११८ ॥ ऋकारांतान्नित्यानिट्तासस्थे नेट् भवति । कर्त्ता । चकर्थ । हर्त्ता । जहर्थ । स्मर्त्ता । सस्मर्थ ।

*गमस्तोर्दे ॥ ११९ ॥ गमस्नुभ्यां वलादेरगम्य दे सनि नेट् भवति।संगंस्यते । संजिगंसते । अधिजिगांसते।प्रस्नोष्यते।प्रस्नोष्यमाण:।प्रास्नोष्ट ।

क्रमे: ॥ १२० ॥ क्रमे: परस्य नेट् भवति दे । प्रक्रंस्यते । प्राक्रंस्त । प्रचिक्रंसते। द इति किं ? क्रमिता ।

*तु: ॥ १२१॥ दे विषये क्रमे: परस्य तुर्नेट् भवति । प्रक्रंता । उपक्रंता ।

वशि ॥ १२२ ॥ षांवशादौ परे नेट् भवति । ईश्वर:।दीप्र: । भस्म । दंड: । मुद्र: । गर्ग: । वशीति किं ? ईशिता ।

*लौदिदचोऽपच्छ्विश्रिश्रीडीङ्षट्कोवृदत: ॥ १२३ ॥ लकारौकारेद्भ्योऽजंतभ्यश्च एकाज्भ्यो विहितस्य वलादेर्नेट् भवति पतादीन्विहाय। गंता । शक्ता । नंता । वेत्ता । चेता । याता । दाता । नेता। स्तोत्ता।कर्ता । पतादिवर्जनं किं ? पतिता । श्वयिता । श्रयिता । श्रयिता।डयिता । रविता । क्षविता । क्ष्णविता । स्नविता । नविता । यविता । भविता । लविता । वरिता । वरीता । प्रावरिता । प्रावरीता । तरिता । तरीता।परिता । परीता । आचषिपीष्ट।एकाच इति किं ? प्रोर्णविता । बिभेदिता । चिच्छेदिता । जागरिता ।

*क्तिच्ग्रोणादे: ॥१२४॥ एषां नेट् भवति । शंति: । तंति । पोत्रं । शस्त्रं । जंतु: । वत्स: । अक्षरं । हस्त: । वर्तिका । पत्तनं । कुक्षि: । इक्षु: । शर्करा । शंख: ।

*क्तिव्यूर्णुश्र्युक: ॥ १२५ ॥ एभ्य:क्तिति नेट् भवति । प्रोर्णुत: । प्रोर्णुतवान् । श्रित: । श्रितवान् । श्रित्वा । श्रिति: । युत: । युतवान् । युत्वा । युति: । लून: । लूनवान् । लूत्वा । लूति: । प्रावृत: । प्रावृतवान् । क्तितीति किं ? श्रयिता । ऊर्णादेरिति किं ? श्रयित्वा । एकाच इति किं ? जागरित: । जागरितवान् ।

सनि ग्रहगुहश्च ॥ १२६ ॥ ग्रहगुहाभ्यां उगंतेभ्यश्चैकाच्च सनि नेट् भवति । जिघृक्षति । जुघुक्षति । रुरुषति । लुलूषति ।

भृसृवृस्तुद्रुस्रुश्रोर्लिटि॥१२७॥एभ्यो लिटि नेट् भवति । बभृव।बभृम । ससृव । ससृम । ववृवहे । ववृमहे । ववृव । ववृम । तुष्टुव । तुष्टुम।तुष्टोथ।दुद्रुव।दुद्रुम।दुद्रोथ।सुस्रुव । सुस्रुम । सुस्रोथ । शुश्रुव । शुश्रुम । शुश्रोथ । सिद्धे सत्यारंभो नियमार्थ: । आद्य एव लिट्यनिटो नान्य।ददिव । ददिम । बिभिदिव । बिभिदिम ।

*कृञोऽस्कु:॥ १२८ ॥ कृञ: असुटो लिटि नेट् भवति । चकृव । चकृम । अस्कुरिति किं ? संचस्करिव । संचस्करिम ।

*डीयश्वीदिद्वेटोऽपतस्ते ॥ १२९ ॥ डीयश्विभ्यां ईदिद्भ्यो विभाषेद्भ्यश्च पतिं त्यक्त्वा तसंज्ञे परे नेट् भवति । डीन: । डीनवान् । घून: ।

शूनवान् । पीनः । पीनवान् । लग्नः । लग्नवान् । इष्टः । इष्टवान् । घूनः । घूनवान् । अपत इति किं ? पतितः । पतितवान् ।

**सन्निविभ्योऽर्देः** ॥१३०॥ संनिविपूर्वादर्दे-स्ते नेड् भवति । समर्णः।न्यर्णः । व्यर्णः । समा-देरिति किं ? प्रार्दितः ।

***अविदूरेऽभेः** ॥ १३१ ॥ अभिपूर्वादर्देरवि-दूरेऽर्थे ते नेड् भवति।अभ्यर्णा सरित्।अभ्यर्णं सेने । अविदूर इति किं? अभ्यर्दितश्चौरः शीतेन ।

***शसधृषः प्रगल्भे** ॥ १३२ ॥ आभ्यां प्रगल्भेऽर्थे ते नेड् भवति।विशस्तो वार्दो।धृष्टो वार्दो। प्रगल्भ इति किं ? विशसितः । धर्षितः ।

***कषः कृच्छ्रगहने** ॥ १३३ ॥ कृच्छ्रगहनयो-स्ते कषेर्नेड् भवति।कष्टं गमितं । कष्टं वनं । कषितमन्यत्र ।

***दृढं बलिस्थूले** ॥ १३४ ॥ दृढमिति नि-पात्यते बलिनि स्थूले च ते परतः।दृढो बलवान् स्थूलश्च । अनिट्त्वंनहस्वं तढत्वं च निपात्यते। दृहितं । दंहितमन्यत्र ।

*** क्षुब्धस्वांतध्वांतलग्नम्लिष्टघुष्टविरिब्ध फांटबाढपरिवृढं मंथमनस्तमःसक्ताविस्पष्टा-विशब्दस्वरानायासभृशप्रभौ** ॥ १३५ ॥ क्षुब्धादयो निपात्यंते मंथाद्यर्थेषु । क्षुब्धो मंथाः। स्वान्तं तमः । लग्नः सक्तः । म्लिष्टमविस्पष्टं म्लेच्छेरनिड्त्वमेकारस्येत्वंच । घुषिरविशब्दने । घुष्टा रज्जुः । घुष्टौ पादौ । विरब्धिः स्वरः । विपूर्वस्य रेभृश्चोऽनिड्त्वमित्वं च । फांटमनायासं । बाढं भृशं । परिवृढः प्रभुः । अन्यत्र क्षुभितं । स्वनितं । ध्वनितं । लगितं । म्लेछितं । अवघु-षितं वाक्यं । विरेभितं । फणितं । वाहितं । परिबृंहितमिति ।

**आदितः**॥ १३६ ॥ आकारेतो धोस्ते नेड् भवति । मिन्नः।मिन्नवान् । क्ष्विन्नः ! क्ष्विन्नवान्। क्ष्विण्णः । क्ष्विण्णवान् ।

**वा भावारंभे** ॥ १३७ ॥ भावे आरंभे च आदितः ते वा नेड् भवति । मिन्नमस्य मेदितमस्य। प्रमिन्नः । प्रमेदितः ।

***शकेः कर्मणि** ॥१३८॥ शकेः कर्मार्थे ते वा नेड् भवति । शक्तो घटः कर्तुं, शकितो घटः कर्तुं । कर्मणीति किं ! शक्तो देवदत्तः ।

***हृषेर्लोमविस्मयप्रतिघाते** ॥१३९॥ हृषेर्लो-माद्यर्थेषु ते वा नेड् भवति । हृष्टानि । हृषितानि लोमानि । हृष्टः देवदत्तः । हृषितः देवदत्तः । हृष्टाः, हृषिताः दंताः ।

***जपाद्यमन्तापचिताश्च** ॥१४०॥ जपादयो निपात्यंते । जप्तः। जपितः । श्रान्तः । स्वासितः। अपचितः । अपचायितो गुरुः । चायतेश्चिः । चशब्दादपचितिरिति भवति ।

**दांतशांतपूर्णदस्तस्पष्टछन्नज्ञप्ताः**॥१४१॥ दांतादयःशब्दाःकृतणिखा अनिटो वा निपात्यंते। दांतः, दमितः । शांतः, शमितः । पूर्णः, पूरितः । दस्तः, दासितः । स्पष्टः । स्पाशितः। छन्नः, छादितः । ज्ञप्तः । ज्ञापितः ।

***वृत्तोऽधीतो**॥१४२॥ वृत्त इति वृत्तेर्ण्यंतस्य निपात्यते अधीतेऽर्थे । वृत्तं जैनेन्द्रं । वृत्तस्तर्कः । अनिट्त्वं णेरुप्च । वर्तितमन्यत्र ॥

**वा रुष्यमत्वरसंघुषास्वनवमः** ॥१४३॥ रुष् अम् त्वर् संघुष् आस्वन् वम् इत्येतभ्यस्ते वेड् भवति । रुष्टः, रुषितः । अभ्यंतं। अभ्यमितः। तूर्णः, त्वरितः । संघुष्टः । संघुषितः पादः। सं-घुष्टं । संघुषितं वाक्यं । आस्वांतः, आस्वानितो देवदत्तः । आस्वांतं । आस्वनितं मनः । वांतः, वमितः ।

***ऋद्ध्न इट् स्ये** ॥ १४४ ॥ ऋवंतेभ्यो

हनश्चेट् भवति स्ये परे । करिष्यति । अकरिष्यत् करिष्यमाणः।हनिष्यति । स्वरिष्यति । हनिष्यति ।

*सावञ्जेः ॥१४५॥ अंजेःसौ परे इट् भवति आंजीत । आंजिष्टां । आंजिषुः ।

स्तुसुधूञ्मपे ॥१४६॥ एभ्यो ममाविट् भवति। अस्तावीत् कुंथुनाथं । असावीत् । अधावीत् । म इति किं ? अस्तोष्ट ।

यमरमनमातां सक् च ॥१४७॥ एषां ममाविट् सक्चागमः । अयंसीत । अयंसिष्टां । अयंसिषुः । व्यरंसीत । व्यरंसिष्टां । व्यरंसिषुः । अनंसीत । अनंसिष्टां । अयासीत् । आयासिष्टां । अदासीत् । अदासीत् ।

स्मिङ्पूङ्रंज्वशःसनि ॥१४८॥ एतेभ्यः सनीट् भवति । सिस्मयिषते । पिपविषते । अरिरंजिषति । अशिशिषते ।

*किरश्च ॥ १४९ ॥ किरादिभ्यः सनीट् भवति । उच्चिकरिषति । निजिगरिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । चशब्दात् जुगृहिषन्मत्तगजोऽभ्यधावत् ।

रुद्भ्यो गे ॥१५०॥ रुदादिभ्यः गे इट् भवति । रोदिति । रुदितः । स्वपिति । स्वपितः । प्राणिति । प्राणितः। श्वसिति । श्वसितः । जक्षिति । जक्षितः। ग इति किं?स्वप्ता । स्वप्तुं । स्वप्तव्यं । बलादाविति किं ? रुदंति । स्वपंति ।

*ईडः स्ध्वे॥१५१॥ ईडःसकारादौ ध्वे च परे इट् भवति। ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वं ।

ईशः ॥१५२ ॥ ईशः सकारे ध्वे च परे इट् भवति । ईशिषे । ईशिध्वे। जनेशचेति केचित् व्यतिजज्ञिषे।व्यतिजज्ञिध्वे ।

लिङोऽनंत्यसखं ॥१५३॥ लिङः अनंत्यस्य सकारस्य खं स्यात् गे।कुर्यात्।चिनुयात्।चिनुयातां। चिनुयुः । कुर्वीत । चिन्वीत । अनंत्य इति किं ? कुर्युः।कुर्युः। गे इति किं?क्रियासुः । कृषीष्ट।

अतो यस् ॥१५४॥ अदंतात्परस्य या इत्यस्य इय् भवति । पचेत्।नंदेत् । दीव्येत् । तकारः किं ? यायात् ।

*आतोऽपः॥१५५॥अतःपरस्य पिद्वर्जितस्यात इय् भवति । पचेते । पचेथे । पचेतां । पचेथां । अप इति किं ? पचावहै । पचामहै ॥

आने मुक् ॥१५६॥ गोऽकारांतस्य मुगागमो भवति आने परतः।यजमानः।पचमानः।वर्द्धमानः।

ईदासः ॥१५७॥ आसः परस्यानस्य ईद्भवति । आसीनोऽधीते । आसीनो भुंक्ते ।

*सुप्याष्टनः ॥१५८॥ अष्टनसंतस्य च गोऽकारादेशो भवति सुपि परे । अष्टाभिः । अष्टाभ्यः । अष्टासु । प्रियाष्टाः । प्रियाष्टा । प्रियाष्टौ । प्रियाष्टानौ । प्रियाष्टौ । प्रियाष्टानः । प्रियाष्टाम्।प्रियाष्टान । प्रियाष्टौ। प्रियाष्टानौ । प्रियाष्टौ।प्रियाष्ट्नः। प्रियाष्टा। प्रियाष्ट्ना । प्रियाष्टाभ्यां । प्रियाष्टाभिः । प्रियाष्टे । प्रियाष्ट्ने । प्रियाष्टः। प्रियाष्ट्नः । प्रियाष्ट्नोः । प्रियाष्टोः ।सुपीति किं ? अष्टकर्मघाती जिनः ।

राय: भि ॥१५९॥ रै इत्यस्यात्वं भवति मकारभकारादौ सुपि परतः । राः । राभ्यां।रासु। प्रियाः । प्रियराभ्यां । प्रियरासु ।

*युष्मदस्मदोः ॥१६०॥ एतयोरात्वं भवति मकारभकारादौ सुपि परतः । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ।

*आविपि ॥१६१॥ युष्मदस्मदोरात्वं भवति आकारे इपि च परतः । युवां । आवां । त्वां । मामित्यादि ।

यः ॥१६२॥ तयोर्यो भवति सुपि परतः । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः

त्वमादेशे ॥१६३॥ आदेशे सुपि तयोः त्वं भवति। त्वं। अहं। त्वत्। मत्। युष्मत्। अस्मत्।

+ मो वा ॥१६४॥ मकारांतयोस्तयोः त्वं भवति वा आदेशभूते सुपि । युष्मानाचक्षाणेभ्यः युष्मभ्यं । युषभ्यं । अस्मभ्यं । असभ्यं । मावधेर्ये विषयस्ते परत्वात् भवंति । युष्मत् । युषत् । अष्मत् । असत् । युष्माकं । युषाकं । अस्माकं । असाकं ॥

मावधेः ॥१६५॥ तयोर्मकारावधेः संघातस्यादेशा भवंति इत्येषोऽधिकारो वेदितव्यः। तत्रैवोदाहरिष्यामः ।

युवावौ द्वौ ॥१६६॥ तयोर्मावधेर्युवावादेशौ स्तः द्वौ परतः । युवां । आवां । युवाभ्यां । आवाभ्यां ।

*त्वमौ त्यद्यौ चैके॥१६७॥ एकार्थे वर्तमानयोर्युष्मदस्मदोर्मावधेस्त्वामावादेशौ स्तः सुपि त्यं द्यौ च एकत्वे । त्वयि । मयि । त्वदीयः । मदीयः। त्वत्तरः । मत्तरः । त्वच्छिप्यः । मच्छिप्यः त्वत्पुत्रः। मत्पुत्रः ।

त्वाहौ सौ ॥१६८॥ युष्मदस्मदोः त्वाहौ भवतः सौ परे । त्वं । अहं ।

यूयवयौ जसि ॥ १६९ ॥ तयोर्यूयवयौ भवतः जसि परे । यूयं वयं ।

तुभ्यमह्यौ ङयि ॥१७०॥तयोस्तुभ्यमह्यौ स्तः ङयि परे । तुभ्यं । मह्यं ।

तवममौ ङसि ॥ १७१ ॥ तयोस्तवममावादेशौ स्तः ङसि परे । तव स्वं । मम स्वं ।

त्रिचतुरः स्त्रियां तिसृचतसृ ॥ १७२ ॥ त्रिचतुरोः स्त्रियां वर्तमानयोः तिसृचतसृ इत्येतावादेशौ भवतः सुपि । तिसृभिः । तिसृभ्यः।तिसृषु चतसृभिः। चतसृभ्यः । चतसृषु ।

रोऽच्युः ॥ १७३ ॥ तिसृचतस्रोः ऋकारस्य रेफो भवत्यचि परतः । तिस्रः संति । तिस्रः पश्य । चतस्रो यांति । चतस्रो नय ।

+वाऽस्येर्ह्योटि ॥ १७४ ॥ तिसृचतस्रोरसंख्यावाचिनोः ऋकारस्य रेफो भवति वा ङा—औटि च परतः । प्रियतिस्रि । प्रियतिसरि । प्रियचतस्रि । प्रियचतसरि । प्रियतिस्रौ । प्रियतिसरौ । प्रियचतस्रौ । प्रियचतसरौ । प्रियतिस्रः । प्रियतिसरः । प्रियचतस्रः । प्रियचतसरः । प्रियतिस्रं । प्रियतिसरं । प्रियचतस्रं । प्रियचतसरं ।

*जराया ङस्॥१७५॥ सुप्यजादौ परे जराया वा ङस् भवति।जरे,जरसे।।जराः जरसः।जरां,जरसं। जरे जरसौ । जराः, जरसः।जरया । जरसा ।

त्यदादेरः ॥ १७६ ॥ त्यदादीनामत्वं भवति सुपि परतः।स्यः।त्यौ । त्ये । सः।तौ।ते।द्वौ।

किमः कः ॥ १७७ ॥ किमः को भवति सुपि परे। कः । कौ । के ।

*कुस्तशोः ॥१७८॥ किमः कुर्भवति तकारादावशि च परतः । कुतः । क्व ।

*तोः सोऽनंते सौ ॥ १७९ ॥ त्यदादेः तवर्गस्यानंते वर्तमानस्य सो भवति सौ परे । स्यः । सः । एषः । अनंत इति किं ? यः । सः ।

असौ ॥ १८० ॥ असावित्यदसः औत्वं सोश्च त्वं निपात्यते । असौ ।

+वाऽसुकः॥१८१॥ असुक इत्यदसोऽकोऽकारस्योत्वं वा निपात्यते सौ परे। असुकः।असकौ ।

इदमो मः॥ १८२ ॥ इदमः मकारो भवति सौ परे । इयं । अयं ।

दः ॥ १८३ ॥ इदमो दकारस्य मो भवति सुपि । इमौ । इमे।इमां। इमाः । इमे।इमानि ।

यः सौ ॥ १८४ ॥ इदमो दकारस्य यो भवति सो परे । इयं ।

पुंसीदोऽय् ॥ १८५ ॥ इदमः इद्रूपस्याय् भवति पुंसि सौ । अयं ।

*टौस्यनोऽकः ॥ १८६ ॥ इदमः ककारहीनस्येदः अनादेशो भवति टौसि परे । अनेन । अनया । अनयोः । अक इति किं ? इमकेन । इमकयोः ।

हलि खं ॥ १८७ ॥ इदमोऽककारस्येदः खं भवति हलादौ सुपि परतः । आभ्यां । एभिः । एभ्यः । आभिः । एषां । आसां । एषु । आसु । अक इति किं ? इमकाभ्यां । इमकेभ्यः ।

*अन्वादेशेऽश् ॥ १८८ ॥ इदमोऽश् भवति अन्वादेशे कथितानुकथने हलादौ सुपि परे । इमकाभ्यां छात्राभ्यां रात्रिमुषिता । अथो आभ्यां हिंसा च कृता । इमकस्य छात्रस्य कुलमशोभनं अथोऽस्य शीलमपि । इमकस्य राज्ञो जनपदो दुर्विनीतः । अथोऽस्य भृत्याश्च अवश्याः ।

*टौसिष्वेतदश्चैनत् ॥ १८९ ॥ इदमः एतदश्च एनद्भवति अन्वादेशे टा -- ओस् -- इप् इत्येतेषु परतः । अनेन छात्रेण रात्रिरधीता -- अथो एनेनाहरप्यधीतं । एतेन छात्रेण रात्रिरधीता । अथो एनेनाहरपि । अनयोः छात्रयोः शोभनं शीलं । अथो एनयोः रूपमपि । एतयोः छात्रयोः शोभनं शीलं अथो एनयोरूपमपि । इमं छात्रं जैनेंद्रमध्यापय अथो एनं छंदोपि । एतं छात्रं काव्यमध्यापय—अथो एनं तर्कमपि । सुशीलाविमौ । अथो एनौ जगत् मानयति । दुष्टा एतौ । अथो एनौ लोको निंदति । धार्मिका इमे देवा अप्येनान् नमस्यंति । विनीता एते अथो एनान् पूजयंति । इदं सरः भ्रमराः सेवंते । अथो एनद्विहगाश्च । एतत् कुलमर्थिनः सेवंते अथो एनन्मित्राणि च । अन्वादेश इति किं ? देवदत्तमध्यापय इमं च छात्रं पश्य ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचंद्रिकायां वृत्तौ पंचमस्याध्यायस्य प्रथमः पादः ।

# द्वितीयः पादः ।

मृजेरैप् ॥ १ ॥ मृजेर्गोरैप् भवति । मार्ष्टि । मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं । मार्जिता । मार्जितुं । मार्जितव्यम् ।

क्ङिद्धल्यचि वा ॥ २ ॥ क्ङिद्धल्यजादौ मृजेरैब्वा भवति । संमृजंति । संमार्जंति । परिममृजतुः । परिममार्जतुः । क्ङितीति किं ? मार्जनं । अचीति किं ? मृष्टः । मृष्टवान् ।

ञ्णित्यचः ॥ ३ ॥ अजंतस्य ञ्णित्यैप् भवति । प्राकारः । अध्यायः । गौः । गावौ । गावः । सखायौ । सखायः ।

उकोऽतः ॥ ४ ॥ उकोऽकारस्यैब्भवति ञ्णिति परतः । अपाचि । पाचकः । पाठकः । पाकः । पाठः । अत इति किं ? भेदकः ।

इत्यच्वादेः ॥ ५ ॥ अचामादेश्च ऐब्भवति । इति ञ्णिति परे । त्रैपुष्टः । औत्सः । आंगः । जैनः ।

देविकाशिंशपादीर्घसत्रश्रेयसामात् ॥ ६ ॥ देविकादीनामादेश्च ऐब्भवत्याकारः । देविकायां भवं दाविकमुदकं । शिंशपायाः विकारः शांशपं भस्म । दीर्घसत्रे भवं दार्घसत्रं पुण्यं । श्रेयोऽधिकृत्य कृतो ग्रंथः श्रायसः स्याद्वादः ।

×वहीनरस्यैः ॥ ७ ॥ वहीनरस्यादेश्च ऐकारो भवति । वहीनरस्यापत्यं वैहीनरिः ।

केकयमित्रयुप्रलयानां यादेरिय् ॥ ८ ॥ एषां यकारादेरिय् भवति इति ञ्णिति परतः । केकयस्यापत्यं कैकेयः । मित्रयोर्भावः मैत्रेयिकया श्लाघते । प्रलयादागतं प्रालेयमुदकं ।

पदे य्व ऐयौव् ॥ ९ ॥ पदे परतोऽच्वादेश्च स्थाने कृतयोर्यकारवकारयोः ऐयौव् इत्येतावादेशौ भवतः इति ञ्णिति परतः । वैयाकरणः ।

नैयायिकः । सौवागमः । स्वर्हता प्रोक्तं सौवर्हतं तत्त्वं । पद इति किं ? यन इम शिष्याः याताः । स्व इति किं ? स्वाश्विः । अभ्यादिगिति किं ? अभ्यंजनेन चरति—आभ्यंजनिकः ।

द्वारादेः ॥१०॥ द्वारादीनां यव ऐयौव् स्तः इति ञ्णिति परतः । द्वारे नियुक्तः दौवारिकः । द्वारपालस्यापत्यं दौवारपालिकः । स्वरेण चरति सौवरिकः । सौवाध्यायिकः । व्यल्कसे भवः वैयल्कसः ।

न्यग्रोधस्यैकस्य ॥ ११ ॥ न्यग्रोधस्य एकस्य केवलस्य यो यकारस्तस्य ऐयू भवति । न्यग्रोधस्यायं नैयग्रोधो दंडः । एकस्येति किं ? न्यग्रोधिकायां भवः-न्याग्रोधिकः ।

*अत्यंगादेः ॥ १२ ॥ अत्यांतस्य व्यंगादीनां चादेरचः ऐभवति इति । परम्परं व्यवक्रोशनं व्यावक्रोशी । व्यापहासी । व्यापचर्ची वर्तते । व्यांगिः । स्वांगिः । व्यवहारेण चरति—इति व्यावहारिकः ।

*श्वादेरौ ॥ १३ ॥ श्वन्शब्दादेरिकारादौ इत्यचामादेरैभवति । श्वकर्णस्यापत्यं श्वाकर्णिः । श्वादंष्ट्रिः । श्वागणिकः । औ इति किं? श्वादंष्ट्राया विकारः शौवादंष्ट्रो मणिः ।

* इञः ॥१४॥ इञन्त्यांतस्य श्वादेर्हत्यैभवति । श्वाकर्णेरिदं श्वाकर्णं । श्वाभस्त्रं । इञ इत्यत्र ।

*वा पदस्यानौ ॥ १५ ॥ पदशब्दांतस्य-श्वादेरनिकारादौ इत्यैप् स्याद्वा । श्वापदानां समूहः श्वापदं । शौवापदं । अनौ इति किं ? श्वापदे-श्वरति श्वापदिकः ।

*प्रोष्ठभद्राज्जाते ॥ १६ ॥ आभ्यां परस्य पदस्याश्वादेरैभवति जातेऽर्थे । प्रोष्ठपदासु जातः प्रोष्ठपादः । भद्रपादः बालकः । जात इति किं ? प्रोष्ठपदासु भवः प्रौष्ठपदः । भाद्रपदो मेघः ।

अंशादृतोः ॥ १७ ॥ अंशादवयवात्परस्य ऋतुवाचकस्यादेरचः ऐप् स्यात् ञ्णिति परतः । पूर्वासु वर्षासु भवः पूर्ववार्षिकः । अपरवार्षिकः । पूर्वशारदः । पूर्वनैदाघः । अंशादिति किं? पूर्वास्वतीतासु वर्षासु भवः पौर्ववर्षः । आपरवर्षः ।

सुसर्वार्द्धाद्राष्ट्रस्य ॥ १८ ॥ एभ्यः परस्य राष्ट्रवाचकस्यैभवति इति परतः । सुपंचालेषु जातः सुपांचालकः । सर्वपांचालकः । अर्द्धपांचालकः । सुमागधकः । सर्वमागधकः । अर्द्धमागधकः ।

दिशोऽमद्रस्य ॥ १९ ॥ दिक्शब्दात्परस्य राष्ट्रस्य मद्रवर्जितस्य ऐभवति । पूर्वेषु पंचालेषु जातः पूर्वपांचालकः । अपरपांचालकः दक्षिणपांचालकः । उत्तरपांचालकः । अमद्रस्येति किं ? पौर्वमद्रः । आपरमद्रः ।

प्राग्ग्रामाणां ॥ २० ॥ दिशः परेषां प्राग्देशग्रामाणामैभवति इति परतः । पूर्वेषुकाम शम्यां जातः पूर्वेषुकामशमः । अपरकामशमः । पूर्वकार्ष्णमृत्तिकः । अपरकार्ष्णमृत्तिकः । प्रागिति किम् ? पौर्वदेवदत्तः ।

*स्यधिकाभ्यां वर्षस्याभाविनि ॥ २१ ॥ आभ्यां वर्षस्यैभवति- अभाविन्यर्थे इति परे । द्वाभ्यां वर्षाभ्यां निर्वृत्तो भृतोऽधीष्टो वा द्विवार्षिकः । त्रिवार्षिकः । अधिकेन वर्षेण निर्वृत्तः-अधिकवार्षिकः । अभाविनीति किं? द्वे वर्षे भावि-द्वैवार्षिकं । त्रैवर्षिकं धान्यं ।

*मानसंवत्सरस्याशाणकुलिजस्याखौ ॥२२॥ स्यधिकाभ्यां परस्य शाणकुलिजवर्जितस्य मानस्य संवत्सरस्य चैभवति अखौ । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । त्रिभिः सुवर्णैः क्रीतं त्रिसौवर्णिकं । द्वाभ्यां षष्टिभ्यां भृतः द्विषाष्टिकः । अधिकषाष्टिकः । द्विनवत्या क्रीतं द्विनावतिकं । द्वाभ्यां संवत्सराभ्यां भृतः द्विसांवत्सरिकः । अधिकसांवत्सरिकः । अशाणकु-

लिजन्तेति किं? त्रिभिः क्रीतं त्रैगाणं। द्वे कुलजे प्रयोजनमस्य द्वैकुलिजिकं। अस्याविति किम्? पंचलोहित्यः परिमाणमस्य पांचलोहितिकम् ।

हृत्सिन्धुभगे द्वयोः ॥ २३ ॥ एषु परतः द्वयोः पदयोः ऐप् स्यात् । सुहृदयस्येदं सौहार्दं। परमसिंधुषु भवः पारमसैंधवः। सौभाग्यं। दौर्भाग्यं।

अनुशतिकादीनां॥२४॥ एषां द्वयोः पदयोः आदेरचः ऐप्स्यात् । अनुशतिकस्यापत्यं आनुशातिकः । आनुहौडिः । इहलोके भवः—ऐहलौकिकः । पारलौकिकः ।

+ राजपौरुष्य ॥ २५ ॥ राजपुरुषशब्दात् ष्यणि द्वयोरैब्निपात्यते । राजपौरुष्यं । ष्यणीति किं ? राजपुरुषस्यापत्यं राजपुरुषायणिः ।

*देवतानां ङानि ॥२६॥ देवतार्थानां ङानि षये द्वयोरैप्स्यात् । आग्निवारुणः। आग्निमारुतः। ङानीति किम् ? स्कान्दविशाखः ।

नेंद्रवरुणस्यात् ॥ २७ ॥ अवर्णान्तानामिंद्रवरुणयोरैब्न स्यात् । आग्नेंद्रः । ऐंद्रावरुणः । आदिति किम् ? ऐंद्राग्नः । आग्निवारुणः ।

प्राग्नगरे॥२८॥ प्राचां देशे नगरे यौ द्वयोः पदयोरैब्भवति । विराटनगरे भवः वैराटनागरः । सौह्मनागरः । पांडुनागरः । प्रागिति किं ? मालवनगरः ।

जंगलधेनुवलजे ॥ २९ ॥ जंगलादिषु षुषु पूर्वपदस्यैब्भवति । कुरुजंगले भवः कौरुजंगलः। कौरुजांगलः। वैश्वधेनवः । सौवर्णवलजः।

वा षोः ॥ ३० ॥ जंगलादीनां वा ऐब्भवति। कौरुजंगलः । कौरुजांगलः । वैश्वधेनवः । वैश्वधैनवः । सौवर्णवालजः । सौवर्णवलजः ।

परिमाणस्यानतोऽर्द्धात् ॥३१॥ अर्द्धात्परस्य परिमाणस्यानकारस्यैब्भवति आदेः पदस्य तु वा । अर्द्धद्रोणं पचति अर्द्धद्रौणिकः आर्द्धद्रौणिकः । अर्द्धकौडविकं । आर्द्धकौडविकं । अनत इति किम्? अर्द्धप्रस्थिकः । आर्द्धप्रस्थिकः।

प्राद्वाहणस्य ठे ॥ ३२ ॥ प्रशब्दात् वाहणस्य ठत्ये ऐब्भवति आदेस्तु वा । प्रवाहणस्यापत्यं प्रवाहणेयः । प्रावाहणेयः ।

ठस्य ॥ ३३ ॥ ठत्यातस्य प्राद्वाहणस्य ऐप् भवत्यादेस्तु वा । प्रवाहणेयस्यापत्यं प्रवाहणेयिः। प्रावाहणेयिः ।

*नञः क्षेत्रज्ञकुशलचपलनिपुणेश्वरशुचेः ॥३४॥ नञः परेषां क्षेत्रज्ञादीनामचामादेरचः ऐप् भवत्यादेस्तु वा इति ष्णिति परतः। आक्षेत्रज्ञं। अक्षेत्रज्ञं। अकुशलस्येदं अकौशलं। आकौशलं। आचापलं अचापलं । अनैपुणं । आनैपुणं । अनैश्वर्यं । आनैश्वर्यं । अशौचं । आशौचं । सांतात् स्थो नञी – आयथातथ्यं । आयथापुर्यं । त्यांतास्तथैवो अयाथातथ्यं । अयाथापुर्यमित्यपि सिद्धं।

हन्तोऽघञ्ञो ॥ ३५ ॥ हंतेस्तो भवति णाति वर्जिते ष्णिति परतः। घातयति । घातकः। मत्स्यघाती । घातं घातं घातो वर्तते । अणञ्जाविति किम् ? अघान । अघानि ।

आतो णश औ ॥३६॥ आतः परस्य णशः औत्वं स्यात् । पपौ । ययौ । तस्थौ ।

कृञ्जौ युक् ॥३७॥ आतो युगागमो भवति कृति ष्णिति औ च परे। दायकः। धायकः। अदायि । अधायि । कृञ्जाविति किं ? ज्ञा देवता अस्य ज्ञः ।

*न मोऽकम्यमचमनमाम्चमः॥३८॥मांतस्य कमादिवर्जितस्य कृति ष्णिति औ च ऐप्न स्यात्- शमः । शमकः । अशमि । दमः । दमकः। अदमि । तमः । तमकः। अतमि । शमी । दमी। तमी । अकमादेरिति किं ? कामः । कामकः । वामः। वामकः। यामः। यामकः। रामः। रामकः।

नामः। नामकः। गामुकः। गामकः। आचामः। आचामकः।

जन्वध्योः ॥ ३९ ॥ जनिवध्योः कृन्म्योः ऐबन स्यात्। जनकः। जनः। अजनि। वधः। वधकः। अवधि।

+घञ्युपाद्रम्यमः ॥ ४० ॥ उपोद्भ्यां रमियमोः घञि ऐप्न भवति। उपरमः। उद्यमः।

विश्रमो वा ॥ ४१ ॥ विपूर्वस्य श्रमेर्घञि वैब्न स्यात्। विश्रामः। विश्रमः।

ह्रीव्लीरीक्नूय्यर्तिक्ष्माय्यातां पुग् णावैप् ॥ ४२ ॥ ह्र्यादीनामाकारांतानां च णौ परे पुग्भवत्यैप् च। ह्रेपयति। व्लेपयति। रेपयति। क्नोपयति। अर्पयति। क्ष्मापयति। दापयति। स्थापयति। धापयति। मापयति।

शाछासाह्वाव्यावेपां युक् ॥ ४३ ॥ शादीनां णौ युग् भवति। निशाययति। अपच्छाययति। अवसाययति। आह्वाययति। संव्याययति। वाययति। पाययति।

*धूञ्प्रीञोर्नुक् ॥ ४४ ॥ धूञ्प्रीञोर्णौ नुग् भवति। विधूनयति। प्रीणयति।

*कथामक् ॥ ४५ ॥ कथादीनां णावगागमो भवति। कथयति। वरयति। गणयति। रहयति। गदयति। कलयति। महयति। स्पृहयति। गृहयते। पतयति। गवेषयति।

वो विधूनने जुक् ॥ ४६ ॥ वातेर्विधूननेऽर्थे णौ जुग् भवति। पक्षकेणोपवाजयति। विधूनन इति किं? केशानावापयति।

पातेर्लुक् ॥ ४७ ॥ पातेर्णौ लुग् भवति। पालयति शीलमाचार्यः। पालयति धर्मं जैनः।

*लो वा स्नेहद्रवे ॥४८॥ ला इत्येतस्य स्नेहद्रवेऽर्थे णौ लुग्वा भवति। विलापयति। विलालयति घृतं। स्नेहद्रवइति किं? अयो विलापयति॥

ल्यो नुक् ॥ ४९ ॥ ली इत्येतस्य णौ स्नेहद्रवे नुग्वा स्यात्। विलीनयति। विलाययति आज्यं।

रुहः पः ॥ ५० ॥ रुहेर्णौ वा पो भवति। आरोपयति, आरोहयति स्वर्गं जिनधर्मः।

स्फायो वः ॥५१॥ स्फायो णौ परे वादेशो भवति। स्फावयति। स्फावयतः। स्फावयंति।

शदोऽगतौ तः ॥ ५२ ॥ शदेस्तो भवति अगत्यर्थे णौ परे। पुष्पाणि शातयति। फलानि शातयति। अगताविति किं? गां शादयति यष्ट्या।

त्यस्थेऽचित्कयापीदस्तोऽसुपोऽयदादेः॥५३॥ त्यस्थे चिद्वर्जिते ककारे आप्परे पूर्वस्य यदादिवर्जितस्य इकारादेशो भवति न चेत्स आप्सुप्परोविहितः। जटिका। मुंडिका। जटिलिका। त्य इति किं? शका। तका। स्थ इति किं? पाचिका। कारिका। अत्रापि यथा स्यात्। अचिदिति किम्? जीवका। नंदका। अनुकंपिता। देवका। कीति किं? नंदना। रमणा। आपीति किं? पाचकः। अत इति किम्? गोका। नौका। असुप इति किं? बहुपरिव्राजका मथुरा। अयदादेरिति किं? यका। सका। क्षिपका।

*त्ययोः ॥ ५४ ॥ त्यण्त्यच्त्यांतस्य आपीत्वं स्यात्। दाक्षिणात्यिका। इहत्यिका।

×नारिकामामिका ॥ ५५ ॥ नरकमामकयोरित्वं निपात्यते। नरान् कायति नरिका। मम इयं मामिका।

+ तारकाष्टकवर्णका ज्योतिःक्रियातांतवे ॥ ५६ ॥ तारकादयो निपात्यंते ज्योतिरादिष्वर्थेषु। तारका नक्षत्रं। अष्टका पित्रादिक्रिया विशेषः। वर्णका वस्त्रविशेषः। तारिका। अष्टौ परिमाणमस्याः अष्टिका। वर्णिकाऽन्यत्र।

वाऽऽतोऽयोर्येकात् ॥ ५७ ॥अयोर्यकारक-काराभ्यां परस्यातःस्थाने कृतो योऽकारस्तस्येद्भवति वा ।इभमर्हति इभ्या।कुत्सिता इभ्या-इभ्यिका । इभ्यका । अर्ध्यिका । अर्ध्यका । चटकिका । चटकका । मूषिकिका ।मूषिकका ।आत इति किं? सांकाश्ये भवा सांकाश्यिका। अयोरिति किं? सुन-खिका । सुपाकिका ।

* द्वयेषमूतपुत्रवृंदारकस्य ॥ ५८ ॥ एषा-मत इत्वं स्यात् । द्विके । द्वके । एषिका । एषका । मूतिका । मूतका । पुत्रिका । पुत्रका । वृंदा-रिका । वृंदारका ।

+वार्तिका वौ ॥५९॥ वावर्थे इत्वा निपात्यते । वर्तिका, वर्तका पक्षी । वर्तिकान्यत्र ।

*भस्त्राजाज्ञास्वानां ॥ ६० ॥ एषामनौ वा इत्वं स्यात् ।बहवः भस्त्रा यस्याः-बहुभस्त्रिका,ब-हुभस्त्रका । अजिका, अजका । ज्ञिका, ज्ञका । स्विका, स्वका ।

आषानुक्तपुंस्कात् ॥ ६१॥ अनुक्तपुंस्का-त्परस्यात आत्वमित्वं च वा स्यात् । खट्वाका, खट्विका, खट्वका।वीणाका,वीणिका, वीणका।

इक ठः॥६२॥ठस्य इक इत्ययमादेशो भवति। आक्षिकः । आपूपिकः । मातृषिकः ।

* दोसिसुसुगतशश्वदकस्मात्तः कः ॥ ६३ ॥ दोसशब्दात् इसुसुगंतात् शश्वदकस्माद्वर्जिताच्च-कारांताच्च ठस्य को भवति । दोर्भ्यां तरति दौष्कः। सर्पिः पण्यमस्य-सार्पिष्कः । धानुष्कः । सांवर-जंबुकः । मातृकः । औदश्वित्कः । अशश्वदक-स्मादिति किं? शश्वद्भवं शाश्वतिकं । आकस्मिकं।

चजोः कुर्घिण्ये तेऽनिटः ॥ ६४ ॥ ते अ-निटो योश्चकारजकारयोः कुत्वं स्यात् घिति ण्ये च परतः । पाकः । सेकः । त्यागः । योगः । पाक्यं । योग्यं । ते अनिट इति किं? संकोचः ।



कूजः । सजः । परिव्राजः । प्रोच्यं ।

+निदाघाऽवदाघार्घवाक्यं लौ ॥ ६५ ॥ निदाघादयो निपात्यंते लौ। निदाघः। अवदाघः। अर्घः । वाक्यं। लाविति किं? निदाहः । अव-दाहः । अर्हः । वाच्यं ।

न्यंक्वादीनां ॥ ६६ ॥ एषां कुत्वं निपात्यते । न्यंचतीति न्यंकुः । मेघः । पिंडपाकः । श्लोकः । तक्रं । वक्रं । आकृतिगणोऽयं ॥

हो घ्नो ञ्णिणि॥६७॥ हंतेर्हकारस्य कु-र्भवति ञ्णिति नकारे च परे । अघानि । घात-यति । साधुघाती । घातं घातं । घ्नंति । घ्नंतु । अघ्नन् । ञ्णिन्नीति किं? हतः । हतवान् ।

घात ॥ ६८ ॥घात्परस्य हंतेर्हस्य कुर्भवति। जघान । जंघन्यंते । जिघांसति ।

हेरकाचि ॥ ६९ ॥ हिनोतेर्घात्परस्य कुर्भ-वत्यकचि परतः । जिघाय । जेघीयते । जिघी-षति । अकचीति किं? प्राजीहयत् ॥

सँल्लिटोर्जेः ॥ ७० ॥ घादुत्तरस्य जेःकुर्भवति सनि लिटि च परतः । जिगीषति । जिगाय ।

वा चेः ॥ ७१ ॥ घात्परस्य चिनोतेर्वा कुर्भ-वति सँल्लिटोः परतः । चिकीषति । चिचीषति । चिकाय । चिचाय धर्मे ।

न वंचेर्गतौ ॥ ७२ ॥ वंचेर्गत्यर्थे कुर्न स्यात् घञि। वंचं वंचंति वाणिजाः। गताविति किं? वंकं काष्टं ।

*याजादयो यज्ञांगे ॥ ७३ ॥ एते निपात्यंते यज्ञांगे । याजः । प्रयाजः । ऋतुयाजः। यज्ञांगे इत्येव ? यागः ।

ण्य आवश्यके ॥ ७४ ॥ आवश्यकेऽर्थे ण्ये परतः कुर्न स्यात् । अवश्यसेच्यं । अवश्यपाच्यं । आवश्यक इति किं? सेक्यं ।

यजस्यजप्रवचां ॥ ७५ ॥ एषां ण्ये परे कुर्न

स्यात् । याज्यं । त्याज्यं । प्रवाच्यं ।

*भुजोऽद्रौ ॥७६॥ भुजेरदर्थे ण्ये कुर्न भवति। भोज्याः अपूपाः । अदाविति किं? भोग्यं कम्बं।

*नित्रायुजः शक्ति ॥ ७७ ॥ आभ्यां युजः शक्यर्थे कुर्न स्यात् ण्ये परतः। नियोज्यः। प्रयोज्यः। शक्तीति किं ? नियोग्यः । प्रयोग्यः ।

क्सस्याचि खं ॥ ७८ ॥ क्सस्य खं भवति अचि परे । अधुक्षि । अधुक्षाथां । अधुक्षातां । अधिक्षि । अधिक्षाथां । अधिक्षातां । अचीति किं ? अधुक्षत् ।

वोन्दुहदिहलिहगुहो दे दंत्ये ॥ ७९ ॥ दुहादिभ्यः क्सस्य वा उब्भवति दे दंत्यादौ परतः। अदुग्ध । अदुग्धाः । अधुक्षत । अधुक्षथाः । अदिग्ध । अदिग्धाः । अधिक्षत । अधिक्षथाः । अलीढ । अलीढाः । अलिक्षत । अलिक्षथाः । न्यगूढाः । न्यघुक्षत । न्यघुक्षथाः । द इति किं? अधिक्षत् । दंत्य इति किं? अधुक्षामहि ।

ओतः श्ये ॥ ८० ॥ ओकारस्याप् भवति श्ये परतः। निश्यति । स्यति । द्यति । अपच्छ्यति ।

*शमां दीः ॥ ८१ ॥ शमादीनां दीर्भवति श्ये परे। शाम्यति । दाम्यति। ताम्यति । श्राम्यति। क्लाम्यति । माद्यति ।

ष्टिवुक्लम्वाचमां शि ॥ ८२ ॥ एषां दीर्भवति शिति परतः। निष्टीवति। निष्टीवन् । निष्टीवेत् । न्यष्टीवत् । क्लामति। क्लामन् । क्लामेत। अक्लामत् । आचामति । आचामन्। आचामेत्। आचामतु ।

क्रमो मे ॥ ८३ ॥ क्रमः शिति मनिमित्ते दीर्भवति । क्रामति । क्रामन् । क्रामेत् । अक्रामत् । म इति किं ? आक्रमते सूर्य्यः ॥

गमिषुयमां छः ॥८४॥ एषां शिति परे छो भवति।गच्छति । गच्छन् । संगच्छते।अगच्छत् । इच्छति । यच्छति ।

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ॥ ८५ ॥ पादीनां पिबादयो भवंति शिति परतः । पिबति । पिबन् । पिबेत् । अपिबत् । जिघ्रति । जिघ्रतः । धमति । धमतः । तिष्ठति । तिष्ठतः।आमनति।आमनतः।प्रयच्छति।प्रयच्छतः। पश्यति । पश्यतः । ऋच्छति। ऋच्छतः। शीयते। शीयेते । सीदति । सीदतः । सीदंति ।

*सर्तेर्धौ शैघ्र्ये ॥ ८६ ॥ सर्तेः शिति परतः धौ स्यात् शैघ्र्येऽर्थे । धावति । धावतः। धावंति । धावतु । धावन् । शैघ्र्य इति किं ? सरति ।

ज्ञाजनोर्जा ॥ ८७ ॥ एतयोः शिति जा इत्ययमादेशो भवति । जानाति । जानीते । जायते । जायतां ।

प्वः प्रः ॥ ८८ ॥ पू इत्येवमादीनां शिति प्रो भवति । पुनाति । स्तृणाति । लिनाति ।

मिदेरेप् ॥ ८९ ॥ मिदः शिति एप् भवति। मेद्यति । मेद्यतः । मेद्यन् ।

जुसि ॥९०॥ इगंतस्य जुस्येप् भवति । अजुहवुः । अबिभयुः । अबिभरुः ।

गाऽगयोः ॥९१॥ गे अगे च परे गोरेब् भवति जयति । जेता । सुनोति। सोता । धरति । धर्त्ता।

जागुरविजिणाश्किति ॥ ९२ ॥ जागर्त्तेरेब्भवति अविजिणश्किति परतः।जागरयति । जागरकः । साधु जागरी। जागरं जागरं।जागरो वर्त्तते। जागर्य्यते । अविजिणश्कितीति किं ? जागृविः । अजागरि । जजागार। जागृतः । जागृथः ।

घ्युकः ॥९३॥ वेलकः एप् भवति गागयोःपरतः । श्च्योतति । वर्षति । छेत्ता । भेत्ता । घीति किं ? जीवति ।

नेटः ॥ ९४ ॥ इट एब्न भवति गागयोः

परतः। अकणिषं । कणिता । अरणिषं । रणिता ।

यस्य गे पित्याचि ॥ ९५ ॥ यस्य द्युङः एक्न स्यात्पित्यजादौ गे परतः । नेनिजानि । अनेनिजं । वेविषाणि । अवेविषं । बोभुवीति । मोमुचीति । यस्येति किं ? वेदानि । वेद । ग इति किं? निनेज । विवेच । अचीति किं? नेनेक्ति । मोमोक्ति ।

भूम्बोऽयस्य मिङि ॥ ९६ ॥ एनयोर्यवर्जितयोर्मिङि पित्येक्न स्यात् । भुवं । भुवावहे । भुवामहे । अभूवं । अभूः । अभूत । अयस्येति किं ? सोषोति । सोषवीति । बोभोति । बोभवीति ।

*हल्युप्योर्णौ ॥ ९७ ॥ उकारस्यौत्वं स्यात् उपि सति हलादौ पिति गे परतः । यौमि । यौषि । यौति । नौमि । नौषि । नौति । हलीति किं ? यवानि । उपीति किं? जुहोति । णाविति किं? एभि । एषि । एति । पितीति किं ? युतः । स्तुतः ।

वोर्णोः ॥९८॥ ऊर्णोर्हलि पिति गे औवा स्यात् । प्रोर्णौमि । प्रोर्णोमि । प्रोर्णौषि । प्रोर्णोषि । प्रोर्णौति । प्रोर्णोति ।

हल्योत् ॥ ९९ ॥ ऊर्णोः केवले हलि पिति गे ओद्भवति । प्रौर्णोः । प्रौर्णोत् ।

*तृणह ॥ १०० ॥ तृणहिति तृहः श्नमोऽकारस्य एत्वं निपात्यते हल्पिद्गे परतः । तृणेह्मि । तृणेक्षि । तृणेढि । हल्पितीति किं ? तृणहानि । पितीति किं? तृण्ढः ।

ब्रुव ईट् ॥ १०१ ॥ ब्रू इत्येतस्मात्परस्य हलादेः पितो गस्येड् भवति । ब्रवीमि । ब्रवीषि । ब्रवीति । ब्रवीतु । अब्रवीत् ।

*यङ्तुरुस्तोर्बहुलं ॥ १०२ ॥ यङ्कंतात् तुरुस्तुभ्यश्च परस्य हलादेःपितो गस्य बहुलमीडागमो भवति । लालपीति । लालपि । चोक्रूयीति । चोक्रोष्टि । तवीति । तौति । रवीति । रौति । स्तवीमि । स्तौम्यरनाथं ।

हल्यस्तेः ॥ १०३ ॥ केवले हल्यस्तेः सेश्च ईड् भवति । आसीः । आसीत् । अकार्षीः । अकार्षीत् ।

*रुद्द्वयोऽट् चादोऽट् ॥ १०४ ॥ रुदादिभ्यो ऽदरवर्जितेभ्यः केवले हल्पिद्गे अट् भवति ईट् च । अदंस्त्वडेव । अरोदत् । अरोदीत् । अरोदः । अरोदीः । अस्वपत् । अस्वपीत् । प्राणत् । प्राणीत् । अश्वसत् । अश्वसीत् । अजक्षत् । अजक्षीत् । आदत् । आदः ।

यञ्यतो दीः ॥१०५॥ यञादौ गे परे अकारांतस्य दीर्भवति । पचामि । पचावः। पक्ष्यामि । पक्ष्यावः । अपचाव । अपचाम । यञ्यत इति किं ? पचसि । चिनुवः। ग इति किं ? केशवः ।

सुपि ॥ १०६ ॥ अकारांतस्य दीर्भवति यञादौ सुपि परतः । सर्वज्ञाय । देवाभ्यां ।

जसि ॥ १०७ ॥ अकारांतस्य दीर्भवति जसि परतः । धर्माः । देवाः ।

बहौ झल्येत ॥ १०८ ॥ झलादौ बहुवचने सुप्यकारांतस्य एत्वं स्यात् । देवेभ्यः । देवेषु । बहाविति किं ? धर्माभ्यां ।

ओसि ॥१०९॥ अकारांतस्य गोरेद्भवति । ओसि परे । देवयोः । धर्मयोः ।

*टि चापः ॥ ११० ॥ आबंतस्य गोरेद्भवति टावचने ओसि परे । विद्यया । विद्ययोः । बहुराजया । बहुराजयोः ।

कौ ॥ १११ ॥ आबंतस्यैद्भवति कौ परे । हे कन्यके । हे बहुराजे ।

*प्रोऽम्बार्थद्व्यचः॥ ११२॥ द्व्यचः–अंबार्थस्य कौ प्रादेशो भवति । हे अंब । हे अक्क । हे अल्ल। द्व्यच इति किं?हे अंबिके।हे अंबाले।हे अंबाडे।

*मोः ॥ ११३ ॥ मुसंज्ञकस्य प्रो भवति कौ परतः । हे गौरि । हे वामोरु ।

+तलो वा किव्योः ॥ ११४ ॥ तलंतस्य

मो वा स्यात् किङ्योःपरतः। हे देवत। हे देवते। देवते भक्तिः। देवतायां भक्तिः।

मस्यैप् कौ॥११५॥ मांतस्यैब् भवति कौ परतः। हे मुने। हे साधो।

जसि॥११६॥मांतस्यैब् भवति जसि परतः। मुनयः। साधवः। धेनवः। बुद्धयः।

ऋतो किघे॥११७॥ ऋकारांतस्यैब्भवति कौ घे च परतः। पितरि। मातरि। पितरौ। पितरः। मातरौ। मातरः।

सोर्ङि॥११८॥ स्वंतस्य गोरेब् भवति ङिति सुपि परतः। मुनये। साधवे। बुद्धये। धेनवे। साधोः।मुनेः।बुद्धेः। धेनोः। ङीति किं? साध्वोः।

अण्मोः॥११९॥म्वंतात्परस्य ङितोऽड् भवति। नद्यै। नद्याः। वध्वै। वध्वाः।

याडापः॥१२०॥आपः परस्य ङितः सुपःयाट् स्यात्। विद्यायै। विद्यायाः। विद्यायां। बहुराजायै। बहुराजायाः। बहुराजायां।

स्नेः स्याद् प्रश्च॥१२१॥ स्नेरावंतात्परस्य ङितः स्याट् भवति प्रश्चापः। सर्व्वस्याः। सर्व्वस्यै तस्यै। तस्याः।कस्याः। कस्यां।

*न्याम्मोर्ङेराम्॥ १२२ ॥ नी आप् मु इत्येतेभ्यः ङेराम् भवति। नियां। ग्रामण्यां। विद्यायां। नद्यां। वध्वां।

इदुतः॥ १२३ ॥ इदुद्भ्यां मुभ्यां ङेराम् भवति। बुद्ध्यां। धेन्वां।

*औः॥ १२४ ॥ ताभ्यांङेरौ भवति। सख्यौ। पत्यौ।

*सोर्डौ॥१२५॥ सुसंज्ञाभ्यां ङेर्डौ स्यात्। मुनौ। साधौ। बुद्धौ। धेनौ।

टो नाऽस्त्रियां॥ १२६ ॥ सोः परस्य भैकस्य ना भवत्यस्त्रियां। मुनिना। साधुना। अस्त्रियामिति किं? बुद्ध्या। धेन्वा। सोरिति किं? सख्या। पत्या।

सूत्रेऽस्मिन् सुब्विधिरिष्टः॥१२७॥सूत्रेऽस्मिन् जैनेन्द्रे सुपो विधिः सुपि च विधिरिष्टो भवति। मिर्द्वेकार्ये वाः। ओगोर्मीचः—नुममाव इत्यादि।

णौ कच्युङः मोऽशास्वकृल्वृदितः॥१२८॥ कच्परे णौ परतः उङः मो भवति शास्वादीन्विहाय। अपीपठत्। अलीलवत्। अचीकरत्। कचीति किं?कारयति। उङ इति किं?अचकांक्षत्। अशास्वकृल्वृदित इति किं? अशशासत्। माला-मारूयत्—अममालत्। अरराशत्। अडुढौकत्। अतुत्रौकत्।

* भ्राजभासभाषदीपजीवमीलपीडकणरण्श्रण्चण्लुटां वा॥ १२९ ॥ एषां कच्परे णौ उङः मो वा भवति। अबिभ्रजत्, अबभ्राजत्। अबीभसत्, अबभासत्। अबीभषत्, अबभाषत्। अदीदिपत्, अदिदिपत्। अजीजिवत्, अजिजीवत्। अमीमिलत्, अमिमीलत्। अपीपिडत्, अपिपीडत्। अचीकणत्, अचकाणत्। अरीरणत्, अरराणत्। अशिश्रणत्, अशश्राणत्। अचीचणत्, अचचाणत्। अलूलुटत्, अलुलोटत्।

उर्ऋत्॥१३०॥ कच्परे णौ ऋवर्णस्योङः ऋद्वा स्यात्। इररारामरामपवादः। अचीकृतत्। अचकीर्त्तत्। अवीवृतत्। अववर्त्तत्। अमीमृजत्। अममार्जत्।

*जिघ्रतेरिः॥१३१॥ घ्रा इत्यस्योङः कच्परे णौ इर्वा स्यात्। अजिघ्रिपत्। अजिघ्रपत्।

*तिष्ठतेः॥१३२॥ अस्योङः कच्परे णौ इर्भवति। अतिष्ठिपत्।अतिष्ठिपतां। अतिष्ठिपन्।

सं पिबश्चास्येत्॥१३३॥ पिबतेः कच्परे णौ उङः सं स्यात् चस्य च इत्वं। अपीप्यत्। अपीप्यतां। अपीप्यन्।

देर्दिगि लिटि ॥१३४॥ सवस्य देङः दिगि स्यात् लिटि परतः । अवदिग्ये । अवदिग्याते । अवदिग्यिरे ।

*स्फाद्यृदृर्तेरेप् ॥१३५॥ स्फादेः ऋतोऽर्तेश्च एप्स्यात् लिटि । सस्मरतुः । सस्मरुः । दध्वरतुः । दध्वरुः । आरतुः । आरुः । स्फादीति किं? चक्रतुः । चक्रुः । ऋदर्तेरिति किं ? चिक्षियतुः । चिक्षियुः ।

ऋच्छृतः ॥१३६ ॥ ऋच्छतेः ऋकारांतानां च लिट्येप् भवति । आनर्छ । आनर्छतुः । चकरतुः । चकरुः । जगरतुः । जगरुः ।

शॄदॄप्रां प्रो वा ॥१३७॥ एषां लिटि परतः प्रो वा भवति । शश्रतुः, शशरतुः । दद्रतुः, ददरतुः । पप्रतुः, पपरतुः ।

केऽणः ॥१३८॥ अणः के परे प्रो भवति । मोमपकः । तंत्रिका । नदिका । अण इति किं ? नौका ।

न कपि ॥१३९॥ कप्यणः प्रो न स्यात् । बहुश्रीरपाकः । बहुकुमारीकः । बहुवधूकः । बहुवामोरूकः ।

वाऽऽपः ॥१४०॥ आपः प्रो भवति कपि परे वा । बहुखट्वकः । बहुखट्वाकः ।

*नशोऽङीम् ॥ १४१ ॥ नशेरिम् भवति अङि परे । अनेशत्, अनशत् ।

श्व्यस्पद्वचोऽथुक्पुपुम ॥१४२॥ एषां अकारादयो भवंत्यङि परे । अश्वत् । आस्थत् । अपप्तत् । अवोचत् । अवोचतां । अवोचन् ।

दृशुरेप् ॥१४३॥ दृशेः ऋवर्णांतानां चाङ्येप् स्यात् । आदर्शत् । आरत् । असरत् ।

शीङो गे ॥१४४॥ शीङः एप् भवति गे परे । शेते । शयाते । शेरते । ग इति किं? संशीतिः ।

यि क्ङित्ययङ् ॥१४५॥ यकारादौ क्ङिति परे शीङः अयङ् स्यात् । शय्यते । शाशय्यते । यीति किं ? शिश्ये । क्ङितीति किं ? शेयं ।

गेरूहः प्रः ॥१४६॥ गेः परस्य ऊहः प्रो भवति क्ङिति । समुह्युते । अभ्युह्यते । समुह्यात् । अभ्युह्यात् । गेरिति किं ? ऊह्यते ।

लिङ्येतेः ॥ १४७ ॥ गेः परस्य एतेर्लिङि प्रो भवति यि क्ङिति । उदियात् । समियात् । अभियात् । लिङीति किं ? समीयते ।

*दीर्घश्च्व्यकृद्वे ॥ १४८ ॥ च्वौ अकृयकारे अगयकारे च परे दीर्घो भवति गाः । शुचीकरोति । पटूस्यात् । अभृशो भृशो भवति भृशायते । चीयते । स्तूयते । चीयात् । स्तूयात् । च्व्यकृद्व इति किं ? कुयं । गुयं । स्तुयात् ।

रीङ् ऋतः ॥१४९॥ ऋकारांतस्य रीङ् भवति च्व्यकृद्वे परतः । पित्रीभवति । मात्रीभवति । पित्रीयति । मात्रीयति । पित्रायते । जेह्रीयते । चेक्रीयते ।

रिङ् यग्लिङ्क्षे ॥१५०॥ ऋकारांतस्य रिङ् भवति यकि लिङि शे च परतः । क्रियते । क्रियात् । आद्रियते । आध्रियते ।

स्फाद्यृदर्तेरस्कृरेप् ॥१५१॥ स्फादेःऋकारांतस्य ऋतोऽर्तेश्चैप् भवति यग्लिङोः परतः । ध्वर्यते । स्मर्यते । अर्यते । ध्वर्यात् । स्मर्यात् । अर्यात् । अस्कृरिति किं ? संस्क्रियात् ।

यङि ॥१५२॥ स्फादेः ऋतोऽर्तेश्च यङि एप् भवति । सास्मर्यते । दाध्वर्यते । सास्वर्यते । अरार्यते ।

+घ्नो घ्नी हिंसायां ॥१५३॥ हंतेर्घ्नी भवति हिंसार्थे यङि परे । जेघ्नीयते शत्रून् । जंघन्यतेऽन्यत्र ।

ई घ्राध्मोः ॥ १५४ ॥ घ्रा ध्मा इत्येतयोरी भवति यङि परतः । जेघ्रीयते । देध्मीयते ।

*अस्याऽसच्व्यौ ॥१५५॥ अवर्णांतस्य शिराहितस्य ई भवति च्वौ परे । शुक्लीभवति । शुक्लीकरोति । शुक्लीस्यात् । मालीस्यात् । असेरिति किं?

दोषाभूतमहः ।

क्याचि ॥१५६॥ अवर्णांतस्य ईर्भवति क्यचि परतः। पुत्रीयति । मालीयति ।

क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायं॥१५७॥एष्व-र्थेषु अशनादयः क्यजंता निपात्यंते। अशनायति। उदन्यति । धनायति।अशनीयति । उदकीयति । धनायति अन्यत्र ।

दोसोमास्थां कितीत् ॥१५८॥ एषां तका-रादौ किति परे इत्वं स्यात् । निर्दितः। निर्दित-वान् । दित्वा । दितिः । अवसितः । अवसित-वान् । सित्वा । सितिः। मितः।मितवान्। मित्वा। मितिः । स्थितः। स्थितवान् । स्थित्वा । स्थितिः। कितीति किं ? दीयते । दाता ।

*शो व्रते ॥ १५९ ॥ श्यतेः किति व्रतविषये इद् भवति । संशितं व्रतं । संशितो व्रती । व्रत इति किं ? निशातः ।

*छश्च वा ॥ १६० ॥ छ्यतेः श्यतेश्च इर्वा स्यात् किति परे । अपच्छितः । अपच्छितवान्। अपच्छातः। अपच्छातवान् । निशितः। निशित-वान् । निशातः । निशातवान् ।

धाञो हिः ॥१६१॥ धाञः हिर्भवति किति परे । हितः । हितवान् । हित्वा । हितिः ।

हाकः क्त्वि॥१६२॥हाकः हिर्भवति क्त्वात्ये परे । हित्वा राज्यं गतः । क्त्वीति किं? हीनः । हीनवान् ।

दो दद्घोः ॥१६३॥ दा इत्येतस्य घुसंज्ञकस्य दद्भवति तिकिति परे । दत्तः । दत्तवान् । दत्त्वा । दत्तिः । घोरिति किं?दातं बर्हिः । अवदातं मुखं ।

मस्लेस्तोऽचः ॥१६४॥ मस्तः गेश्चाजंतात् परस्य दो घोस्तकारादेशो भवति तिकिति परे।मरुत्तः एनं देयासुः-मरुत्तः । प्रत्तः। प्रत्तवान् । परिदानेन निवृत्तं परीत्तिमं । मस्लेरिति किं?दाधिदत्तं । अचः इति किं ? संदत्तः ।

*प्रादाञो वाऽरंभे क्ते॥१६५॥प्रात्परस्य दाञः वा तो भवत्यारंभे क्ते त्ये परे । प्रत्तः । प्रदत्तः । प्रादिति किं ? परीत्तः ।

+निविस्वन्ववात् ॥१६६॥ एभ्यो दाञः-आरं-भे क्ते तो वा स्यात् । नीत्तं । निदत्तं । वीत्तं । विदत्तं । सूत्तः । सुदत्तः।अनूत्तं । अनुदत्तं । अवत्तं । अवदत्तं ।

भ्यऽपः ॥१६७॥ भकारादौ परे अपस्तो भवति। अद्भिः। अद्भ्यः । भीति किं ? अप्सु ।

स्यगे सः ॥१६८॥ सकारादौ अगे गोरचः परस्य सकारस्य तादेशो भवति । वत्स्यति। अव-त्स्यत् । विवत्सति । सीति किं?वासिष्यते । अग इति किं ? आस्से । वस्से ।

तासस्त्योः खं॥१६९॥तासोऽस्तेश्च सका-रस्य सकारादौ परतःख स्यात् ।कर्त्तासि।कर्त्तासे। असि । व्यतिषे ।

रि ॥१७०॥ तयोः सकारस्य खं भवति रे-फादौ । कर्त्तारौ। कर्त्तारः। रेफादौ अस्तेः सकारो नास्ति भूभावस्य विद्यमानत्वात् ।

एति हः ॥१७१॥ तयोः सकारस्य हो भवति एकारे परतः। कर्त्ताहे । व्यतिहे ।

*दीधीवेव्योरिये॥१७२॥ दीधी वेवी इत्येत-योरिवर्णयकारयोः परतः खं स्यात् । दीधीङ् दी-प्तिदेवनयोः । आदीधिता । आदर्धित । आदी-धयति । साधुदीधी । दीधितिः। यकारे—आदी ध्याते । आदीध्य गतः। आदीध्यां। वेवीङ् वेतना-तुल्ये । आवेविता । आवेवीत । आवेवयति । साधुवेवी । वेवितिः । आवेव्यते । आवेव्य गतः आवेव्यं।इवर्णयकारे इति किं?आदीध्यनं।आवेव्यनं।

+योऽचि ॥१७३ ॥ तयोर्यकारादेशो भवत्यचि परतः। आदीध्यै। आदीध्यावहै । आदीध्या महै ।

आदीध्यावां । आदीध्यातां । आदीध्यकः । वेव्ये । वेव्यावहे । वेव्यामहे । वेव्यावां । वेव्यातां । वेव्यकः ।

*सनि मीमाघुरभलभशकपतपदोऽच इस् १७४ एषामच इस् भवति सनि सकारादौ परतः । मित्सति शतं । प्रमित्सति शत्रुं । मित्सते । प्रमित्सते । निमित्सते । अपमित्सते । दित्सति । दित्सते । धित्सति । आरिप्सते । आलिप्सते । शिक्षति । पित्सति । पित्सते । सकारादाविति किं ? पिपतिषति । सनीति किं ? दास्यति ।

राधो वधे ॥१७५॥ राधेर्वधार्थेऽचः इस् भवति सनि परे । प्रतिरित्सति चौरं । वध इति किं ? आरिरात्सति जिनं ।

आपज्ञप्यृधामीत् ॥१७६॥ एषामचः-ईत्वं स्यात् सनि परे । ईप्सति । ज्ञीप्सति । ईर्त्सति ।

दंभ इच्च ॥१७७॥ दंभेरच इत्वमीत्वं च स्यात् सनि परे । धिप्सति । धीप्सति ।

*वाऽन्मुचो धे: ॥१७८॥ धिसंज्ञकस्य मुचेरचः ओत्वं वा स्यात् सकारादौ सनि परतः । मोक्षते, मुमुक्षते वत्सः स्वयमेव । धेरिति किं ? मुमुक्षति कर्माणि मुनिः ।

*चस्याप् ॥१७९॥ चस्यौप् भवति सनि परे । मित्सतीत्यादि ।

हलोऽनादेः ॥ १८० ॥ अनादेर्हलश्चस्योप् भवति । जग्लौ । पपाठ । आट । आटतुः । तुत्रौकिषति ।

शरः खयि ॥१८१॥ शरश्चस्योप् भवति खयि परतः । चुश्च्योतिषति । पिस्पंदिषते । खयीति किं ? सस्नौ ।

मः ॥१८२॥ चस्य मादेशो भवति । पपौ । निन्ये । डुढौकिषते ।

उरः ॥१८३॥ चस्य ऋवर्णस्य अत्वं स्यात् । चक्रे । वव्रुते ।

ह्रयो जग् ॥१८४॥ ह्रश्चस्य जग् भवति । बभार । दधौ ।

स्तरश्चर् ॥१८५॥ स्तरश्चस्य चर् भवति । पफतुः । पफणुः । तिष्ठासति ।

+ष्ठिवष्ठो वा ॥१८६॥ ष्ठिवश्चस्य स्तरष्ठो वा भवति । टिष्ठेव । तिष्ठेव ।

कुहोश्चुः ॥ १८७ ॥ चस्य कवर्गहकारयोः चुत्वं भवति । चकतुः । जगाम । जक्ने । जहास ।

*यङ्यकवतेः ॥१८८॥ यङि चस्याऽकवतेः कुहोश्चुर्भवति । चोकूयते । चाखायते । जंगम्यते । जेह्रीयते । अकवतेरिति किं ? कोकूयते ।

*स्वपेरुणौ ॥१८९॥ स्वपेश्चस्य उर्भवति णौ परे । सुष्वापयिषति । सुष्वापयिषतः ।

*द्युतेरिः ॥१९०॥ द्युतेश्चस्य इर्भवति । दिद्युते । देद्युत्यते ।

व्यथो लिटि ॥१९१॥ व्यथश्चस्य लिटि परे इर्भवति । विव्यथे । विव्यथाते । विव्यथिरे ।

क्नितीणो दीः ॥१९२॥ इणश्चस्य दीर्भवति क्निति लिटि परतः । ईयतुः । ईयुः । क्नितीति किं ? इयाय । इययिथ ।

आघतः ॥१९३॥ चस्यादेरतः दीर्भवति लिटि परतः । आटिथ । आटतुः । आटुः । आदेरिति किं ? ददद्रे । दददाते । दददिरे ।

*नुक् ॥१९४॥ चस्य कृतदीत्वस्य नुगागमो भवति । आनंग । आनंगतुः । आनगुः । आनंज ।

अश्नोः ॥१९५॥ अश्नोतेश्चस्य कृतदीत्वस्य नुक् स्यात् । व्यानशे । व्यानशाते । व्यानशिरे । नियमार्थमिदं—अश्नोतेरेवाकारोको नुक् नान्यस्य । आदतुः । आदुः ।

भुवोऽत् ॥१९६॥ भवतेश्चस्य लिट्यत् भवति । बभूव । बभूवतुः । बभूवुः ।

निजामुच्येप् ॥ १९७ ॥ निजादीनामुचि परे चस्य एप् भवति। नेनेक्ति। वेवेक्ति।वेवेष्टि।

*भृञ्हाङ्माङामिः ॥१९८॥ एषां च इर्भवति उचि परे। बिभर्ति। जिहीते। मिमीते।

✓पोः ॥१९९॥ पृ ऋ इत्येतयोश्चस्य इर्भवति उचि परे। पिपर्ति। पिपृयात्।अपिपः। इयर्ति। इयृयात्। ऐयः।

सन्यतः॥२००॥ चस्यातः सनि परे इर्भवति। पिपक्षति। पिपठिषति। अत इति किं? तुष्टूषति।

ओःपुयण्ज्ये ॥२०१॥ चस्य उवर्णस्य पवर्गयण्जकारेषु अवर्णपरेषु परतः सनीत्त्वं स्यात्। पिपावयिषति। बिभावयिषति। मिमावयिषति। यियावयिषति। रिरावयिषति। लिलावयिषति। जिजावयिषति। पुयण्जीति किं? नुनावयिषति। ए इति किं? बुभूषति। ओरिति वचनं ज्ञापकं णौ स्थानिवद्भावस्य।

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥२०२॥ एषां अवर्णपरे याणि परतः चस्येत्वं स्यात् वा सनि परतः। शिश्रावयिषति। शुश्रावयिषति। सिस्रावयिषति। सुस्रावयिषति। दिद्रावयिषति। दुद्रावयिषति पिप्रावयिषति। पुप्रावयिषति। पिप्लावयिषति। पुप्लावयिषति। चिच्यावयिषति। चुच्यावयिषति।

*यङुपोरेप् यकिदाहाकः॥२०३॥ यङि यङुपि च परतःचस्य एप् भवति दीर्घ किदंत आकारांतं हाकं च वर्जयित्वा। नेनीयते। नेनयीति। बोभूयते। बोभवीति। बोभुज्यते। बोभुजीति पापठ्यते। पापठीति। पापच्यते। पापचीति। अकिदाहाक इति किं? यंयम्यते। यंयमीति। रंरम्यते। रंरमीति। तंतन्यते। तंतनीति। जहाति। आकारग्रहणं किं? जेहीयते।

नीग्वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां ॥२०४॥वंच्वादीनां यङुपोःपरतश्चस्य नीगागमो भवति। वनीवच्यते। वनीवंचीति। सनीस्रस्यते सनीस्रंसीति। दनीध्वस्यते। दनीध्वंसीति। बनीभ्रस्यते। बनीभ्रंसीति। चनीकस्यते। चनीकंसीति। पनीपत्यते। पनीपतीति। पनीपद्यते। पनीपदीति। चनीस्कद्यते।चनीस्कंदीति।

ङस्याऽतो नुक् ॥२०५॥ चस्य ङसंज्ञकांतस्याऽतो नुगागमो भवति यङुपोःपरतः।जंगम्यते। जंगमीति। बंभण्यते। बंभणीति।

जपजभदहदशभंजपशां ॥ २०६ ॥ जपादीनां चस्य यङुपोर्नुग् भवति। जंजप्यते। जंजपीति। जंजभ्यते। जंजभीति। दंदह्यते। दंदहीति। दंदश्यते। दंदशीति। बंभज्यते। बंभजीति। पंपश्यते। पंपशीति।

*चर्फलामुत्वाऽतः ॥२०७॥ चर् फल् फल इत्येतेषां च यङुपोर्नुग्भवति अतश्च उत्वं। चंचूर्यते। चंचुरीति। पंफुल्यते।पंफुलीति।

ति ॥२०८॥ तकारादौ परे तेषां अतः-उत्त्वं स्यात्। चूर्तिः। फुल्तिः। प्रफुल्ता लता।

रीगृत्वतां॥२०९॥ ऋकारवतां चस्य रीगागमो भवति यङि परतः। वरीवृत्यते। दरीदृश्यते। परीपृच्छ्यते।

रुक्रिक्चोपि ॥२१०॥ ऋत्वतां यङुपि चस्य रुक् रिक् रीक्चागमो भवति। चर्कर्ति। चरिकर्ति। चरीकर्ति।नर्नर्ति। नरिनर्ति।नरीनर्ति। वर्वर्ति। वरिवर्ति। वरीवर्ति। उपीति किं? नरीनृत्यते। ऋत्वतामिति किं? चाकर्ति।जागर्ति।

णौ कच्यऽनकूले सन्वत् ॥२११॥चस्य कच्परे णौ सनीव कार्यं भवत्यनकूले। सन्यत इति इत्वमुक्तं कच्यपि तथा। अचीकरत्। ओः पुयण्ज्ये इति। अबीभवत्। अलीलवत्। असिस्रवत्। असुस्रवत्। णाविति किं? अततक्षत्। कचीति किं? अहं पपच। अनकूल इति किं?

स्तनमाख्यत्—अतस्तनत् । अदधनत् ।

*घेर्डीरऽनजादेः॥२१२॥अनजादेर्घस्य घेर्डी-र्भवति घौ कच्परे अनक्ले । अजीहरत् । अचूचुषत् । घेरिति किम् ? अचिक्रजत्। अनजादे-रिति किं?प्रौर्णुनवत् । घाविति किं ? अररक्षत् ।

स्मृदृत्वरप्रथम्रदस्तृस्पशोऽत् ॥ २१३ ॥ एषां चस्यात् भवति कच्परे घौ परतः । सन्वद्भा-वापवादः । असस्मरत् । अददरत् । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्पशत् ।

वा वेष्टिचेष्ट्योः ॥२१४॥ एतयोश्चस्य कच्य-द्वा स्यात् । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

* गणश्चेः ॥२१५॥गणयतेश्चस्य कचि वा ई-र्भवति । अजीगणत् । अजगणत् । चकारादचीकथत् ।

इति जैनेंद्रव्यकरणे शब्दार्णवचंद्रिकायां वृत्तौ पंचमस्याध्यायस्य द्वितीयः पादः ॥२॥

## तृतीयः पादः ।

सर्वस्य द्वे॥१॥ सर्वस्येति द्वे इति च एतद् द्वितयमधिकृतं वेदितव्यं । के द्वे ये शब्दतो-ऽर्थतश्चांतरतमे । वक्ष्यति-वीप्सायामिति—ग्रामो ग्रामो रमणीयः ।

परो त्रिः॥२॥प्रकृतयोर्द्विरुक्तयोःपरोऽवयवो त्रिसंज्ञो भवति । माणवका३ माणवक । माणवक माणवक इदानीं ज्ञास्यसि जाल्म । त्रिप्रदेशाःन त्रेग्त्यादयः ।

*प्राग्भृशाऽभीक्ष्ण्याविच्छेदे ॥ ३ ॥ भृशा-दिष्वर्थेषु वर्तमानस्य पदस्य वाक्यस्य वा द्वे रूपे भवतः प्रागेव तरतमाद्युत्पत्तेः । लुनीहि लुनीहि इत्येवायं लुनाति । अधीष्वाधीष्वेत्येवाऽयमधीते । भुक्त्वा भुक्त्वा व्रजति, भोजं भोजं व्रजति । चरति चरति ब्रह्मचर्यं। प्रागिति किं ? पठति पठति तरां । प्राग्विति किम् ? लुनीहि ।

+ नानेवार्थाधिक्यानुपूर्व्ये ॥ ४ ॥ नानेवार्थे आधिक्ये आनुपूर्व्ये चार्थे द्वे स्तः । अस्मात्कार्षा-पणादिह भवद्भ्यां माषं माषं देहि । नानेति किं ? इह भवद्भ्यां माषं देहि । एवार्थ इति किं?एकं द्वौ त्रीन् वा माषान्देहि । नमो नमः । कन्या कन्या दर्शनीया । ज्येष्ठं ज्येष्ठं प्रवेशय । मूले मूले स्थूलाः । अग्रे अग्रे सूक्ष्माः ।

+ चापले ॥ ५ ॥ चापलेऽर्थे द्वे भवतः। अहि-रहिः । बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्या गच्छति। लघु पलायध्वं लघु पलायध्वं । पुनःप्रयोगात् त्रिरपि प्रयोगः । अहिरहिरहि ।

+ इतरडतमयोः समानां स्त्रीभावे ॥ ६ ॥ समानां समत्वेन विवक्ष्यमाणानां इतरडतमांतस्य द्वे स्तः स्त्रीलिंग भावे । उभाविमावाढ्यौ कतरा कतरा अनयोराढ्यता । कतमा कतमा अनयोरा-ढ्यता । इतरडतमयोरिति किं ? उभाविमावाढ्यौ कानयोराढ्यता । समानामिति किं ? आढ्योऽयं कतरास्याढ्यता । स्त्रीति किं ? उभाविमावाढ्यौ कतरोऽनयोर्विभवः । भाव इति किं?द्वौ इमौ लक्ष्मी-वंतौ । कतराऽनयोर्लक्ष्मीः ।

* पूर्वप्रथमस्याऽन्यातिशये ॥ ७ ॥ पूर्व-प्रथमयोर्द्वे भवतःअन्यस्मादतिशयार्थे । पूर्वं पूर्वं पुष्यंति । प्रथमं प्रथमं पच्यंते । अन्यग्रहणं किं? पूर्वतरं पुष्यंति । प्रथमतरं पच्यंते ।

× प्रो पोत्समोंऽघ्रिपूर्तौ ॥ ८ ॥ एषां द्वे स्तः अंघ्रिपूर्त्यर्थे ।

प्रप्रणम्य जिनं भव्यः संसंश्रित्य तपः परम् ।
उपोपपद्यते श्रेय उदुत्तममहोदयः ॥

*सामीप्येऽधोऽध्युपरि ॥ ९ ॥ एषां द्वे स्तः सामीप्येऽर्थे । अधोऽधो नरकाणि।अध्यधि दुःखानि। उपर्युपरि स्वर्गपटलानि । सामीप्य इति

किं ? उपरि चन्द्रमाः ।

* वाक्यादेर्बोध्यस्य कोपाऽसूयाऽसंमतौ ॥ १० ॥ वाक्यादेर्बोध्यस्य द्वे स्तःकोपाद्यर्थेषु । माणवका३ माणवक । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म । माणवका ३ माणवक । वाक्यादेरिति किं ? शोमनः खल्वसि माणवक । बोध्यस्येति किं?उदारो देवदत्तो ददाति साधुभ्यः। कोपादिष्विति किं?देवदत्त गामभ्याज शुक्लां दंडेन।

*वीप्सायां ॥ ११ ॥ वीप्सार्थे द्वे भवतः । वृक्षं वृक्षं सिंचति।कूपे कूपे जलं।देशे देशे सुभिक्षः।

एको बवत् ॥ १२ ॥ एकशब्दः वीप्सायां द्विरुक्तो बसवद्भवति । सुबुप्पुंवत्भावौ प्रयोजनं । एकैको भुंक्ते । एकैका याति ।

×द्वंद्वं वा ॥ १३ ॥ वीप्सार्थे द्विशब्दस्य सुबंतस्य द्वंद्व वा निपात्यते । द्वंद्वं तिष्ठतः । द्वौ द्वौ तिष्ठतः । द्वंद्वं कृतं । द्वाभ्यां द्वाभ्यां कृतं ।

* रहस्यमर्यादोक्तिव्युत्क्रांतियज्ञपात्रप्रयोगे ॥ १४ ॥ रहस्याद्यर्थेषु सुबंतस्य द्विशब्दस्य नित्यं द्वंद्वमिति निपात्यते । द्वंद्वं मंत्रयते । आसप्तमनरकाद्धोऽधो द्वंद्वं नरकपटलानि हीनानि । द्वंद्वं व्युत्क्रांताः।पृथगवस्थिता इत्यर्थः । द्वंद्वं यज्ञपात्राणि प्रयुनक्ति ।

+ ख्यातेऽभिव्यक्ते ॥ १५ ॥ ख्यातेऽभिव्यक्ते अत्यंतसाहचर्य्येऽर्थे द्वंद्वं निपात्यते । द्वंद्वं नारदपर्व्वतौ । द्वंद्वं रामलक्ष्मणौ । ख्यात इति किं ? द्वौ जिनदत्तगुरुदत्तौ । अभिव्यक्त इति किं ? द्वौ युधिष्ठिरार्जुनौ ।

* आबाधे ॥ १६ ॥ आबाधे पीडायां द्वे भवतः । बवच्च कार्यं । गतगतः । नष्टनष्टः । पतितपतितः । गतगता । नष्टनष्टा ।

* बवत् ॥१७॥ उत्तरे द्वित्वे बसस्येव कार्य्यं भवति । इत्येषोऽधिकारो ज्ञेयः।तत्रैवोदाहरिष्यामः।

प्रकारे गुणोक्तेर्वा ॥१८॥ प्रकारेऽर्थे गुणोक्तेर्द्वेवा स्तः बवच्च कार्यं । पटुप्रकारः पटुपटुः । पटुपट्वी । मृदुमृदुः । मृदुमद्वी। कालककालिका। पंडितपंडितः । प्रकार इति किं ? शुक्लः । गुणोक्तेरिति किं ? गौर्वाहीकः । वाग्रहणात्पटुजातीयः । मृदुजातीयः ।

प्रियसुखस्याऽकृच्छ्रे ॥ १९ ॥ प्रियसुखयोरकृच्छ्रेऽर्थे वा द्वे स्तः । प्रियप्रियेण ददाति । प्रियेण ददाति । सुखसुखेन,सुखेनाधीते जैनेंद्रं । अकृच्छ्र इति किं ? प्रियः पुत्रः । सुखो रथः । सर्व्वे यांतु यथायथमिति झिसंज्ञकं यथास्वमित्यस्मिन्नर्थे ।

परेर्वर्जने ॥ २० ॥ परेर्वा द्वे भवतः वर्जनेऽर्थे । परिपरि त्रिगर्तेभ्यो वृष्टो देवः । परित्रिगर्तेभ्यो वृष्टो देवः।वर्जन इति किं?ओदनं परिषिंचेति।

पदस्य ॥ २१ ॥ पदस्येत्ययमधिकारो वेदितव्यः आशास्त्रपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

वाक्यस्य ॥ २२ ॥ अयमप्यासिद्धाधिकारात् ज्ञातव्यः वक्ष्यति-एकस्य तेमे" धर्मस्तेदीयते । धर्मो मे दीयते । वाक्यस्येति किं?ओदनं पच । तव भविष्यति मम भविष्यति ।

पदादऽपादादौ ॥ २३ ॥ पदादित्यपादादाविति च द्वयमधिकृतं वेदितव्यं । वक्ष्यति— बहोर्वसस् । धर्मो वो रक्षतु । पदादिति किं ? युस्मान् धर्मो रक्षतु । अपादादाविति किं ? शांतिनाथो जिनः सोऽस्तु युष्माकमघशांतये । येन संसारतो भीतिरस्माकमिह नाशिता ।

युष्मदस्मदोऽविभ्रास्वस्य वाम्नौ ॥ २४ ॥ वाक्यावयवात्पदात्परयोरपादादौ वर्त्तमानयोः युष्मदस्मदोः अप् इप् ता इत्येतासु स्थितयोः वाम्नौ इत्येतावादेशौ भवतः । ज्ञानं वो दीयते । शीलं नौ दीयते । ज्ञानं वो रक्षतु । शीलं नौ रक्षतु । ज्ञानं वां स्वं । शीलं नौ स्वं ।

अविशालस्येति किं ? ज्ञानं युवाभ्यां कृतं । आवाभ्यां कृतं । समग्रहणं चूयमाणविभक्त्यर्थं इह मा भूत् । इति युष्मदुपाध्यायो मृते इत्यस्मदुपाध्यायो मृते ॥

बहोर्वस्नसू ॥ २५ ॥ अविशालबहुतयोःतयोर्वस्नसौ स्तः।ज्ञानं वो दीयते । शीलं नो दीयते । ज्ञानं वो रक्षतु । शीलं नो रक्षतु । ज्ञानं वः स्वं । शीलं नः स्वं ।

एकस्य तेमे ॥ २६ ॥ असैकांतयोस्तयोस्ते मे इत्येतावादेशौ भवतः । ज्ञानं ते दीयते । शीलं मे दीयते । ज्ञानं ते स्वं । शीलं मे स्वं ।

त्वामेपः ॥ २७ ॥ इबेकांतयोस्तयोः त्वा मा भवतः । मल्लिनाथस्त्वा रक्षतु । मुनिसुव्रतो मा रक्षतु ॥

न चवाहाऽहैवयोगे ॥ २८ ॥ चादिभिर्योगे तयोः वाम्नावादयो न भवंति । ज्ञानं तुभ्यं च दीयते । मह्यं च दीयते । युवाभ्यां च दीयते । आवाभ्यां च दीयते । युष्मभ्यं च दीयते । अस्मभ्यं च दीयते । ज्ञानं त्वां च पातु । मां च पातु । युवां च पातु । आवां च पातु । युष्मांश्च पातु । अस्मांश्च पातु । ज्ञानं तव च स्वं । ज्ञानं मम च स्वं । युवयोश्च स्वं । आवयोश्च स्वं । युष्माकं च स्वं । अस्माकं च स्वं । ज्ञानं तुभ्यं वा दीयते । मह्यं वा दीयते । तुभ्यं ह दीयते । मह्यं ह दीयते । तुभ्यमह दीयते । मह्यमह दीयते । तुभ्यमेव दीयते । मह्यमेव दीयते । योगग्रहणं किं ? ज्ञानं च वःस्वं । शीलं च वः स्वं ।

दृश्यर्थैश्चिंतायां ॥ २९ ॥ दृश्यर्थैर्भुमिश्चिंतायां वर्तमानैर्योगे तयोर्यदुक्तं तन्न भवति । ज्ञानं तुभ्यं दीयमानं संदृश्यागतो जनः । मह्यं दीयमानं संदृश्यागतो जनः । जनः त्वां समीक्ष्यागतः । मां समीक्ष्यागतः । जनस्तव कार्यमालोचयति । मम कार्यमालोचयति । दृश्यर्थैरिति किं ? जनो वो मन्यते । चिंतायामिति किं ? जनो नः पश्यति ।

वाऽनन्वादेशे ॥ ३० ॥ तयोर्वाम्नावादयो वा भवंत्यनन्वादेशे । धनं वां दीयते, युवाभ्यां दीयते । ज्ञानं नौ दीयते, आवाभ्यां दीयते । धर्मो वां पातु, युवां पातु । जिनो नौ पातु, आवां पातु । धर्मो वां स्वं, युवयोः स्वं । धर्मो नौ स्वं, आवयोः स्वं । धर्मो वो दीयते । युष्मभ्यं दीयते । नो, अस्मभ्यं दीयते । धनं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । जिनस्त्वा पातु, त्वां पातु । मा पातु, मां पातु।अनन्वादेश इति किं ? यूयं विनीतास्तद्वो गुरवो मानयंति । वयं शीलवंतः तन्नो गुरवो मानयंति । पूर्वं विनीता।दिमादिश्य पश्चादिदमादिश्यते इत्यन्वादेशोऽत्र।

*पदाद्वाचा:॥३१॥पदात्परं यद्युक्तं तस्मात् परवोर्वाम्नावादयो वा भवंति । विनीतस्त्वं आचार्येण ज्ञानं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्यं दीयते । एवं सर्वत्र ।

* बोध्यं प्रागेव ॥ ३२ ॥बोध्यांतं पदं ताभ्यां पूर्वं नेव–नास्तीव भवति । देवदत्त तुभ्यं दीयते। मह्यं दीयते । त्वां रक्षतु । मां रक्षतु।बोध्यमिति किं ? जिनो वां पातु । प्रागिति।किं! मयैतत्सर्वमाख्यातं युष्माकं मुनिपुंगवाः ।

* नैकार्थे बोध्ये जातिः॥ ३३ ॥ एकार्थे बोध्यांते परे जातिःसामान्यवचनं बोध्यांतं नास्तीव न भवति । क्षत्रिय श्रेणिक त्वार्हन् पातु । आशीर्दीयते ते आयुर्वर्द्धतां । एकार्थ इति किं ? क्षत्रिय ब्राह्मण युवां धर्मो दीयते । बोध्ये इति किं ? क्षत्रिय धनवान् मे त्वं देहि । जातिरिति किं ? श्रेणिक क्षत्रिय तुभ्यं धर्मो दीयते ।

*वा बहौ ॥ ३४ ॥ एकार्थे बोध्ये बहुते वि-

शेषवचने आदिः वोच्यांता प्राग्नेव वा भवति। देवाःशरण्याः वो दीयंते, युष्मभ्यं दीयंते। नो दीयंते। अस्मभ्यं दीयंते। देवाः शरण्याः ते भवंतु, तव भवंतु। मे भवंतु, मम भवंतु।

पूर्वत्राऽसिद्धं ॥ ३५ ॥ पूर्वत्रेति च असिद्धमिति च एतत् द्वितयमाधिकृतं ज्ञातव्यं आशास्त्रपरिसमाप्तेः। पूर्वस्मिन् शास्त्रे सार्द्धद्विपादचतुरध्याये कर्त्तव्ये परं शास्त्रं सार्द्धपादमसिद्धं भवति। इत उत्तरं च पूर्वस्मिन् योगे कर्तव्ये परः परो योगोऽसिद्धो भवति। त आहुः। द्वा इमौ। यवलस्याऽसिद्धत्वात् ही-एपौ न स्तः। अमुष्मै। अमुष्मात्। उत्वस्यासिद्धत्वात् स्मायादयो भवंति। पचन्। नखे तखमसिद्धं।

शुष्किका यत्सुशर्माणः क्षामिमानौजढत्सुगीः। पकमाक्षीण्यु गोलिण्मान् कुर्वंति पिपठीः सुभुत्।

नखं सुब्विधिकृत्तुकि ॥ ३६ ॥ सुपः सुपि च विधि कृति तुकं च प्रति नखमसिद्धं भवति। राजभिः। राजभ्यां। राजभ्यः। ऐन्द्रीः एश्च न भवति। वृत्रहभ्यां।वृत्रहभिः। नखाऽसिद्धत्वाएुग्न भवति। सुब्विधिकृत्तुकीति किं? राजीयति। वृत्रहच्छत्रं। नियमोऽयं—एतयोरेव नखमसिद्धं नान्यत्र। हस्त्यश्वं। राजावला।

न मु टाविधौ ॥ ३७ ॥ टास्थाने टानिमित्ते च विधौ कर्तव्ये मुभावोऽसिद्धो न स्यात्। अमुना मुत्वस्य सिद्धत्वात् सुलक्षणो नाभावः सुप्यदीत्वं च सिद्धं।

+ वादेशस्त्यचे ॥ ३८ ॥ त्यविधौ षत्वविधौ च कर्तव्ये तसंज्ञकादेशोऽसिद्धो न भवति। क्षीवेण तरति—क्षीविकः। वृक्ण्यः। वृक्णवान्। त्यच इति किं? क्नः। क्नवान्।

+ षो ईणहुकोः ॥ ३९ ॥ रेखत्वे ढे सुपि च कर्तव्ये षविधिरसिद्धो न भवति। सुतषा ३ अत्र। अम्ना ३ छत्रं।

÷ ष्यो नुस्वारे ॥ ४० ॥ ष्यविधिरनुस्वारे कर्तव्ये असिद्धो न भवति। नृण्वाहि।

÷ षतुक्त्वुर्द्वित्वे ॥ ४१ ॥ षत्वं तुकत्त्वुत्वं च द्वित्वे सिद्धं न भवति। विषुषुपतुः।उचिच्छिषति।

+ढादिर्द्वित्वे ॥ ४२ ॥ ढत्वादयो द्वित्वे कर्तव्ये सिद्धा न भवंति। द्रोढा। द्रोढा। द्रोग्धा द्रोग्धा। गलो गलः। गरो गरः।

* नो मृदंते खं ॥४३॥ मृदोऽन्ते वर्तमानस्य नकारस्य खं भवति। राजा। राजभ्यां। राजत्वं। राजता। राजतरः। राजतमः। मृदंत इति किं? देवान्वंदेरन्। नडाभ्यां। वनाभ्यां। पदस्येति किं? राजानौ। राजनः।

न कौ ॥ ४४ ॥ पदांतस्य नकारस्य खं न स्यात् कौ परे। हे राजन्। हे तक्षन्।

नपि वा ॥ ४५ ॥ नपुंसके नखं न स्याद्वा कौ परतः। हेचर्मन्। हे चर्म।

ममोङ्झयो मतोर्वोऽयवादिभ्यः ॥ ४६ ॥ मकारांतादवर्णांतान्मकारोङोऽवर्णोङः झयंताश्चोत्तरस्य मतोर्वत्वं स्यात् यवादीन्विहाय। किम्वान्। इदम्वान्। शीलवान्। गुणवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। उदश्वित्वान्। ममोङ्झय इति किं? धीमान्।अयवादिभ्य इति किं? यवमान्। उर्मिमान्। भूमिमान्। चारुमतीत्यादि।

स्त्रौ ॥ ४७ ॥ स्त्रुविषये मतोर्वो भवति। कपीवती। ऋषीवती। अहीवती।

चर्मण्वत्यष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वत्॥४८॥ एते निपात्यंते स्त्रौ। चर्मण्वती नदी। नकारस्य खापवादो णत्वं निपात्यते। अष्ठीवान् जंघोरुसंधिः। अस्थिशब्दस्य अष्ठीभावो निपात्यः। चक्रीवान् रासभार्थे चक्रस्य चक्रीभावो निपात्यते। कक्षी-

वान् । ऋषिहस्त्यर्थे कक्षाशब्दस्य कक्षीभावः । लमण्वान् । मंत्रिपर्वताऽर्थे लवणस्य लमण्भावः । ताविति किं ! चर्मवती । अस्थिमान् । चक्रवान् । कक्षावान् । लवणवान् ।

* अब्धौ चोदन्वान् ॥ ४९ ॥ अब्धौ सौ च उदकस्य उदन्मतौ निपात्यः । उदन्वान् घटो मेघश्च । उदन्वान् समुद्रः ऋषिः, आश्रमश्च । उदकवानन्यत्र ।

राजन्वान्सौराज्ये ॥ ५० ॥ सौराज्येऽर्थे राजन्वानिति निपात्यते । राजन्वान् देशः । राजन्वती पृथ्वी । सौराज्य इति किं ! राजवान् देशः ।

कृपो रो लोऽकृपादीनां ॥५१॥ कृपेः रेफस्य लत्वं भवति कृपादींस्त्यक्त्वा । कल्पते । क्लृप्तः । क्लृप्तवान् । क्लृप्यते । कल्पकः । अकृपादीनामिति किं ! कृपा । कृपणः । कृपाणः । कृपीटः । कर्पूरः । कर्प्पटः । कर्परः ।

गे रयौ ॥ ५२ ॥ गेः रेफस्य लादेशो भवत्यऽयतौ परतः । ग्लायते । पलायते । अयाविति किं ! प्रायः ।

× निर्दुःप्रतेर्वा ॥ ५३ ॥ एषां रेफस्याऽयो लो वा भवति । निलयते । निरयते । दुर्लयते । दुरयते । प्लत्ययते । प्रत्ययते ।

परेर्घाकयोगे ॥ ५४ ॥ परेः रेफस्य लो वा भवति घादौ परे । पलिघः । परिघः । पल्यंकः । पर्यंकः । पलियोगः । परियोगः ।

+ऋषिकिडादीनां॥५५॥ऋफिडादीनां रेफस्य ऋकारस्य च लो वा स्यात्।लृफिडः।ऋफिडः।लोमानि। रोमाणि । कल्मे । कर्म । अलं । अरं । ऋफिलः । ऋफिडः । चूडा । चूला । गुलं । गुडं । पीला । पीडा । जलं । जडं ।

* ग्रोऽचि ॥५६॥ गिरतेः रेफस्य लो वा अच्यवादौ परतः । गिलति । गिरति । गालकः । गारकः । गलनं । गरणं । अचीति किं ! गीर्णं ।

* याङि ॥५७॥ ग्रो रेफस्य यङि लो भवति । निजेगिल्यते । निजेगिल्येते । निजेगिल्यंते ।

* गरगलं विषाऽप्यंगे ॥ ५८ ॥ अनयोर्विषे प्राण्यंगे च अलत्वलत्वे निपात्येते।गरो विषं।गलःकंठः।

स्फांतस्य सं ॥ ५९ ॥ स्फसंज्ञकांतस्य सं भवति । भवान् । विद्वान् । श्रेयान् । पुंस्वां । पदस्येति किं ! भवंतौ ।

रात् सः ॥ ६० ॥ रेफादुत्तरस्य सकारस्य सं भवति । कटचिकीः । जिहीः । मातुः । नियमार्थोऽयं योगः । रेफात्सस्यैव सं नान्यस्य । ऊर्क् । न्यमार्ट् ।

धि वा ॥६१॥ धकारादौ परतः ससंबा स्यात्। आध्वं । आद्ध्वं । आशाध्वं । आशाद्ध्वं । चकाधि । चकाद्धि ।

झलो झलि ॥ ६२ ॥ झलः परस्य सकारस्य झलि परे सं भवति । अभैत्तां । अभित्त । अभित्थाः । अछित्त । अछित्थाः । झल इति किं ! अमंस्त । झलीति किं ! अभैत्सं ।

प्राद्गोः ॥ ६३ ॥ प्रांताद् गोः परस्य सकारस्य सं स्यात् झलि परे । अकृत । अकृथाः । प्रादिति किं ! अप्रोढ । अप्योढ । गोरिति किं ! अलाविष्टां ।

स्फादेः स्कोऽंते च ॥ ६४ ॥ सकारककारयोः स्फादौ वर्तमानयोः सं भवति झलि पदांते च । लग्नः । लग्नवान् । साधुलक् । तट् । तष्टवान् । काष्ठतट् । आचष्ट । स्फादेरिति किं ! न्यस्तः । शक्तः । अंते चेति किं ? लज्जिता । तक्षिता ।

चोः कुः ॥ ६५ ॥ चवर्गस्य कवर्गादेशो भवति झल्यंते च । वक्ष्यति । वक्ता । वाक् । पक्ता । पक्तुं । पक्तव्यं । ओदनपक् ।

हो ढः ॥ ६६॥ हकारस्य ढकारादेशो भवति

झल्यंते च । लेढा । लेढुं । लेढव्यं । गुडलिट् । वोढा । गुणवट् ।

दादेर्घोर्घः ॥ ६७ ॥ दकारादेर्घो हस्य घकारादेशो भवति झल्यंते च । दग्धा । दग्धुं । दग्धव्यं । कर्मेधनधक् । दादेरिति किं ? परीषहसट् । घोरिति किं ? दामलिट् ।

वा द्रुहमुहष्णुहष्णिहां ॥ ६८ ॥ एषां हकारस्य घो वा स्यात् झल्यंते च । द्रोग्धा । द्रोग्धुं । द्रोग्धव्यं । ध्रुक् । द्रोढा । द्रोढुं । द्रोढव्यं । ध्रुट् । मोग्धा । मुक् । मोढा । मुट् । स्नोग्धव्यं । स्नुक् । स्नोढव्यं । स्नुट् । स्नेग्धा । स्निक् । स्नेढा । स्निट् ।

नहो धः ॥ ६९ ॥ नहेर्हस्य धादेशो भवति झल्यंऽते च । संनद्धः । संनद्धवान् । नद्धा । नद्धुं । नद्धव्यं । परीणत् ।

आहस्थः ॥७० ॥ आहो हस्य थो भवति झलि । सत्यमात्थ त्वं ।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ७१ ॥ व्रश्चादीनां छकारशकारयोश्च झल्यंते च षो भवति । व्रष्टा । वृष्टुं । व्रष्टव्यं । कर्मवृट् । भ्रष्टा । भ्रष्टुं । भ्रष्टव्यं । धानाभृट् । स्रष्टा । स्रष्टुं । स्रष्टव्यं । तीर्थसृट् । मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं । कर्ममृट् । यष्टा । यष्टुं । यष्टव्यं । देवेट् । राष्टिः । सुराट् । भ्राष्टिः । विभ्राट् । प्रष्टा । प्रष्टुं । प्रष्टव्यं । धर्मप्राट् । वेष्टा । वेष्टुं । वेष्टव्यं । विट् ।

+परिव्राट् ॥७२॥ परेर्व्रजेर्डत्वं निपात्यते पदांते ।

एकाचो बशो भष् झषः स्ध्वोः ॥ ७३ ॥ धोरेकाचो झषंतस्य योऽवयवो बश् तस्य भष् स्यात्, सकारे ध्वे च पदांते च । भोत्स्यते । अभुद्ध्वं । धर्मभुत् । धोक्ष्यते । अधुग्ध्वं । गोधुक् । एकाच इति किं ? दामलिड्वतीति किप्-दामलिट् । बश इति किं ? क्रोत्स्यति । झष इति किं ? दास्यसि । स्ध्वोरिति किं ? बोद्धा ।

धः ॥ ७४ ॥ दधातेर्झषंतस्य बशो भष् स्यात् झलि परतः । धत्से । धत्त । धद्ध्वे । धत्थः ।

+यङोऽन्येषां ॥७५॥ दधातेर्यङ्लुबंतस्य बशो भष् भवति झल्यन्येषामाचार्याणां मतेन । धात्तः । धात्थः । दात्तः । दात्थः ।

*धेस्तथोः ॥ ७६॥ धेटो यङ्लुबंतात्परयोस्तथोरेकेषां मतेन भष्स्यात् । दाद्धः । दाद्धः । दात्तः । दात्थः ।

* अधः ॥ ७७ ॥अदधातेः झषंतात्तथोर्भष् स्यात् । लब्धा । लब्धुं । लब्धव्यं । अलब्धं । अलब्धाः । दोग्धा । दोग्धुं । दोग्धव्यं । अध इति किं ? धत्तः । धत्थः ।

झलो जश् ॥ ७८ ॥ झलः पदांते वर्तमानस्य जश् भवति । सुवागाचार्य्यः । तत्वविधाति । अजन । त्रिष्टुब् ।

षढोः कः सि ॥ ७९ ॥ षकारढकारयोः ककारादेशो भवति सकारादौ परतः । पक्ष्यति । तोक्ष्यति । लेक्ष्यति । वक्ष्यति । सीति किं?द्वेष्टि।

*द्राणस्य तो नोऽमत्पूमूर्छो ॥ ८० ॥ दकाररेफाभ्यां परस्य तसंज्ञकस्य तकारस्य नत्वं भवति दस्य च पूर्वस्य–मदादींस्त्यक्त्वा । भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । गूर्णः। गूर्णवान् । चू आचरणे। चीर्ण्णः । चीर्ण्णवान् । द्रादिति किं? मुक्तः । मुक्तवान् । तस्येति किं ? भित्तिः । अमत्पूमूर्छामिति किं ? मत्तः ।मत्तवान्। पूर्तः। पूर्तवान् । मूर्तः । मूर्तवान् ।

स्फादेरोता धोर्यण्वतोऽध्याख्यः ॥८१॥ स्फादेर्ध्याख्यावर्जितादाकारांताद्धोर्यण्वतः परस्य तसकारस्य नो–भवति । संस्त्यानः । संस्त्यानवान् । निद्राणः । निद्राणवान् । म्लानः ।

ध्यानवान् । ष्ट्यादेरिति किं ? वातः । वातवान् । आत इति किं ? च्युतः । च्युतवान् । घोरिति किं ? निर्वातः । वण्वतः इति किं ? प्सातः । अपास्य इति किं ? ख्यातः । ख्यातवान् । स्त्यातः । स्त्यातवान् ।

ल्वादेः ॥ ८२ ॥ ल्वादिभ्यः ततस्य नकारादेशो भवति । लूनः । लूनवान् । जीनः । जीनवान् । धूनः । लीनः ।

ऋतश्च क्तेः ॥ ८३ ॥ ऋकारांतेभ्यो ल्वादिभ्यश्च क्तेस्तकारस्य नो भवति । कीर्णिः । धूनिः । लूनिः ।

ओदितः ॥ ८४ ॥ ओकारेतस्ततकारस्य नो भवति । पीनः । पीनवान् । मग्नः । मग्नवान् ।

* क्षयः ॥ ८५ ॥ कृतदीत्वात् क्षेस्तकारस्य नो भवति । क्षीणः । क्षीणवान् । दीत्वनिर्देशः किं ? क्षितोऽसि जाल्म ।

* त्राघ्राघ्राह्रीनुदोंद्राविंत्तर्वा ॥८६॥ एभ्यस्तत कारस्य नो वा स्यात् । त्राणः । त्रातः । त्राणवान् । त्रातवान् । घ्राणः । घ्रातः । घ्राणवान् । घ्रातवान् । घ्राणः । घ्रातः । घ्राणवान् । घ्रातवान् । ह्रीणः । ह्रीतः । नुन्नः । नुत्तः । समुन्नः । समुत्तः । विन्नः । वित्तः ।

श्यायिविदिवोऽस्पर्शापादानजये ॥ ८७ ॥ एभ्यः ततकारस्य नो भवत्यस्पर्शादौ । प्रतिक्षीनः । समक्नौ । शकुनेः पक्षौ । आद्यूनः । अस्पर्शादाविति किं ? शीतो वातः । उदकमुदकं कूपात् । द्यूतं वर्तते ।

प्वो नाशे ॥ ८८ ॥ पुनातेस्ततकारस्य नो भवति नाशेऽर्थे । पूना यवाः । नाश इति किं ? पूतं धनं ।

सेः कर्मकर्तरि ग्रासे ॥ ८९ ॥ सिनोतेस्ततस्य नो भवति ग्रासे कर्मणि कर्तृत्वेन विवक्षिते । सिनो ग्रास स्वयमेव । कर्मकर्तरीति किं ? सितो गलो ग्रासेन । ग्रास इति किं ? सिता पाशेन सूकरी ।

निर्व्वाणोऽवाते ॥ ९० ॥ निस्पूर्वाद्वातेस्ततस्य नो निपात्यतेऽवातेऽर्थे । निर्वाणो मुनिः । अवात इति किं ? निर्वातो वातः ।

दुग्वो दीश्च ॥ ९१ ॥ दुगुभ्यां ततकारस्य नो भवति तत्सन्नियोगे दीश्च । दूनः । दूनवान् । गूनः । गूनवान् वत्सः ।

शुष्पचोः क्वौ ॥ ९२ ॥ आभ्यां ततकारस्य ककारवकारादेशौ स्तः । शुष्कः । शुष्कवान् । पक्वः । पक्ववान् ।

क्षो मः ॥ ९३ ॥ क्षायतेस्ततकारस्य मादेशो । भवति । क्षामः । क्षामवान् ।

प्रस्त्यो वा ॥ ९४ ॥ प्रस्त्यायतेस्ततकारस्य मो वा स्यात् । प्रस्तीतः । प्रस्तीमः । प्रस्तीतवान्, प्रस्तीमवान् । प्रपूर्वः किं ? संस्त्यानवान् ।

फुल्लः ॥९५ ॥ फुलेर्विसरणार्थात्ततस्य लो निपात्यते । फुल्लो वनस्पतिः ।

समुदः ॥ ९६ ॥ समुद्भ्यां परः फुल्लो निपात्यः । संफुल्लः । संफुल्लवान् । उत्फुल्लः । उत्फुल्लवान् । नियमार्थमिदं-समुद्भ्यामेव नान्यस्माद्वः । प्रफुल्ता लता ।

क्षीबकृशोल्लाघाः ॥ ९७ ॥ क्षीबादीनां त शब्दस्य लं निपात्यं । क्षीबः । क्षीबवान् । कृशः कृशवान् । उल्लाघः । उल्लाघवान् ।

*भित्तं शकलं ॥ ९८ ॥ भिदेः क्तस्य नत्वाभावो निपात्यः शकलार्थश्चेत् । भित्तं । दारुखंडमित्यर्थः । भिन्नमन्यत् ।

*वित्तं ख्यातार्थे ॥ ९९ ॥ कामार्थाद्विदेःक्तस्य नत्वाभावो निपात्यः ख्यातपर्यायोऽर्थपर्यायो वा भवति चेत् । वित्तः विख्यातः । वित्तं धनं । विन्नमन्यत् ।

क्लिशस्य क्तः ॥१००॥ क्लिश्नो यस्य तस्य धोः

कुत्वं भवति । हृदयस्पृक् । तादृक् । अस्मादृक् । त्यग्रहणात्सहसृहगिति सिद्धं ।

* नशेर्वा ॥ १०१ ॥ नशेः धोः पदस्य कुर्वा भवति । जीवनक् । जीवनट् ।

ससजुषो रिः ॥१०२॥ सकारस्य पदांतस्य सजुषश्च रिर्भवति । जिनः । संयतः । सजूः ।

अह्नः ॥१०३॥ अहनित्यस्य पदस्य रिर्भवति । अहोभ्यां । अहोभिः । दीर्घाहाः कालः ।

× रूपरात्रिरथांतरे ॥ १०४ ॥ अह्नो रिर्भवति रूपादिषु परतः । अहोरूपं गतं । अहोरात्रिरागता । अहोरथांतरं । एष्विति किं? अहर्ददाति ।

रोऽसुपि ॥ १०५ ॥ अह्नो रेफादेशो भवति असुपि परे । अहः । अहरेति । अहर्गच्छति । असुपीति किं ? अहोभ्यः ।

+ वाऽहर्पत्यादिषु ॥१०६॥ अहरादीनां पत्यादिषु रो वा स्यात् । अहर्पति । अहःपतिः । गीर्पतिः । गीःपतिः । प्रचेता राजः। प्रचेतो राजः

वसुसंसुध्वंस्वनडुहां दः ॥ १०७॥ वस्वादीनां सकारहकारयोः दकारादेशो भवति । सुविद्वत् । सुविद्वद्भ्यां । उखास्रत् । पर्णध्वत् । उखास्रद्भ्यां। पर्णध्वद्भ्यां । स्वनडुत्। स्वनडुद्भ्यां। स्वनडुद्भिः । पदस्येति किं ? विद्वस्यति ।

तिपि धोः ॥१०८॥ धोः सकारस्य तिपि दो भवति । अचकाद्भवात् । अन्वशाद्भवान् ।

सिपि रिर्वा ॥१०९॥ धोः सकारस्य वा रिर्भवति सिपि परतः । पक्षे दश्च । अचकास्त्वं, अचकात्त्वं । अन्वशास्त्वं, अन्वशात्त्वं ।

दः ॥११०॥ धोर्दकारस्य रिर्वाभवति सिपि। पक्षे दः । अभिनस्त्वं । आभिनत्त्वं ।

मो नः ॥ १११ ॥ धोर्मकारस्य नो भवति । प्रशान् । प्रशान् । प्रशान्भ्यां । प्रतान् । प्रतान्भ्यां ।

म्वोः ॥ ११२ ॥ धोर्मकारस्य नादेशो भवति मकारवकारयोः । अंगन्मि । अंगन्वः। अंगन्मः।

दी र्वोरिगुकः ॥ ११३ ॥ रेफवकारांतस्य धोरिकः उकः दीर्भवति । गीः । धूः । पूः। आशीः । गीर्भ्यां । धूर्भ्यां । धोरिति किं? मुनिः ।

हल्यभकुर्छुरः ॥ ११४ ॥ हलि परे रेफवकारांतस्य भ कुर्छुर्वर्जितस्य धोरिगुकः दीर्भवति । गीर्णः । शीर्णः । विस्तीर्णः । दीव्यति । सीव्यति । अभकुर्छुर इति किं ? धुर्यः । दिव्यः । कुर्यात् । छुर्यात् ।

उकः ॥११५॥ उक्भूतयो रेफवकारयोरिगुकः दीर्भवति । कूर्दते । तूर्वति । कीर्तयति । प्रतिदीव्ना । प्रतिदीव्ने ।

दादुर्दो मोऽदसोऽसेः ॥ ११६ ॥ अदसोऽसकारस्य दात्परस्य वर्णमात्रस्य उत्त्वं दस्य च मत्वं स्यात् । अमु । अमी । अमून् । अमूभ्यां । असेरिति किं ? अदस्यति । अदः कुलं ।

×वाऽद्रेः ॥ ११७ ॥ अद्र्यंतस्याऽदसो दात्परस्य वर्णमात्रस्योत्वं दस्य च मो वा भवति । अत्राचार्य्यमतभेदाः—

परतः केचिदिच्छंति केचिदिच्छंति पूर्वतः ।
उभयोः केचिदिच्छंति केचिदिच्छंति नोभयोः ॥

अदमुयङ् । अमुद्र्यङ् । अमुमुयङ् । अदद्र्यङ् ।

बहुष्वेरीः ॥ ११८ ॥ बहुषु वर्तमानस्याऽदसो दात्परस्यैकारस्य ईत्वं स्यात् । अमी । अमीभिः । अमीभ्यः । अमीषां । अमीषु । बहुष्विति किं ? अमू कन्ये ।

वाक्यटेः पः ॥ ११९ ॥ वाक्यस्य टेः पो भवतीत्येषोऽधिकारो वेदितव्यः । दूराद्धूते । आगच्छ भोः जिनदत्त३ । वाक्यग्रहणं किं ? पदानां मा भूत् । टेरिति किं ? अंत्यस्याप्यचो यथा स्यात् । धर्मवी३त् ।

* भोश्च प्रत्यभिवादेऽस्त्रीशूद्रे वा ॥१२०॥ स्त्रीशूद्रवर्जिते प्रत्यभिवादे वर्तमानस्य वाक्यस्य टेः पो वा स्यात् भोःशब्दस्य च। अभिवादये देवदत्तोऽहं भोः। आयुष्मानेधि देवदत्ता ३। आयुष्मानेधि देवदत्त। अभिवादये देवदत्तोऽहं भोः। आयुष्मानेधि भोः ३॥ आयुष्मानेधि भोः। अस्त्रीशूद्र इति किं? अभिवादये—गार्ग्यहं भोः। आयुष्मती भव गार्गि। अभिवादये तुषजकोऽहं भोः। कुशल्यसि तुषजक।

*दूराद्धूते ॥ १२१ ॥ दूरात् धूते-आहूयमाने वाक्यस्य टेः पो वा स्यात्। आगच्छ भो जिनदत्ता ३॥ पक्षे न भवति।

हैहेप्वेषामेव ॥ १२२ ॥ हैहयोः प्रयोगे तयोरेव पो वा भवति। है ३ देवदत्त आगच्छ। आगच्छ है ३ देवदत्त। है देवदत्त आगच्छ। आगच्छ है देवदत्त। हे ३ गुरुदत्त। हे ३ देवदत्त आगच्छ। आगच्छ हे ३ गुरुदत्त। पक्षे हे गुरुदत्त आगच्छ। गुरुदत्त आगच्छ हे॥

* लनृतोऽनंत्यस्याप्येकस्य रोः ॥१२३॥ लृकारस्य ऋवर्जितस्य च रोरनंत्यस्यान्त्यस्यापि टेश्च एकस्य पो वा स्यात्। आगच्छ हे क्लृ ३ प्तशिख। आगच्छ हे क्लृप्तशिखा ३। आगच्छ हे क्लृप्तशिख। दे३ वदत्त। देवदा ३ त्त। देवदत्ता ३। पक्षे न भवति—देवदत्त। अनृत इति किं? कृष्णमी ३ त्र। कृष्णमित्रा ३। रोरिति किं? देवदत्त। तकारात्परस्य मा भूत। एकस्येति किं? अनेकस्य रोः टिना च सहायौगपद्यार्थं॥

* ओं प्रारंभे ॥ १२४ ॥ ओमित्येव प्रारंभे प्रणामाद्यभ्यादाने पो वा स्यात्। ओ३म् ऋषभं पवित्रमजमतम। पक्षे न। प्रारंभ इति किं? ओं ददामि।

हेः पृष्टोक्तौ ॥ १२५ ॥ पृष्टोक्तौ प्रतिवचने हेः पो वा स्यात्। अलावीः केदारं देवदत्त। अलाविषं ही ३। अलाविषं हि। पृष्टोक्ताविति किं? अकार्षं हि कटं देवदत्त।

* चितीवे ॥ १२६ ॥ चिदित्येतस्मिन्निवार्थे प्रयुज्यमाने वाक्यस्य टेः पो वा स्यात्। राजा चिन्नु भाया३न्। पक्षे न। चितीति किं? अग्निरिव भायात्। इव इति किं? कथंचिदाह।

* प्राचां विचारे ॥१२७॥ विचारे वर्तमानस्य प्राचः पूर्वस्य वाक्यस्य टेः पो वा भवति। अहिर्नु ३ रज्जुर्नु। अहिर्नु रज्जुर्नु। स्थाणुर्नु ३ पुरुषो नु। पक्षे न।

* प्रतिश्रुतिषु ॥ १२८ ॥ प्रतिश्रवणादिषु वर्तमानस्य वाक्यस्य टेः पो वा भवति। गां मे देहि भो। हंत ते ददामि ३। अनित्यः शब्दो भवितुमर्हति ३। देवदत्त भोः किमात्थ ३।

पूजिते ॥ १२९ ॥ पूजितेऽर्थे टेः पो वा भवति। शोभनः खल्वसि देवदत्ता ३। पक्षे न।

* कोपादौ प्लौ ॥१३०॥ कोपादिष्वर्थेषु टेर्वा प्लो भवति प्लौ परतः। माणवक ३ माणवक। अविनीतक ३ अविनीतक। इदानीं ज्ञास्यसि जाल्मेत्यादि। न च पक्षे।

*भर्त्सनेऽन्यतरस्य ॥१३१॥ भर्त्सनेऽर्थेऽन्यतरस्यैकस्य वा पो भवति। चौर३ चौर चौर बंधयिष्यामि त्वां। मारयिष्यामि त्वां।

* मिङोऽपेक्षस्यांगेन ॥१३२॥ भर्त्सेऽर्थे मिङंतस्य वाक्यांतरपदाकांक्षस्य वा पो भवत्यंगशब्देन योगे। अंग कूजा ३ इदानीं ज्ञास्यसि जाल्म। पक्षे न। मिङ इति किं? अंग देवदत्त मिथ्या वदसि। अंगेनेति किं? देवदत्त कूज इदानीं ज्ञास्यसि जाल्म। भर्त्से इति किं? अंगाधीष्व मोदकं दास्यामि।

*क्षयाशीःप्रैषे ॥१३३॥ एष्वर्थेषु मिङंतस्य वाक्यांतराकांक्षस्य टेः पो वा भवति। स्वयं ह्यो-

धनं मुंके३ उपाध्यायं शक्तून् पाययति। पुत्रांश्च कप्सीष्ट ३ धनं चाकटं कुरू ३ग्रामं च गच्छ।पक्षे ना।

*प्रश्नोक्तयोः प्रतिपदं ॥१३४॥ प्रश्ने तदुक्तौ च प्रतिपदं टेः पो वा भवति। अगमाः३ पूर्वा-३न् ग्रामा ३न् देवदत्ता ३। अगमा३म् जिन दत्ता ३। पक्षे न। प्रश्नोक्त्योरिति किं? त्वं ग्रामं गच्छ।

*प्रश्नाऽर्चाविचारमत्यभिवादेप्वेचोऽनेऽदेरादिदुत्परः॥१३५॥ प्रश्नादिप्वर्थे वाक्यस्यांते वर्तमानस्यादिसंज्ञकस्य एचः आकारः पो भवन् इदुत्पर आकारः पो भवति। अदास्तस्मा३ इ। अदाः पटा३ उ। शोभनः खल्वसि अग्निभूता ३ इ। शोभनः खल्वसि। पटा३ उ अध्येतव्यं। गृहा ३इ उत वसतौ। आयुष्मंतौ स्तः पुत्रपुत्रा उ। प्रश्नादिष्विति किं?दस्यो३ घातयिष्यामि त्वां। एच इति किं? भद्रकासि कुमारी३। अंत इति किं? भद्रोऽसि गौः ३। अदेरिति किं? अपाका३म् ओदना३म् कन्ये३।

य्वऽचि संधौ ॥१३६॥ एचः स्थाने यौ इदुतौ तयोरिदुतोरचिपरे यकारवकारादेशौ स्तः संधिविवक्षायाम्। अग्ना३यिदं। पटा३वत्र। अचीति किं? अग्ना३इ गतं। पटा३ उ गतं। संधाविति किं? अग्ना३इ इदं। संधावित्याधिकार-आपादसमाप्तेः।

इति जैनेंद्रव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ पंचमस्याध्यायस्य तृतीयः पादः।

# चतुर्थः पादः।

पुमः खय्यंऽपरे सीसुक् ॥ १ ॥ पुम इत्येतस्य मंदंस्य पदांते वर्तमानस्य अम्परे खयि परतः सीरादेशः सुक्चागमः पर्यायेण भवतः। पुँस्कातं, पुंस्कातं। पुँस्कोकिलः। पुंस्कोकिलः। पुमांसं चालयतीति पुँश्चली। पुंश्चली। पुँस्पुत्रा। पुंस्पुत्रा।खयीति किं? पुंगवः। पुंनागः। पुंदासः। अम्पर इति किं? पुंक्षुरः।

नश्छव्यऽप्रशान् ॥ २ ॥ नकारस्य पदांतस्याम्परे छवि सी सुकौ स्तः प्रशान्शब्दं विहाय। भवाँश्छादयति। भवाँष्ठकारीयति। भवाँस्थुडति। भवाँश्चरति। भवाँष्टीकते। भवाँस्तरति। छवीति किं? भवान् करोति। अप्रशानिति किं? प्रशान् चिनोति। अम्पर इति किं? भवान्त्सरुकः।

+कांस्कान् ॥३॥कान्शब्दस्य कानि परे सी सुकौ निपात्यौ। काँस्कान्। कांस्कान्पश्य।

+समः स्कृसि ॥४॥ समुदकस्य कृञःसकारे परे समः सी सुकौ स्तः। सँस्कर्ता। संस्कर्ता। स्कृग्रहणं किं? संस्मरति। सीति किं? संचस्कार।

+नृनः पि रीरुक्वा ॥ ५ ॥ नृन्शब्दस्य पकारे परे रीरादेशः रुक्चागमः पर्यायेण स्तः। नॄँःपाहि। नॄँःपाहि। नृन्पाहि।

भगवद्भवत्त्वघवतो रिःकावऽवस्यौः ॥६॥ एषां कौ रिर्वा भवति तदैवाऽवशब्दस्य च ओत्वं। हे भगोः। हे भगवन्। हेभोः। हे भवन्। हे अघोः। हे अघवन्। काविति किं? हे भगवंतौ। हे भवंतौ। हे अघवंतौ।

*ओदाद्योऽशि॥७॥ प्रकृतात् ओकारादवर्णाच्च परस्य रेर्यो भवति—अशि परतः। भगोयत्र भोयत्र। कयास्ते। देवायासते। प्रकृतौकारःकिं? गोरत्र।अशीति किं?भोःसमसि।रेरिति किं?पुनरत्र।

+व्योऽस्पष्टः खं ॥८॥ ताभ्यां वकारयकारयोरस्पष्टः खं च भवत्याशि परतः। भोयत्र। भो अत्र। पटवु। पट उ। तवु। त उ। पदस्येति किं? नयनं।

+वाऽनुस्वात् ॥ ९ ॥ अवर्णांतादुवोरम्पद्वः सं च वा भवत्युभयोर्वर्जितेऽचि परतः । पटविह । पट इह । पटविंह । तयाहुः । तआहुः । तयाँहुः । अनुभीति किं ! पटवु । पट उ । आविति किं ! अघोर्वत्र । अघो अत्र ।

हलि ॥ १० ॥ य्वोः सं भवत्याशि हलि परतः । नित्यार्थमिदं । भगो देहि । देवा यांति । वृक्षहसति । आशि हलीति किं ! वृक्षव् करोति ।

*नुम्नोऽम् ॥ ११ ॥ नुकः मकारांतस्य च पदस्य अं इत्यनुस्वारो भवति हलि परे । यं-यम्यते । धर्मं शृणोति । पापं हंति । हलीति किं ! इदमत्र ।

नश्चाऽपदांते झलि ॥ १२ ॥ नकारस्य मकारस्य चापदांते वर्तमानस्य अं भवति झलि परतः । यशांसि । तेजांसि । पुंसि । अपदांत इति किं ! भगवान् शांतः । झलीति किं ! गम्यः ।

सम्राट् ॥ १३ ॥ समो मकारस्य मकार एव निपात्यः राजतौ क्यंते परतः । सम्राट् भरतः ।

ङ्णोः कुक् टुक् शरि वा ॥ १४ ॥ ङकारणकारयोः कुक् टुकौ वा स्तः शरि परे । प्राङ्छेते । प्राङ्क्छेते । प्राङ्क्षेते । सुगण्ट्छेते । सुगण्छेते । सुगण्षेते । शरीति किं ! प्राङ्करोति ।

नश्चि तुक् ॥ १५ ॥ पदांतस्य नकारस्य शकारे तुग्वा स्यात् । कुर्वञ्च्छेते । कुर्वञ्छेते । कुर्वञ्शेते । शीति किं ! कुर्वन्षंढः ।

ङ्नात् धुट् सोऽश्वः ॥ १६ ॥ डकारांतान्नकारांताच्च सकारस्य श्चोऽवयववर्जितस्य धुडागमो भवति । मधुलिट्त्सीदति । मधुलिट्सीदति । महान्त्साधुः । महान्साधुः । स इति किं ! मधुलिट् षंढे । अश्च इति किं ! अटश्चोतति ।

मयो वोऽच्युञः ॥ १७ ॥ मयः परस्य उञः वो वा भवति अचि परे । शम्वत्र । शमु अत्र । किम्वुष्णं । किमु उष्णं । तद्वस्य मतं । तदु अस्य मतं । मय इति किं ! स्वरु उपैति । अचीति किं ! शमु भवतु ।

ङ्णो ङ्णुट् तु शात् ॥ १८ ॥ शात्परो यो ङ्ण् तदंतात्परस्याऽचः नित्यं ङ्णुट् भवति । कुङ्ङास्ते । सुगण्णिह । कुर्वन्नास्ते । शादिति किं ! प्राङास्ते । अचीति किं ! पठन् रमते ।

ढो ढि खं ॥ १९ ॥ ढकारस्य ढकारे परे खं भवति । गूढं । लीढं ।

रो रि ॥ २० ॥ रेफस्य रेफे परे खं भवति । अग्नीरथेन । पुनारमते ।

* अंतेऽः ॥ २१ ॥ अंते वर्तमानस्य रेफस्य अः इति विसर्जनीयो भवति । देवः । कविः । प्रातः । अंत इति किं ! स्वरत्र ।

शर्परे खरि ॥ २२ ॥ रेफस्य विसर्गो भवति शर्परे खरि परतः । नरः त्सरुकः । पुरुषःत्सरति ।

कुप्वोः ॥ २३ ॥ खर्भूतयोः कवर्गपवर्गयोः शर्परे खरि परतः रेफस्य विसर्गो भवति । वासः क्षौमं । अद्भिः प्सातं ।

ᳵकᳶ पौ च ॥ २४ ॥ खरि स्थितयोःकुप्वोः परतः रेफस्य ᳵकᳶप इत्येतावादेशौ भवतः विसर्गश्च । अंतᳵकरोति, अंतः करोति । कᳵखनति । कः खनति । अंतᳶपचति । अंतः पचति । वृक्षᳶफलति । वृक्षः फलति । कुप्वोरिति किम् ! कश्चरति ।

शरि सश्च ॥ २५ ॥ रेफस्य सकारादेशो भवति विसर्गश्च शरि परतः । कश्शेते । कःशेते । कष्षंढ । कः षंढ । कस्सरति । कः सरति । अंतश्शोभते । अंतःशोभते । शरीति किं ! कःपठति ।

रेश्च सुपि ॥ २६ ॥ शरि सुपि रेः सो भवति विसर्गश्च । पयस्सु । पयःसु । नियमार्थोऽयं योगः । रेरिकारानुबंधस्यैव सुपि सत्वविसर्गौ

नान्यस्य । गीर्षु । धूर्षु ।

* खय्परे खं वा ॥ २७ ॥ खय्परे शरि रेफस्य खं भवति वा । चेतःस्खलति । चेतस्स्खलति । चेतः स्खलति । कःस्कंदति । कस्स्कंदति । कः स्पंदति । खय्पर इति किं ? कः सरति । कस्सरति ।

छवि ॥ २८ ॥ रेफस्य सकारादेशो भवति छवि परतः । कश्छिनत्ति । कष्टकारः । कस्थुडति । कश्चरति । कष्टीकते । कस्तरति ।

कुप्वोस्त्येऽप्रेः सिः ॥ २९ ॥ कवर्गपवर्गादौ त्ये परे शिवर्जितस्य रेफस्य सिर्भवति । काम्यकल्प(पा)शपाशेषूदाहरणं । यशस्काम्यति । पयस्कल्पं । सर्पिष्कं । पयस्पाशं । त्य इति किं ? पयः पिबति । अशेरिति किं ? मुहुः काम्यति ।

* रेरेव काम्ये ॥३०॥ रेरिकारानुबंधस्यैव काम्ये त्ये सिरादेशो भवति नान्यस्य । पयस्काम्यति । रेरिति किं ? धूः काम्यति ।

* निर्दुर्बहिरिश्चतुराविःप्रादुसः ॥ ३१ ॥ निरादीनां रेफस्य सिर्भवति कुप्वोःपरतः । निष्कृपः । निष्पेयं । दुष्कृतं । दुष्पीतं । बहिष्कुरु । बहिष्पिब । चतुष्कं । चतुष्पदी । आविष्कृत्य । आविष्पठ । प्रादुष्कुर्यात् । प्रादुष्पच ।

नमःपुरसोस्त्योः॥३२॥एतयोर्भिसंज्ञयोःरेफस्य सिर्भवतिः कुप्वोः परतः । नमस्कृत्य । नमस्कर्त्ता । नमस्कर्तुं । नमस्कर्तव्यम् । पुरस्कृत्य । पुरस्कर्ता । त्योरिति किं ? नमः कृत्वा । पुरः कृत्वा

तिरसो वा ॥ ३३ ॥ तिरसो रेफस्य सिर्वा भवति । तिरस्कृत्य । तिरः कृत्य । तिरस्कर्ता । तिरः कर्ता ।

सुचः ॥ ३४ ॥ सुजंतस्य रेफस्य सिर्वा स्यात् कुप्वोः परतः । द्विष्कुरु । द्विः कुरु । द्विःकुरु । द्विष्पठ । द्विः पठ । द्विःपठ । त्रिष्करोति । त्रिः करोति । त्रिः करोति । त्रिष्पचति । त्रिः पचति । त्रिः पचति । चतुष्करोति । चतुः करोति । चतुः करोति । चतुष्पठति । चतुः पठति । चतुः पठति ।

इसुसोऽपेक्षायाम् ॥ ३५ ॥ इसुसंतस्य रेफस्य सिर्वा स्यात् कुप्वोरन्योन्यापेक्षायाम् । सर्पिष्करोति । सर्पिः करोति । सर्पिः करोति । सर्पिष्पिबति । सर्पिः पिबति । सर्पिः पिबति । धनुष्खंडयति । धनुः खंडयति । धनुः खंडयति । धनुष्पाति । धनुः पाति । धनुः पाति । इसुस इति किं ? पयः कुरु । अपेक्षायामिति किं ? तिष्ठतु सर्पिः पिबत्वंभः ।

नैकार्थेऽक्रिये ॥ ३६ ॥ इसुसोरेफस्य सिर्न भवति क्रियापदर्हीनैकार्थपदस्थयोः कुप्वोरपेक्षायां । सर्पिः कालकं । यजुः पीतकं । एकार्थ इति किं ? सर्पिष्कुंभे । अक्रिय इति किं ? सर्पिष्क्रियते ॥

सेऽगुस्थस्य ॥ ३७ ॥ इसुसोः रेफस्याऽगुस्थस्य से सिर्भवति कुप्वोः परतः । सार्पिष्कुंडं । सर्पिष्पानं । धनुष्खंडं । स इति किं ? आस्तां सर्पिःपिब क्षीरं । अगुस्थस्येति किं?सत्सर्पिःकुंडे ।

कृकमिकंसकुंभकुशाकर्णीपात्रे ऽतोऽप्रे ॥३८॥ कृकम्यादिष्वतः परस्याप्रेः रेफस्य से अगुस्थस्य सिर्भवति । अयस्कारः । अयस्कृत् । यशस्कामः । अयस्कंसः । अयस्कुंभः । अयस्कुशा । अयस्कर्णी । पयस्पात्रं । अत इति किं ? गीःकारः । धूःकारः । अप्रेरिति किं? स्वः कृत् । प्रातःकारः । अगुस्थस्येति किं ? सुपयस्कारः ।

शिरोऽधसोः पदे ॥ ३९ ॥ अनयोरगुस्थस्य रेफस्य पदे परतः से सिर्भवति । शिरस्पदं । अधस्पदं । स इति किं ? शिरसः पदं ।

* कस्कादिषु ॥ ४० ॥ एषु वर्तमानस्य रेफस्य सिर्भवति कुप्वोः परतः । कस्कः । कौतस्कुतः । भास्करः । अयस्पिंडः । इत्यादि ।

* किणोस्सःसेः षः ॥ ४१ ॥ कवर्गेण्भ्यां परस्य सकारस्य सेश्च षो भवति । इत्याकिारो

केवः । वक्ष्यति–स्यादेशयोः । वासु । मुनिषु । सिषेव । सर्पिष्काम्यति । किणोरिति किं ? याम्यति ।

नुम्व्यरः ॥ ४२ ॥ किण्भ्यां परो यो नुम् शर् च तस्मात्सस्योः षो भवति । सर्पीषि । धनूंषि । सर्पिःषु । धनुःषु ॥

स्यादेशयोः ॥ ४३ ॥ ताभ्यां स्यसकारस्य आदेशसकारस्य च षादेशो भवति । एषु । एषा । सुष्वाप । साधुषु । कर्तृषु । विक्षु ।

शास्वसघसां ॥ ४४ ॥ किण्भ्यां परस्य एषां सकारस्य षो भवति । शिष्टः । शिष्टवान् । उष्यते । जक्षतुः ॥

णि चाण्णिस्तोरेवास्विन्स्वत्सहः॥४५॥ णि षत्वभूते सनि परे चात्परस्य सकारस्य षादेशो भवति ण्यंतानां स्तौतेश्च स्विदि स्वदि सहो विहाय । सिषवयिषति । सुष्वापयिषति । तुष्टूषति । नियमोऽयं–णिस्तोरेव षणि षत्वं नान्यस्य । सुसूषति । सिसिक्षति । एवकारः इष्टनियमार्थः । णिस्तोः षण्येवेति माभूत् । अभीषिवत् । तुष्टाव । षणीति किं ? सिषेव । षत्वनिर्देशः किं ? सिषासति । सुषुप्सति । नकारग्रहणं किं ? व्यातिसुषुप्सिषे । चादिति किं ? प्रतीषिषति । अस्विन्स्वत्सह इति किं ? सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

*संजेर्वा ॥ ४६ ॥ संजेर्ण्यंतस्य षणि चात्परस्य षो वा स्यात् । सिषंजयिषति । सिसंजयिषति ।

गेः सुनसुसोस्तुस्तुभोऽव्यऽपि ॥ ४७ ॥ गेरिण्णंतात्परेषां एषां सकारस्याटि सत्यऽसत्यपि षो भवति । परिषुणोति । विषुणोति । अभिषुणोति । पर्यषुणोत् । निषुवति । विषुवति । परिषुवति । न्यषुवत् । विष्यति । निष्यति । अभिष्यति । अभ्यष्यत् । नमिनाथमभिष्टौमि । अभ्यष्टौत् । निष्टौति । विष्टौति । परिष्टौति । अभिष्टोभते । निष्टोभते । अभिष्टोभते । अभ्यष्टोभत । गेरिति किं ? दधि सुनोति ।

* स्थासेनिसेधासिचसंजस्वंजोऽट् चेऽस्य च ॥ ४८ ॥ स्थादीनां गेः परेषामटि चे च सत्यसत्यपि अस्य च चस्य षो भवति । अनुष्ठास्यति । निष्ठास्यति । विष्ठास्यति । अभिष्ठास्यति । परिष्ठास्यति । अन्वष्ठात् । अनुतष्ठौ । अभिषेणयति । निषेणयति । परिषेणयति । अभ्यषेणयत् । अभिषिषेणयिषति । निषेधति । विषेधति । अभिषेधति । परिषेधति । न्यषेधत् । निषिषेध । विषिंचति । निषिंचति । परिषिंचति । अभिषिंचति । न्यषिंचत् । विषिषिक्षति । विषजति । निषजति । परिषजति । अभिषजति । न्यषजत् । विषषंज । परिष्वजते । निष्वजते । विष्वजते । परिषिष्वंक्षते ।

सदोऽप्रतेः ॥ ४९ ॥ अप्रतेर्गेः परस्य सदेः षो भवति । निषीदति । विषीदति । परिषीदति । न्यषीदत् । निषीषत्सते । निषसाद । अभिषिषत्सति । अप्रतेरिति किं ? प्रतिसीदति ।

स्तम्भे ॥५०॥ गेःपरस्य स्तंभःषो भवति । निष्टभ्नाति । प्रतिष्टभ्नाति । परिष्टभ्नाति । विष्टभ्नाति । प्रत्यष्टभ्नात । प्रतितष्टंभ । प्रतितिष्टम्भते ।

* आश्रयाऽविदूरोर्ज्यवाच ॥५१ ॥ अवाद्गेरुत्तरस्य स्तंभः षकारादेशो भवति आश्रये–अविदूरे ऊर्जि चार्थे । अवष्टभ्यास्ते । अवष्टब्धे सेने । अहो सुभटस्यावष्टंभः । एष्विति किं ? अवस्तब्धो वृषलः । चशब्दादुपष्टंभः ।

वेश्च स्वनोऽशने ॥ ५२ ॥ वेरवाच्चोत्तरस्य स्वनेः षो भवति—अशनेऽर्थे । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणत् । अवषंष्वण्यते । अशन इति किं ? विस्वनति मृदंगः ।

* परिनिवेः सेवः ॥ ५३ ॥ एभ्यः सेवतेः

अटि वे च सत्यसत्यपि षो भवति। परिषेवते। पर्य्यषेवत। परिपिषेविषते। निषेवते। विषेवते। न्यषेवत्। व्यषेवत्।

* सितसयस्य ॥ ५४ ॥ परिनिविभ्यः सित सययोः षो भवति। परिषितः। निषितः। विषितः। परिषयः। निषयः। विषयः।

सिवुसहसुट्स्तुस्वंजः ॥ ५५ ॥ तेभ्यः सिवादीनां षो भवति। परिषीव्यति। निषीव्यति। विषीव्यति। परिषहते। निषहते। विषहते। परिष्कर्ता। नेमिमार्थं परिष्टौति। परिष्वजते।

वाऽटि ॥ ५६ ॥ तेभ्यः सिवादीनां अटि षो वा स्यात्। पर्य्यषीव्यत्। पर्यसीव्यत्। न्यसीव्यत्। न्यषीव्यत्। व्यषीव्यत्। व्यसीव्यत्। पर्य्यषहत। पर्यसहत। न्यषहत। न्यसहत। व्यषहत। व्यसहत। पर्य्यष्करोत्। पर्यस्करोत्। न्यष्करोत्। न्यस्करोत्। व्यष्करोत्। व्यस्करोत्। पर्य्यष्टौत्। पर्यस्तौत्। न्यष्टौत्। न्यस्तौत्। व्यष्टौत्। व्यष्टौत्। पर्यष्वजत्। पर्यस्वजत्। न्यष्वजत। न्यस्वजत्। व्यष्वजत्। व्यस्वजत्।

* स्यंदोऽभ्यनोश्चाऽजीवे ॥ ५७ ॥ अभ्यनुभ्यां तेभ्यश्चोत्तरस्य स्यंदेः षो वा स्यादजीवेऽर्थे। अभिस्यंदते, अभिष्यंदते तैलं। अनुष्यंदते, अनुस्यंदते। परिस्यंदते, परिष्यंदते। निष्यंदते, निस्यंदते। विष्यंदते, विस्यंदते। अजीव इति किं? अभिस्यंदते मत्स्यः।

वेः स्कंदोऽक्ते ॥ ५८ ॥ वेः परस्य स्कंदेर्वा षो भवति—अतसंज्ञके परतः। विष्कंत्ता। विस्कंता। अत इति किं? विस्कन्नः। विस्कन्नवान्।

परेः ॥५९॥ परेः परस्य स्कंदेर्वा षो भवति। परिष्कंता, परिस्कंता। पृथक्सूत्रात् तेऽपि स्यात्। परिष्कण्णः, परिस्कन्नः। परिष्कण्णवान्, परिस्कन्नवान्।

स्फुरिस्फुल्योर्निर्नेः ॥ ६० ॥ निर्निभ्यां परयोः स्फुरिस्फुल्योः षो वा स्यात्। निःष्फुरति, निःस्फुरति। निष्फुरति, निस्फुरति। निःष्फुलति। निःस्फुलति। निष्फुलति, निस्फुलति।

वेः ॥६१॥ वेरुत्तरयोस्तयोः षो वा स्यात्। विष्फुरति। विस्फुरति। विष्फुलति। विस्फुलति।

*स्कभ्नः षः ॥ ६२ ॥ वेःपरस्य स्कभ्नातेः षो भवति। विष्कभ्नाति। विष्कंभिता। विष्कंभकः। पुनः षो नित्यार्थः।

इणः षीध्वंलुङ्लिटां धो ढः ॥ ६३ ॥ इणःपरेषां एषां धकारस्य ढो भवति। चेषीढ्वं। च्योषीढ्वं। अचेढ्वं। अच्योढ्वं। चकृढ्वे। ववृढ्वे। इण इति किं? पक्षीध्वं। एषामिति किं? स्तुध्वे।

* वेण्णः ॥ ६४ ॥ इणः पराभ्यां इट्भ्यां परेषां तेषां धकारस्य ढो वा स्यात्। लविषीढ्वं। लविषीध्वं। अलविढ्वं। अलविध्वं। लुलुविढ्वे। लुलुविध्वे। ग्राहिषीढ्वं। ग्राहिषीध्वं।

सेऽङ्गुलेः संगे ॥ ६५ ॥ अंगुलेःपरस्य संगे सकारस्य से षो भवति। अंगुलिषंगः। से इति किं? अंगुलेः संगः।

भीरोः स्थानं ॥ ६६ ॥ भीरोः परस्य स्थानस्य से षो भवति। भीरुष्ठानं।

ज्योतिरायुषः स्तोमः ॥ ६७ ॥ आभ्यां स्तोमस्य षो भवति से। ज्योतिष्टोमः। आयुष्टोमः।

* स्तुत्स्वाग्नेः ॥६८॥ अग्नेःपरयोःस्तुत्स्तोमयोः से षो भवति। अग्निष्टुत्। अग्निष्टोमः।

मातृपितुः स्वसुः ॥ ६९ ॥ आभ्यां स्वसृ सकारस्य षो भवति से। मातृष्वसा। पितृष्वसा।

वाऽलुपि ॥ ७० ॥ अलुपि से ताभ्यां स्वसुः षो वा स्यात्। मातुः ष्वसा। मातुः स्वसा। पितुः ष्वसा। पितुः स्वसा।

* प्रादुर्नैर्यस्यस्तेः ॥ ७१ ॥ प्रादुःशब्दात्

णिम्वश्च परस्यास्तेः षो भवति यकारादावजादौ च परे । प्रादुःष्यात् । प्रादुः षन्ति । निष्यात् । निषंति । अभिष्यात् । अभिषंति । प्रादुर्गेरिति किं ? दधि स्यात् । यऽचीति किं ? अनुस्थः । अनुस्तः ।

*निर्दुःसुवेः समसूतिस्वपोऽस्य: ॥ ७२ ॥ निरादिभ्यः परयोः समसूत्योः स्वपेश्चावकारस्य षो भवति । निःषमः । दुःषमः । सुषमः । विषमः । निःषूतिः । दुःषूतिः । सुषूतिः । विषूतिः । निःषुप्तः । दुःषुप्तः । सुषुप्तः । विषुप्तः । अव इति किं ? दुःस्वप्नः ।

विकुशमीपरेः स्थलं ॥ ७३ ॥ एभ्यः स्थलस्य षो भवति । विष्ठलं । कुष्ठलं । शमीष्ठलं । परिष्ठलं ।

कपेर्गोत्रे ॥ ७४ ॥ कपेः स्थलस्य षो भवति गोत्रेऽर्थे । कपिष्ठलं । गोत्र इति किं ? कपिस्थलं ।

गोंबांबभूमिसव्यापद्वित्रिकुशेकुशंकंगुमंजिपुंजिपरमेबर्हिर्दिव्यग्नेः स्थः ॥ ७५ ॥ एभ्यः स्थस्य षो भवति । गोष्ठः । अंबष्ठः । आंबष्ठः । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शंकुष्ठः । अंगुष्ठः । मंजिष्ठः । पुंजिष्ठः । परमेष्ठः । बर्हिष्ठः । दिविष्ठः । अग्निष्ठः ।

*प्रष्ठोऽग्रगत् ॥ ७६ ॥ प्रात्परस्य स्थस्य षो निपात्यते अग्रे गत्यर्थे । प्रष्ठो गौः । प्रस्थोऽन्यः ।

सुषामादिषु ॥ ७७ ॥ एषु वर्तमानस्य सकारस्य षो भवति । सुषामा । विषामा । निःषामा । निषेधः । सुषंधिः । परमेष्ठी । सुष्विदित्यादि ।

*भ्रात्सुपस्त्ये ॥ ७८ ॥ भ्रात्परस्य सकारस्य षत्वं स्यात् सुबंतात् विहिते तकारादौ त्ये परतः । सर्पिष्टा । सर्पिष्ट्वं । सर्पिष्टरं । वपुष्टमं । चतुष्टयं । भ्राविति किं ? गीस्तरा । धूस्तरा । सुप इति किं ? भिंधुस्तरां । छिंधुस्तरां । तादिग्रहणं किं ? सर्पिस्सात् । त्य इति किं ? सर्पिस्तरति ।

निसोऽनासेवायां तपे ॥ ७९ ॥ निसः षो भवति—अनासेवायामर्थे तपतौ परे । निष्टप्तं हिरण्यं । निष्टप्ता अरातयः । अनासेवायामिति किं ? निस्तपति सुवर्णो सुवर्णकारः ।

*निनद्याःस्नातेर्दाक्ष्ये ॥ ८० ॥ निनदीभ्यां स्नातेः षो भवति दाक्ष्येऽर्थे । निष्णः स्नाने । नदीष्णः प्रतरणे । कुशल इत्यर्थः ।

*प्रतेः स्नातं सूत्रे ॥ ८१ ॥ प्रतेःपरस्य स्नातेः षो भवति सूत्रेऽर्थे । प्रतिष्णातं सूत्रं शुद्धमित्यर्थः । प्रतिस्नातमन्यत् ।

÷स्नानं खौ ॥ ८२ ॥ प्रतेः स्नानस्य षो भवति सूत्रे खौ । पृतिष्णानं सूत्रमित्यर्थः । खाविति किं ? पृतिस्नानं ।

*वर्णेऽभिनिष्टानः ॥ ८३ ॥ वर्णे खौ अभिनिभ्यां स्तानस्य षो निपात्यः । आभिनिष्टानो विसर्गः । अभिनिस्तानोऽन्यत्र ।

*विष्टारश्छंदसि ॥ ८४ ॥ वेः परस्य स्तारस्य षो निपात्यते छंदोऽर्थे खौ । विष्टारःपंक्तिछंदः । विस्तारोऽन्यत्र ।

*वृक्षासने विष्टरः ॥ ८५ ॥ वेः परस्य तरस्य षो निपात्यते वृक्षासनयोरर्थयोः । विष्टरो वृक्षः । विष्टरमासनं । विस्तरोऽन्यः ।

*गवियुधि स्थिरः ॥ ८६ ॥ गवि युधि इत्येताभ्यां स्थिरस्य षो भवति खौ । गविष्ठिरः । युधिष्ठिरः ।

*एत्यऽगः ॥ ८७ ॥ अगकारांतात्परस्य सकारस्य षो भवत्येकारे परतः खौ । वारिषेणः । श्रीषेणः । हरिषेणः । एतीति किं ? हरिसिंहः । अग इति किं ? विष्वक्सेनः । इण इति किं ? धर्मसेनाचार्यः

+भाद्वा ॥ ८८ ॥ भवाचिनः शब्दात् सकारस्य षो वा भवति एकारे खौ । भरणिषेणः । भरणिसेनः । रोहिणिषेणः । रोहिणिसेनः । अग इति किं ? अश्वयुक्सेनः ॥

* पदात् ॥८९॥ पदात्परस्य सकारस्य षो न स्यात् । दधि सिंचति । मधु सुनोति ।

* बहोः ॥९०॥ बहोऽभ्यासात्सस्य षो न स्यात्। बहुसेक् ।

सात् ॥ ९१ ॥ सातः सस्य षो न स्यात् । मुनिसात् । अग्निसात् । दधिसात् । मधुसात् ।

सिचो यङि ॥ ९२ ॥ सिचेः सस्य षो न भवति यङि परतः । सेसिच्यते। अभिसेसिच्यते।

सेधो गतौ ॥ ९३ ॥ सेधतेर्गत्यर्थस्य षो न स्यात् । प्रतिसेध गाः । अभिसेध गाः। गताविति किं ? प्रतिषेधति पापं मुनिः ।

निस्तब्धप्रतिस्तब्धौ ॥ ९४ ॥ निप्रतिभ्यां स्तंभेः षत्वाभावो निपात्यते। निस्तब्धः। प्रतिस्तब्धः । ॥

सोढः॥९५॥ सोढ्भूतस्य सहेःषो न स्यात्। विसोढा । परिसोढुं । परिसोढव्यं । सोढ् भूतस्येति किं ? निषहते । विषहते ।

* स्तंभुसिवुसहश्चाचि ॥ ९६ ॥ एषां कचि परतः षत्वं नास्ति । प्रत्यतस्तंभत् । पर्यसीषिवत्। व्यसीषहत् ।

सुञः सन्स्ये ॥ ९७ ॥ सुञः सनि स्ये च परतः षकारादेशो न स्यात् । सुसूषतीति सुसूः । अभिसोष्यति ।

सस्वंजश्चाल्लिटि ॥९८ ॥ सहिस्वंज्योः चात्परयोर्ल्लिटि परतः षो न स्यात् । निषसाद । अभिषस्वंजे । अभिषस्वजे ॥

* ष्रो नो णोऽभिन्ने ॥ ९९ ॥ षकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्नपदे चेत्तौ निमित्तनिमित्तिनौ भवतः । कुष्णाति । पुष्णाति। निष्केण । मूर्खेण । वर्गेण । दीर्घेण । श्पुष्पेण । रेफेण । गिरिणा। मेरुणा । वर्षेण।गर्वेण । गर्भेण । अभिन्न इति किं ? मुनिर्नयति स्वर्गे ॥

* प्राक्पदस्थात् स्वौ ॥ १०० ॥ पूर्वपदस्थात्परस्य नकारस्य णकारादेशो भवति स्वौ । पुष्पणंदी । वीरणंदी । धर्मणंदी । श्रीणंदी स्त्री । स्वाविति किं ? दीर्घनासिकः ।

* अगः ॥ १०१ ॥ गकारांतान्नकारस्य णो न भवति । ऋगयनं ।

*कोटराभ्यो वनं ॥ १०२ ॥ कोटरादिभ्यः परं वनं विनियम्यते स्वौ । कोटरावणं। मिश्रकावणं । सिध्रकावणं। सारिकावणं । पुरगावणं । एभ्य इति किं?शतपत्रवनं । मनोहरवनं ।

प्रोग्रस्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्ष्याम्रखदिरात् ॥ १०३ ॥ एभ्यो वननकारस्य णो भवति । प्रवणं । अग्रेवणं । अंतर्वणं । निर्वणं । शरवणं । इक्षुवणं । प्लक्षवणं । पीयूक्षावणं। कार्ष्यवणं । आम्रवणं । खदिरवणं ॥

* द्वित्र्यज्भ्यो वृक्षौषधिभ्योऽनिरीकादिभ्यो वा ॥ १०४ ॥ द्वित्र्यज्भ्यो वृक्षौषधिवाचिभ्यः निरीकादिरहितेभ्यो वनस्य नस्य णो वा स्यात् । दारुवणं,दारुवनं।वदरीवणं,वदरीवनं। दूर्वावणं। दूर्वावनं। व्रीहिवणं, व्रीहिवनं। कोद्रववणं, कोद्रववनं। द्वित्र्यज्भ्य इति किं?देवदारुवनं। भद्रदारुवनं । राजनाषवनं । वृक्षौषधिभ्यः इति किं ? पितृवनं । अनिरीकादिभ्य इति किं ? इरीकावनं कुवेरवनं । तिमिरवनं । समीरवनं ।

+ ग्रामाऽग्रान्नीः ॥ १०५ ॥ आभ्यां नी नकारस्य णो भवति । ग्रामणीः । अग्रणीः ।

* नसः ॥ १०६ ॥ गेः परो नसो णकारादेशो भवति । प्रगता नासिका अस्य-प्रणसं मुखं। निर्णसः ।

अतोऽन्हः ॥ १०७ ॥ अकारांतात्परस्याह्नः नस्य णत्वं भवति।पूर्वाह्णः।अपराह्णः।अत इति किं? निरह्नः । दुरन्हः ।

चतुस्त्र्येर्वयसि हायनः ॥ १०८ ॥ चतुर् त्रिभ्यां हायनस्य नस्य णो भवति वयसि गम्यमाने। चतुर्हायणो वत्सः । त्रिहायणोऽश्वः। चतुस्त्रेरिति किं? लक्षहायनः पक्षी। वयसीति किं? चतुर्हायना शाला।

वाहाद्वाहनं ॥ १०९ ॥ वाहान्तस्य वाहननकारस्य णो भवति। इक्षुवाहणं। शरवाहणं। वाहादिति किं? सुरवाहनं।

पानं देशेऽसः ॥ ११० ॥ देशे गम्यमाने पानस्य णकारादेशो भवति असः। क्षीरपाणाः आंध्राः। सौवीरपाणाः द्राविडाः। सुरापाणाः प्राच्याः। देशे इति किं? दाक्षिपानं। असेरिति किं? सर्पिष्पानाः।

वा भावकरणे ॥ १११ ॥ भावे करणे च वर्तमानस्य पाननस्य णो वा स्यात्। सौवीरपाणं, सौवीरपानं। क्षीरपाणं, क्षीरपानं, वर्तते। करणे—क्षीरपाणः, क्षीरपानः। वारिपाणः, वारिपानः कंसः। भावकरण इति किं? क्षीरपानो घोषः।

गिरिनद्यादीनां ॥ ११२ ॥ एषां वा णो भवति। गिरिणदी। गिरिनदी। चक्रणितंबा। चक्रनितंबा। माषोणः। माषोनः।

मृदंतनुमसुपि ॥ ११३ ॥ मृदन्ते नुमि सुपि च यो नकारस्तस्य वा णो भवति। माषवापिणौ, माषवापिनौ। व्रीहिवापिणौ, व्रीहिवापिनौ। माषवापाणि। माषवापानि। व्रीहिवापाणि। व्रीहिवापानि। माषवापेण, माषवापेन। प्राक्पदस्थात्वादिति किं? कूपवारिणा।

एकाज्यो णः ॥ ११४ ॥ एकाचि यौ स्थितस्य मृदंतनुमसुब्नकारस्य णो भवति। ब्रह्महणौ। वृत्रहणौ। क्षीरपाणि। सुरापाणि। सुरापेण। क्षीरपेण।

सकौ ॥ ११५ ॥ सकवर्गे यौ स्थितस्य मृदंतनुमसुब्नकारस्य णो भवति। मोक्षकामिणौ। बलयुगिणौ। स्वर्गकामाणि। करयुगाणि। गुरुमुखेण। करयुगेण।

ण्यंऽन्तरोऽदुरो विकृते: ॥ ११६ ॥ दुर्वर्जितादंतःशब्दाच्च विकृतेर्नकारस्य णो भवति। पार्श्वजिनं प्रणमामि। प्रणयति। परिणयति। अंतर्णयति। प्रणामकः। परिणायकः। ण्यंतर इति किं? साधुनयति स्वर्गं। अदुर इति किं? दुर्नयः। विकृतेरिति किं? प्रनृत्यति। प्रनर्तकः।

शः ॥ ११७ ॥ गेरदुरोंऽतःशब्दाच्च शकारांतस्य धोर्नस्य णो भवति। प्रणश्यति। परिणश्यति। प्रणाशकः। श इति किं? प्रनष्टः। प्रनंक्ष्यति।

हिम्योर्नुनोः ॥ ११८॥ गेरदुरोंऽन्तःशब्दाच्च हिमीभ्यां नुना इत्येतयोर्णो भवति। प्रहिणोति। प्रहिणुतः। प्रमीणाति। प्रमीणीतः।

आनेः ॥ ११९ ॥ गेः परस्यानेर्णो भवति। प्रयाणि। प्रापयाणि। अंतर्याणि। प्रवाणि।

नेर्गदनदपतपदघुमास्यतियातिवातिद्रातिप्सातिवपतिवहिशम्चिञ्देग्धौ ॥ १२० ॥ गेः परस्य नेर्णो भवति गदादिषु परतः। प्रणिगदति। प्रणिगदिता। परिणिगदति। परिणिगदिता। प्रणिनदति। वीणायां प्रणिपतति। प्रणिपतन्ति। प्रणिपतता। प्रणिददाति। प्रणिदधाति। प्रणिधयति। प्रणिदधाति। प्रणिमयते। प्रणिमीते। प्रणिमार्यते। प्रणिमाता। प्रणिष्यति। परिणिष्यति। प्रणिहन्ति। प्रणियाति। प्रणिवाति। प्रणिद्राति। प्रणिप्साति। प्रणिवपति। प्रणिवहति। प्रणिशाम्यति। प्रणिचिनोति। प्रणिदेग्धि। अंतर्णिगदति।

शेषे वाऽपांतेऽकखादौ ॥ १२१ ॥ शेषे गदादिवर्जिते धौ अपकारांते अककारखकारादौ

भवति झशि परतः । बोद्धा । बोद्धुं । बोद्धव्यं । अबुद्ध । अबुद्धाः । लब्धा । लब्धुं । अलब्ध । अलब्धाः । दोग्धा । दोग्धुं । दोग्धव्यं । झशीति किं ? दध्महे ।

चर्खरि ॥१५५॥ झलां खरि परे चर् स्यात् । भेत्ता । भेत्तुं । भेत्तव्यं । लप्स्यते । मधुलिट् चरति । खरीति किं ? भज्यते ।

कं णोऽप्यऽनाङ् चादेः ॥१५७॥ अंते वर्तमानस्याणो वा कं भवति विसंज्ञं अनाङ् चादींश्च त्यक्त्वा । सामँ साम । खट्वाँ खट्वा । दधिँ दधि । मधुँ मधु । अण इति किं ? कर्तृ । अनाङ्चादेरिति किं ? मुनी । किमु । आङ्वर्जनं किं ?पाटलिपुत्राद्वौँ ।

ख्यः शो य् ॥१५८॥ ख्शास्त्रःशकारस्य यो वा भवति । आख्याता । आख्शाता । आख्यातुं । आख्शातुं । आख्यातव्यं । आख्शातव्यं ।

यय्यऽप्परं स्वं ॥१५०॥ ययि परतः —अं इत्यनुस्वारः परस्य स्वं भवति । शङ्कितः । अञ्चितः । हिण्डितः । शान्तः । कम्प्यते ।

वा नुकपदांतस्य ॥१६०॥ नुकः पदांतस्यानुस्वारस्य च परस्वं वा स्याद् ययि परतः । चङ्क्रम्यते चम्भण्यते । बंभण्यते । सैंय्यतः । संयतः । सँल्वत्सरः संवत्सरः । तैंल्लोकं । तंलोकं । त्वङ्करोषि । त्वं करोषि । त्वञ्चरसि । त्वं चरसि । त्वण्टीकसे । त्वं टीकसे । त्वन्तरसि । त्वंतरसि । त्वं पचसि । त्वंपचसि ।

हिंवल्म्ये ॥१६१॥ हकारे व ल य म न परे परतः—पदांतानुस्वारस्यैषामेव स्वा व ल य म ना वा भवंति । किंव्ह्वयति । किंह्वयते । किंल्ह्लादयति । किंह्लादयति । किंय्ह्यः । किंह्यः । किंम्ह्मलयति । किंह्मलयति । किंन्ह्नुते । किंह्नुते

तोर्लि ॥१६२॥ तवर्गस्य लकारे परतः परस्वं स्यात् । विद्युल्लता । भवल्लता । भवांल्लंपटः ।

स्थास्तंभोः पूर्वस्योदः ॥१६३॥ उदःपरयोः स्थास्तंभोःसकारस्यः पूर्वस्य स्वं स्यात् । उत्थाता । उत्थातुं । उत्थातव्यं । उत्तंभिता । उत्तंभितुं । उत्तंभितव्यं । सादिग्रहणं किं ? उत्तिष्ठति ।

झयो हः ॥ १६४ ॥ झयः पदांतात्परस्य हकारस्य पूर्वस्वं भवति । सुवाग्घसति । वाग्हसति । अज्झलौ । अज्हलौ । षड्ढलानि । षड् हलानि । तद्धितं । तद्हितं । ककुब्भासः । ककुब्हासः । झय इति किं ? प्राङ् हसति ।

शश्छोऽमि ॥ १६५ ॥ झयःपरस्य शकारस्य छो भवत्यमि परतः । षट्छ्यामाः । षट्श्यामाः । वाक्छूरः वाक्शूरः । तच्छ्वेतं । तच्श्वेतं । ककुप्छ्वेतं । ककुप्श्वेतं । तच्छ्लोकः । तच्श्लोकः । अमीति किं ? त्वक् श्च्योतति ।

हलो यमां यमि खं ॥ १६६ ॥ हलः परेषां यमां यमि परे खं भवति । शय्या इत्यत्र द्वौ यकारौ द्वित्वजस्तृतीयः मध्यमस्य खं । आदित्याः - आदित्यः । अपत्यार्थे देवतार्थेऽपि ण्यत्ये च मध्यमस्य मध्यमयोर्वा खं । हल इति किं ? अन्नं । यम इति किं ? यज्ञः । यमीति किं ? शार्ङ्गी ।

झरो झरि स्वे ॥ १६७॥ हलः परस्य झरः स्वे झरि परत. खं भवति । भित्तां । प्रत्तां । प्रत्तं । महतः । मरुतः । झर इति किं ? प्राप्नोत् । स्व इति किं ? तप्ता ।

चतुष्टयं समंतभद्रस्य ॥ १६८ ॥ झयो ह इत्यादिसूत्रचतुष्टयं समंतभद्राचार्यमतेन भवति नान्येषामिति विकल्पः तथा चोदाहृतं ।

समाप्तः चतुर्थपादः ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकायां

वृत्तौ पञ्चमोऽध्यायः ।

श्रीसोमदेवयतिनिर्मितमादधाति या नौः प्रतीतगुणनंदितशब्दवार्धौ ।
सेयं सताममलचेतसि विस्फुरंती वृत्तिः सदानुतपदा परिवर्त्तिषीष्ट ॥ १ ॥

स्वस्ति श्रीकोल्हापुरदेशान्तर्वर्त्यार्जुरिकामहास्थानयुधिष्ठिरावतारमहामंडलेश्वरगंडरादित्यदेवनिर्मापितत्रिभुवनतिलकजिनालये श्रीमत्परमपरमेष्ठिश्रीनेमिनाथश्रीपादपद्माराधनबलेन वादीभवज्रांकुशश्रीविशालकीर्तिपंडितदेववैयावृत्यतः श्रीमच्छिलाहारकुलकमलमार्तंडतेजःपुंजराजाधिराजपरमेश्वरपरमभट्टारकपश्चिमचक्रवर्तिश्रीवीरभोजदेवविजयराज्ये शकवर्षैकसहस्रैकशतसप्तविंशति ११२७ तमक्रोधनसंवत्सरे स्वस्तिसमस्तानवद्यविद्याचक्रचक्रवर्तिश्रीपूज्यपादानुरक्तचेतसा श्रीमत्सोमदेवमुनीश्वरेण विरचितेयं शब्दार्णवचंद्रिका नाम वृत्तिरिति ।

इति श्रीपूज्यपादकृतजैनेन्द्रमहाव्याकरणं संपूर्णं ।

श्रीरस्तु । शुभं भवतु । संवत् १७१३ वर्षे कार्तिकशुदि-अष्टमी बुधे वाग्वरदेशे सागवाडानगरे श्रीआदीश्वरनवीनचैत्यालये राउलश्रीपुंजराजविजयराज्ये श्रीमूलसंघे सरस्वतीगच्छे बलात्कारगणे श्रीकुंदकुंदाचार्यान्वये भट्टारकश्रीप्रभाचन्द्रदेवास्तत्पट्टेभट्टारक-श्रीपद्मनंदिदेवास्तत्पट्टेभट्टारक-श्रीसकलकीर्तिदेवास्तत्पट्टेभट्टारक-श्रीभुवनकीर्तिदेवास्तत्पट्टेभट्टारक-श्रीज्ञानभूषणदेवास्तत्पट्टेभट्टारक-श्रीविजयकीर्तिदेवास्तत्पट्टेभट्टारक-श्रीशुभचन्द्रदेवास्तत्पट्टे भट्टारक-श्रीसुमतिकीर्तिदेवास्तत्पट्टेभट्टारक-श्रीगुणकीर्तिदेवास्तत्पदे भट्टारक-श्रीवादिभूषणदेवतास्तत्पट्टे भट्टारक-श्रीरामकीर्तिदेवास्तत्पट्टेभट्टारक-श्रीपद्मनंदिदेवास्तत्पट्टेभट्टारक-श्रीदेवेन्द्रकीर्तिदेवास्तदाम्नाये मुनिश्रीश्रुतिकीर्तिस्तच्छिष्यमुनिश्रीदेवकीर्तिस्तच्छिष्याचार्यश्रीकल्याणकीर्तिस्तच्छिष्यब्रह्मतेजपालेन स्वज्ञानावरणीयकर्मक्षयार्थं स्वपरपठनार्थं जैनेंद्रमहाव्याकरणं सवृत्तिकं लिखितं शोधितं च ॥ इत्यलम् ।